# उत्तररामचरितम्।

श्रीहरिदासदेवशर्म्मणा

१८४२ शकाब्दीय-



महामहोपाध्याय-महाकवि-भारताचार्य्य-श्रीहरिदाससिद्धान्तवा

अशेषगुणभूषितः

स्मरसमानशोभान्वितः,

बृहस्पतिमहामति

सततशान्तमूर्त्तिः कृती ।

सुशिक्षित-सुविक्रमो

वितरणे च कर्णोपमो

दयालुरिति गीयते

जनगणेन यो भारते ॥

खुलनाजिलाधीन-नकीपुरस्थ भूस्वामिनस्तस्य

श्रील श्रीयुक्त राय यतीन्द्रनाथचतुर्धुरीण-

महाशयस्य

कमलालयाकलित-करकमले

सादरं समर्पितमिदम् ।

चिरशुभाशीर्वादकेन

श्रीहरिदासदेवशर्म्मणा ।

# द्वितीयसंस्करणस्य विज्ञापनम्।

हन्त भोः! मदीयटीकासमेतमुत्तररामचरितं प्रथमं प्रकाशितमात्रमेव अनेकेनानेकधैव तदनुकृतम्, केनचित् टीकायाः केवलमक्षराणि परिवर्त्तयता निखिलभावपरिग्रहेण, केनापि अक्षरस्य भावस्य सञ्चिन्वता प्रायेण नाम्नोऽपि ग्रहणेन, अन्येन तु अन्तरान्तरा भावं प्रायेण चालङ्कारानासादयता संसाधितमनुकरणम्। तथापि तु सारग्राहिणः सहृदया ग्राहकाः परमानुग्रहेण नितरामाग्रहेण च कृत्रिममपहाय प्रकृतमेव समगृह्णन्त। इति खलु द्वितीयवारमिदं मुद्रितम्।

अत्र च कागज इत्यस्य प्रायेण पञ्चगुणमूल्यातिरेकेऽपि मुद्रणव्ययस्य च प्रायेण द्विगुणातिरेकेऽपि च दरिद्रग्राहकाणां सुविधाविधानाय मूलपुस्तकस्य एककपर्द्दकमूल्यमपि नातिरिक्तीकृतम्; किन्त्वस्मिन् संस्करणे वङ्गानुवादातिरेकात् तन्मूल्यमेव च अष्टानकमात्रमतिरिक्तीकृतम्।

तदमन्ये, ग्राहकाः खलु परमसन्तोषादेवेदमिदानीमाददीरन्निति।

१८४३ शकाब्दीय-
सौरभाद्रस्य सप्तदश-
दिवसीयम्।

विनीत-
श्रीहरिदासदेवशर्म्मणः।

## चतुर्थसंस्करणस्य विज्ञप्तिः।

परमकारुणिकस्य जगदीशितुः करुणया सञ्जातमिदम् उत्तररामचरितस्य चतुर्थं संस्करणम्। तत्र द्वितीयसंस्करणकाले कागज इत्यस्य प्रायेण दुर्लभतया महामूल्यतया च सत्यामपि प्रबलेच्छायां पूर्वानुरूपं तत् प्रदातुं नालमासम्। तत एव हि क्षारभूमौ शस्यमिव नितान्तनिकृष्टपत्रे ( कागजे ) मुद्रणमपि नितान्तनिकृष्टमेव जातम्। तथापि तु सारार्थिणा शुकपक्षिणेव गुणग्राहिणा ग्राहकवर्गेण नितरामप्रसन्नमनसा तदपि द्वितीयं संस्करणं निःशेषीकृतम्। समजनि च मे निन्दासहचरी प्रशंसा दुःखमिश्रितञ्च सुखम्। तेन चात्र चतुर्थे संस्करणे परमोत्कृष्टमेवार्पितं पत्रम् ( कागज ), मुद्रणमपि मुक्तावदेवोज्ज्वलीकृतम्, महीयसा चायासेन परिशोधनं सम्पादितम्। किं बहुना, अस्मिन् खलु संस्करणे सर्वथैवोत्कर्षविधाने विहितो गरीयानेव यत्नः। तन्मन्ये, चतुर्थमिदं संस्करणं सहृदयो ग्राहकगणः सुप्रसन्नमना एव गृह्णीयादिति। अस्मिन् खलु चतुर्थसंस्करणे व्ययातिबाहुल्यादेव मूल्यातिबाहुल्यमपि सञ्जातमिति वक्तव्यम्।

विनीत-

श्रीहरिदासदेवशर्म्मणः।

# उत्तररामचरितम्।

## प्रथमोऽङ्कः।

इदं कविभ्यः (१) पूर्वेभ्यो (२) नमोवाकं प्रशास्महे।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥१॥

---

नमो गणेशाय।

शारदा सकलशास्त्रपारदा शारदाम्बुजमुखी मतिं सताम्।
शारदी शशधरस्य कौमुदी मोदिनीं कुमुदिनीमिव क्रियात् ॥
कापि नाम भवभूतिभाषिता भारती गुरुगभीरभावभाक्।
भावमुग्धमनसां मनोऽनिशं मज्जयत्यत् नहर्षसागरे ॥
स्नपयति भवभूतेर्भारतीं भावरम्यां
विशदयति नवा मे वाक्यमोदृङ् न शङ्काम्।
शशिन इव कलङ्कः सुन्दरस्योच्चदोषः
न भवति रुचिहारी किन्तु वैचित्र्यकारी ॥

अथ तत्रभवान् अशेषदेशभाषाशास्त्रनिपुणः कविकुलशिरोमणिर्भवभूतिरुत्तररामचरितं नाम नाटकं चिकीर्षन् निर्विघ्नचिकीर्षितपरिसमाप्तिकामो मङ्गलश्लोकमाबबन्ध; सूत्रधारादयस्तु "रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजये"दिति शास्त्रात् सभ्यानामात्मनाश्च मङ्गलार्थं तमेव पठन्ति इदमिति। पूर्वेभ्यः प्राचीनेभ्यः कविभ्यः वाल्मीकि-व्यासादिभ्यः

---

(१) गुरुभ्य इति पाठान्तरम्। (२) सर्वेभ्य इति पाठभेदः।

प्राचुर्य्येण माधुर्य्यं गुणः। तदुक्तं साहित्यदर्पणे—

"चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्॥"

ओजःप्रसादावल्याधिकभावेन परिदृश्येते।

तदयं संग्रहश्लोकः—

धीरोदात्तोऽनुकूलः स परमपुरुषो नायको रामचन्द्रः
सीता मध्या स्वकीया भुवननिरुपमा नायिकादर्शभूता।
वैदर्भी नाम रीतिः, पुनरिह करुणो विप्रलम्भो रसोऽङ्गी
माधुर्य्याख्यो गुणश्च प्रथमकृतिरियं मालतीमाधवस्य॥

———o———

## अथ नाटकोक्तदेशानां नामानि।

| प्राचीननामानि | | | इदानीन्तननामानि |
|---|---|---|---|
| लङ्का | — | — | सिंहलः। |
| विदेहः | — | — | विहुतः। |
| ऋष्यशृङ्गाश्रमः | — | — | सिंहेश्वरः (भागलपुरे)। |
| मिथिला | — | — | मिथिला। |
| अयोध्या | — | — | अयोध्या। |
| पञ्चवटी | — | — | पञ्चवटी (नासिकनामकस्थानसन्निहिता)। |
| दण्डकारण्यं | — | — | नागपुरावधिनासिकपर्य्यन्तविस्तीर्णभूभागः। |
| जनस्थानं | — | — | दण्डकारण्यस्य अंशविशेषः। |
| वाल्मीकितपोवनं | | — | विठुरः ( ब्रह्मावर्त्तः )। |

———o———

"विनयार्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया ।"

"मध्या विचित्रसुरता प्ररूढ़स्मरयौवना ।

ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥" (क)

**सा पुनरनिर्वासितावस्थायां स्वाधीनभर्त्तृका, निर्वासिताव-स्थायान्तु प्रोषितभर्त्तृका ।** तत्र स्वाधीनभर्त्तृकालक्षणं यथा साहित्यदर्पणे—

"कान्तो रतिगुणाकृष्टो न जहाति तदन्तिकम् ।

विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्त्तृका ॥"

प्रोषितभर्त्तृकामाह रसमञ्जरी—

"देशान्तरगते भर्त्तरि सन्तापाकुला प्रोषितभर्त्तृका ।" (ख)

न च कथमेकस्या उक्तद्विविधत्वमिति वाच्यम्—

"क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते ।"

इति दर्पणकारेणैव साङ्कर्य्याङ्गीकारात् ।

**करुणविप्रलम्भशृङ्गारः प्रधानरसः ।** तथा च साहित्यदर्पणे—

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।

विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥"

"क्रव्यादैरङ्गलतिका नियतं विलुप्ता" इत्यभिदधती रामस्य सीतामरणनिश्चयात् तदर्थमेकान्तविमनायमानत्वात् सप्तमाङ्के सीतायाः पुनर्लभ्यत्वाच्च । वीररौद्रादयस्त्वङ्गरसा यथास्थानमनुसन्धेयाः ।

**बाहुल्येन वैदर्भी रीतिः ।** यथा तत्रैव—

"माधुर्य्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।

अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।"

केचित्तु पाञ्चालीं रीतिं वदन्ति । किन्त्वत्र स्तोकविस्तरतः सर्वा एव रीतयो लक्ष्यन्ते ।

---

(क) विचित्रसुरतेत्यादिकन्तु मध्याया एव भेदप्रदर्शकं पृथक् पृथक् लक्षणमिति बोध्यम् ।

(ख) देशान्तरगते भिन्नदेशस्थिते इत्यर्थः ।

# अथ स्वरूप-नायकनायिकादिनिरूपणम् ।

**प्रायेण नाटकलक्षणलक्षिततया रूपकेषु तदिदमुत्तररामचरितं नाम नाटकम् ।** तथा च सङ्गीतदामोदरे—

"प्रख्यातोत्तमनायकं रसमयं राजर्षिवंशोद्भवं
साङ्कं भङ्गजयान्वितं लयमयं तत्तत्पुराणाश्रयम् ।
भाषावैभवसुन्दरं प्रविलसन्नानाविलासं बल-
वृत्तिव्याप्तमशेषसन्धिसहितं सप्ताङ्कवन्नाटकम् ॥"

**अत्रेदमवधेयम्**—स्वाभिप्रायानुसारिणी किल कविकल्पना सर्वथैवेतिहासमननुसृत्याविर्भवितुमेव नार्हति, तेन च खलु सा इतिहाससामञ्जस्यमपेक्षते, अपेक्षते तु ऐतिहासिकनायकनायिकाभावम् । तथा च महाभारतेन सहाभिज्ञानशकुन्तलस्येव रामायणेन सममस्यापि प्रायेणोपाख्यानभागे वैषम्ये सत्यपि नायकनायिकयोरैतिहासिकतया न क्षतिरिति ।

**अत्र श्रीरामचन्द्रो दिव्यादिव्यः पूर्णलक्षणलक्षितधीरोदात्तप्रकृतिरनुकूलो नायकः ।** तथा च साहित्यदर्पणे—

"दिव्यादिव्यो यो दिव्योऽप्यात्मनि नराभिमानी । यथा—श्रीरामचन्द्रः ।"

"अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानी धीरोदात्तो दृढव्रतः कथितः ॥"

"अनुकूल एकनिरतः ।" इति च ।

**नायिका तु सीता स्वीया प्ररूढयौवनरूपमध्या । (क)** यथा तत्रैव—

(क) धीरादिभेदत्रयन्तु मानावस्थायामेव सम्भवतीति तद्भेदो न लक्षितः ।

# अथ नाट्योल्लिखितव्यक्तिगणः।

## पुरुषाः।

सूत्रधारः प्रस्तावसूचकः प्रधाननटः।

नटः पारिपार्श्विकापरनामा सूत्रधारसदृशगुणवान् कश्चित्।

रामः अयोध्याधिपतिः सूर्य्यवंशीयो राजा।

कञ्चुकी अन्तःपुरचरो विद्वान् वृद्धब्राह्मणः।

अष्टावक्रः मुनिविशेषः।

लक्ष्मणः सुमित्रापुत्रो रामस्य भ्राता।

दुर्म्मुखः कश्चिद्गुप्तचरः।

शम्बूकः शूद्रतापसः।

सौधातकिः अपूर्णशिक्षितः कश्चित् मुनिकुमारः।

भाण्डायनः पूर्णशिक्षितः कश्चित् मुनिकुमारः।

जनकः सीरध्वजो नाम मिथिलाधिपतिः।

कुशः } रामस्य पुत्रौ।
लवः }

चन्द्रकेतुः लक्ष्मणस्य पुत्रः।

सुमन्त्रः प्राचीनसारथिः।

विद्याधरः अपरिचितनामा देवयोनिविशेषः।

वाल्मीकिः कश्चित् महर्षिः।

मुनिबालकाः सैनिकपुरुष इत्यादयोऽपि।

## स्त्रियः।

सीता जनकनन्दिनी रामस्य पत्नी।

आत्रेयी ब्राह्मणवत् सकलसंस्कारैः संस्कृता ब्राह्मणजातीया काचित् स्त्री।

वासन्ती वनदेवता ( वनाधिकारिणी।)

तमसा } नद्यधिष्ठात्र् देवताद्वयम्।
मुरला }

कौशल्या रामस्य माता।

अरुन्धती वशिष्ठपत्नी।

विद्याधरी अज्ञातनाम्नी उक्तविद्याधरस्य पत्नी।

भागीरथी गङ्गादेवी।

पृथ्वी पृथिवीदेवी।

प्रतीहारी अन्तःपुरद्वाररक्षिका।

कालिदासत एव वीजमुपादाय ततोऽपि कल्पनाकुशलतामात्मनो दर्शयता फलकुसुमशोभितशालविटपिनं निर्म्माय चमत्कारिणो रचनाचातुरी परिदर्शिता।

सप्तमाङ्के "कार्य्यं निर्वहणेऽद्भुत"मित्यालङ्कारिकवाक्यमनुसृत्य यादृशं महाद्भुतचित्रमाविष्कृतं न खलु तादृशं कुत्रापि रूपकान्तरे परिलक्ष्यते।

अस्य हि प्रतिपदं प्रतिपात्रञ्च समादाय समालोचना प्रक्रान्ताऽकहिगुणायतनग्रन्थेनापि न शक्यते कर्त्तुम्। तथापि तु टीकायामिवास्माभिर्यथास्थानमनेकशः समालोचितमिति तस्यात्र पुनरावृत्तिरनावश्यकी।

किन्तु नाटकनिवहेषु अभिज्ञानशकुन्तलम् उत्तररामचरितञ्च सर्वथैव समुज्ज्वलरत्नम्, अनयोस्तु कतरच्चारुतरं तन्निर्वाचनमशक्यमेवास्माभिः। किं बहुना, यदि कश्चित् स्वयं कालिदासं भवभूतिञ्चैकत्र समुपवेश्य प्रष्टुमशच्यत्—"कविकुलशिरोमणियुगल! कतरत्तयोश्चारुतरं नाम? मन्ये, तदा तावपि सशिरःकण्डूयनमिदमवदिष्यतां यत्, एतन्निर्वाचनं विशेषविवेचनाधीनम्, अपि च समयसापेक्षम्, किञ्च नैपुण्येनेयम्, अथवा अशक्यमेवे"ति।

कवित्वे कालिदास एव गरीयान्, भवभूतिस्तु शास्त्रज्ञतायाम्, सदाचारे, धार्म्मिकतायामभिमाने च प्रधानतर इति।

———०———

सौधातक्योः परस्परालापो नितान्तकौतुकावहः। इन्तेदानीं परीक्षाकेशरिणी तं खलु छात्राणामनध्यायमहोत्सवललित-कुरङ्गं सम्पूर्णमेव कवलितवती। तथा लवदर्शनावधि शेषं यावत् बालस्वभावसुलभं चापल्यम्, वर्षीयसां नैसर्गिकं वात्सल्यं मुनिकुमाराणां ब्राह्मणोचितशान्तिप्रियता शैशव-सम्भवभीरुता च, लवस्य राजात्मजयोग्या मनस्विता तेजस्विता वीरता चातीवमनोहरा।

पञ्चमाङ्के कुमारयोः सविनयसदाचारश्च सौजन्य-शौर्य्य-दर्पभूयिष्ठं चरित्रं तदानीन्तनलोकाचारश्च भावयतो जनस्य इदानीं परप्रतारणापरिपूर्णे भारतवर्षे विस्मयेनानन्देन च महाशोकमेवावहति।

षष्ठाङ्के विष्कम्भके दुरूहशब्दसमूहानामेव सुदीर्घसमासोप-न्यासः सर्वथैवाभिनयप्रतिकूलतया नितान्तदुर्गमतया च दोषावह एव। अन्यत्रापि नाटकेऽस्मिन्नीदृशो दोषः समन्विष्य-माणः सुलभ एव। अभिज्ञानशकुन्तले राजा दुष्मन्तो नितान्त-शिशुं सर्वदमनमवलोक्य क्षणं स्वसन्तानतया निश्चिन्वानः क्षणमपि च परपुत्रतया सन्दिहानः बहु विकल्पयन् विशेषविषादं प्रकाशयन् विस्मयमादधाति कौतुकञ्चोपजनयति लोकानाम्। अत्र तु रामभद्रो महासमरसमर्थयोर्नितान्तशिक्षितयोः किशोर-वयसोरेव कुशलवयोः परिचये विविधकौशलमुद्भावयन्नपि तदसमर्थः संशयलालसासमाकुलो विलापविह्वलमानसो विस्मय-कौतुकयोः परां काष्ठामुपजनयति। तेन हि भवभूतिना

इत्यनेन कालिदासेन चित्रदर्शनकथामात्रमुपन्यस्तम्। अत्र तु भवभूतिना परेषामनुन्नेयभावेन तस्यैव छायामुपादाय विवृतभावेन पृथक् पृथग्विचित्रावलीप्रदर्शनाद्वा खल्वात्मनः परमचमत्कारिणी कल्पनाशक्तिराविष्कृतेति वदन्ति।

अपरे तु चित्रदर्शनेन मुनिपत्नीभिर्भूतपूर्वसद्भावस्मरणात् सीतायाः पञ्चवटीवनगमने स्वत एव वासना भविष्यति, तत् पूरणच्छलेन च निर्वासनं युक्तियुक्तमिति निर्वासनोपाख्यान-योजनायाः सुविधाविधानाय चित्रदर्शनमित्याहुः। अस्य सिद्धान्तस्य बहुवादिसिद्धतया टीकायामयमेवास्माभिः सन्निवेशितः।

द्वितीयाङ्कविष्कम्भक एव मनोहरः, शेषांशस्तु अनावश्यक-शैलवनादिवर्णनबहुलतया धैर्य्यमवसादयति।

आद्योपान्तः समस्त एव तृतीयाङ्कः परममनोरमः। अभिज्ञानशकुन्तले जागरितस्मृतेर्वियोगवेदनाविधुरीकृतस्य दुष्मन्तस्य विलापमाकर्ण्य अन्तरालवर्त्तिनी शकुन्तलासखी सानुमती ( मिश्रकेशी ) यदिदमाह—"सहि! दूरे वट्टसि एआइणो ज्जेव कसणुहाइं अणुभवेमि" तदीयभावमादाय भवभूतिः खल्वस्मिन्नङ्के प्रकृतसीतामितादृशीं विधाय स्वनिमित्तं रामस्य विलापं श्रावयन् बलवदाकुलत्वं प्रदर्शयन् आत्मनि पूर्ववदक्षुण्णप्रगाढ़प्रणयास्तित्वञ्चानुभावयन् कालिदासादपि कल्पनायामतीवात्मनैपुण्यमदर्शयत्।

चतुर्थाङ्के विष्कम्भके अनध्यायलब्धावसरयोः भाण्डायन-

सर्वदैव परुषेण भवितव्यमित्यस्ति वेदोपदेशः, न वा कर्त्तव्यहानिमकुर्वाणं शोकसमाकुलतामात्रमेव पुरुषाणां वीरत्वं निहन्तीति केनापि मन्यते। दृश्यते च रामायणेऽपि शेलनिपतित-लक्ष्मणस्य शोकेन समाकुलता रामस्य। (क)

चित्रदर्शनमत्र प्रयोजनविशेषप्रतिपादनाय प्रयुक्तम्। तथा च सीतारामयोस्तत्तदविकलचित्रदर्शनेन परमसद्भावस्य सर्वथैवाकृत्रिमताप्रत्ययात् परस्परप्रणयस्तदानीं सहस्रधा वृद्धिमुपगतः। परक्षण एव समुपजायमानो निर्वासनकृतः सीतारामयोश्चिराय वियोगः शरच्चन्द्रचन्द्रिकामतोत्य निविड़ान्धकारसमागम इव, परमरमणीयनगरमतिक्रम्य दारुणारण्यप्रवेश इव शीतलतममलयमारुतमपहाय निबद्धनिदाघताप इव च हृदयमर्म्मविदारणो दुःसहतम एवासीत्। यदि पुनश्चित्रदर्शनमेव नाकरिष्यत् तदेदृशो प्रकृतरसपोषकता नाभविष्यदेव।

केचित्तु कालिदासतोऽपि निजकल्पनानैपुण्यप्रदर्शनाय भवभूतिना चित्रदर्शनमुपनिबद्धम्। तथा च—

"तयोर्यथाप्रार्थितमिन्द्रियार्थान्
आसेदुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु
सञ्चिन्त्यमानानि सुखान्यभूवन्॥" (ख)

(क) यच्चोक्तं वङ्गीयो बाबुरिवेति, तदप्यसमीचीनमेव वङ्गीयबाबूनामिदानों प्रायेण धैर्य्य-गाम्भीर्य्य-साहसोत्साहदर्शनात्।

(ख) रघुवंशे चतुर्द्दशसर्गे २५ श्लोकः।

अत्र केचिदालोचयन्ति ; रामायणरामो निर्वासितसीतोऽपि, सन् पूर्ववदेव धीरस्थिरप्रकृतिर्महावीरस्वभाव एव दृश्यते, उत्तररामचरितरामस्तु सीतां निर्वासयन् वङ्गीयो 'बाबु'रिव विषमवियोगविधुरः परमशोकसमाकुलः स्वयमपि रुदन् स्वदशा-प्रदर्शनेन परानपि रोदयन् नितान्तदुर्बलोचितकोमलहृदयः कापुरुष इव परिलक्ष्यत इति।

तदिमामुक्तिमसीषामसमीचीनामेव मन्यामहे। (तथा च इतिहासप्रणेता वाल्मीकिः, भवभूतिस्तु नाटकनिर्म्माता। इतिहासकर्त्ता यथायथवस्तुस्वरूपप्रकाशमात्रप्रयोजनतया प्रदीप इव महास्वाधीनः, नाटकनिर्म्माता तु पर-मनोरञ्जनमात्र-प्रधानोद्देश्यतया गायक इव परमपराधीनः, वाल्मीकेः श्रोतार-स्तदानीन्तनाः समुन्नतिचरमसीमासमारूढ़भारतजन्मानो महा-वीरधीरप्रकृतयो मनस्विमानवाः, भवभूतेः श्रोतारस्तु (द्रष्टारस्तु) अवनतिशेषसीमासन्निहितप्रायभारतवासिनः पुत्रकलत्रादि-लालनपरायणा बल्लवदलसकोमलमानसा मानुषाः। तेन च रामायणरामचरित्रसमाननिजनाटकीयरामचरित्रचित्रणे तादृश-श्रोतृवर्गस्य चित्तवृत्तेरननुकूलतया समनुरञ्जनाभावात् श्रवण-वैमुख्येन शिक्षाविधानमसम्भवमेव, परन्तु कविलभ्ययशसोऽप्य-लाभेन भवभूतेरुद्देश्यसिद्धिरेव न स्यात्। अतः कोमलराम-चरित्रचित्रणमन्तरेण भवभूतिः किं नाम कुर्य्यात्। तेन च रामायणरामेण सह उत्तररामचरितरामस्य तुलनाकरणकामनैव नोपपद्यते। अथवा प्राणप्रतिमप्रियतमायाश्चिरविच्छेदेऽपि शोकसंवेगाभावे महती परुषतैव प्रतीयते, न च वीरपुरुषेण

## अथ संक्षिप्तसमालोचना।

अल्पया नहि जनो निजशक्त्या
शक्तिमान् गणयितुं गुणराशिम्।
अन्नपुञ्जमिव बालविड़ाल:
किन्तु दूषयति तं मुखदानात्॥

—विराजसरोजिनी।

इतिवदस्तु वा मादृशां समालोचनया दूषितमेव नाटकरत्नमुत्तररामचरितम्, तथापि ममेयं प्रवृत्तिर्निवर्त्तयितुमशक्यैव सञ्जाता। किन्तु खलु नवनलिनं मलिनं भविततीति मत्वा मधुकरस्तदुपरि परिपतितुं निवर्त्तते नाम? अथवा स्वेनैव गुणगरिम्णा निरतिशयचारुतरस्य किलोत्तररामचरितस्य स्वरूपबाधनपरायणायां मादृशानां समालोचनायां सत्यपि सहृदयानामलीकालापकोलाहलसम्भवे न खलु मे भीतिकातरं मन:, न खलु शरदि विकाशमाने पौर्णमासीचन्द्रमसि खद्योत: प्रद्योतितुं लज्जते नाम।

इह खलु (कवीनां काव्यनिर्म्माणमुख्यप्रयोजनं नाम परमचमत्कारिणा नायकनायिकाचरित्रचित्रणेन सरसभावेन साधारणानां शिक्षाविधानमेव। तच्च चरित्रचित्रमत्र यथा साङ्गतया निष्पन्नम्, अन्यत्र कुत्रापि तादृशं नोपलभ्यते।

अत्र हि महाकविना परमादर्शनायकीकृतो रामचन्द्र:, पतिव्रताधर्म्मे रमणीशिरोमणीकृता सीता, प्रवर्त्तितञ्च काव्यजगति निजसाम्राज्यम्।

तत्रान्तरे वीरधुरीणः काश्मीरेश्वरो ललितादित्यो नाम राजा यशोवर्म्मणा सह केनापि निमित्तेन महासमरे प्रवृत्तः। विजितश्च तस्मिन् यशोवर्म्मा। विजयमानश्च ललितादित्यः स्वसभायां भवभूतिः सङ्कल्मातपदार्थगरूपेणैव पणेन सन्धिबन्धनं विधाय विरराम; न पुनरिदानीन्तन इव कोटिशो धनराशिं क्षतिमापूरयितुमङ्गीचकार।

हन्त भोः! "ते हि नो दिवसा गताः" भारतवर्षस्य। यत्र खल्वीदृश परगुणमुग्धमानसो विजेता, तादृशश्च कविकुलरत्नं युगपदेव जगदुच्चासने निवेशयामास भारतवर्षम्। इदानीन्तनीं दशामनुभवन्तः तच्च समयं चिन्तयन्तः किं नाम स्वतो विगलन्तीमश्रुधारां संवरीतुमर्हन्ति सहृदयाः?।

ललितादित्यः किल ६८३ खृष्टाब्दादारभ्य ७२८ खृष्टाब्द-पर्य्यन्तं काश्मीरराज्यं परिपालयामास (१)। तेन सह सम्पादित-समरो यशोवर्म्मदेवोऽपि तस्मिन् समय एव कान्यकुब्जप्रदेशं शशासेति यथार्था खलु सम्भावना; अतएव तदीयसभासदा-मन्यतमो महाकविर्भवभूतिरपि यशोवर्म्मणो राजत्वसमय-प्रथमभागे प्रादुर्बभूवेति समीचीनमवधारणम्।

अतः सिद्धं खृष्टीयसप्तमशताब्दीशेषभाग एव भवभूते-राविर्भावकाल इति।

---

(१) जेनारेल क्यानिंहामनिर्द्दिष्टशकानुसारादयं निर्द्देशः। किन्तु यावदतः समीचीनं प्रमाणान्तरं नोपलभ्यते तावदिदमेव विश्वसनीयम्।

यदा च भवभूतेरसाधारणधीशक्ति-विद्या-ब्राह्मण्य-कवित्व-प्रभृतिसद्‌गुणजातजनितं यशो दिशि विदिशि च क्रमशो विस्तीर्णमासीत्, तदा नितान्तविद्योत्साही परमपरगुणग्राही कान्यकुब्जेश्वरो यशोवर्म्मदेवः स्वसभायां समादरसमानीतेन भवभूतिना सभासदः पदमलञ्चकार (१)।

तत्र च भवभूतेरसाधारणी परमचमत्कारिणी कवित्वशक्तिः वसुधाधिपतेरासौधशिखरात् दीनकुटीरपर्य्यन्तं सहृदयसमुद्‌गीता विस्मयमादधाति स्म लोकानाम्।

---

टीकाकृत् अनन्तपण्डितश्च मन्यते स्म; यत् अस्य कवेः 'श्रीकण्ठ' इति पितृकृतं नाम। परन्तु—

"साऽम्बा पुनातु भवभूतिपवित्रमूर्त्तिः।"

"तपस्वी कां गतोऽवस्थामिति स्मेराननाविव।

गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ॥"

इत्थं श्लोकनिर्म्माणात् भवभूतिरिति नाम समभवदिति। अपरे तु श्रीकण्ठ इति नाम, भवभूतिरित्युपाधिरिति वदन्ति। तदुभयमप्यलीकमिव प्रतिभाति, "श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम" इति कविना स्वयमभिहिते "काव्यतीर्थपदलाञ्छनो रामदासो नाम" इत्यादाविव श्रीकण्ठपदस्योपाधित्वेन प्रतीतेः सार्वजनीनत्वात्। श्रीकण्ठपदस्य व्युत्पत्तिस्तु टीकायां दर्शिता।

(१) काश्मीरराजतरङ्गिण्यामिदमितिवृत्तं दृश्यते। तत्र वृत्तान्तान्तरमपि परिलक्ष्यते; वाक्‌पतिराजो नाम यशोवर्म्मदेवस्यापरः कश्चन सभासद आसीदिति। सम्भाव्यते च तत्, येन खल्वसौ वाक्‌पतिराजः यशोवर्म्मदेवस्य विक्रमातिशयं गौड़विजयञ्चोपजीव्य "गौड़वहो" नामकं प्राकृतकाव्यं विरचयामास। तत्र चात्मानं भवभूतेः शिष्यतया परिचाययन् येन प्राकृतेन भवभूतिं प्रशशंस; तस्यायं संस्कृतानुवादः—

"भवभूतिजलनिधिगतकाव्यामृतरसकणा इव स्फुरन्ति।

यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु॥"

(समन्तादवलोक्य) (ङ)। भोः! भोः! यदि तावदत्रभवतः पौलस्त्यकुलधूमकेतोर्महाराजरामस्यायमभिषेकसमयो रात्रिन्दिवमसंहृतानन्दनान्दीकः, तत् किमिति (१) विश्रान्तचारणानि चत्वरस्थानानि? (च)

(ङ) समन्तादिति। समन्तात् सर्व्वासु दिक्षु। सर्व्वदिग्दर्शनं चत्वरादौ नटाः सन्ति न वेति ज्ञानार्थम्।

(च) भो इति। भोः भोः इति नटानां सम्बोधनम्। अत्रभवतः पूज्यस्य, पौलस्त्यकुलधूमकेतोः पुलस्त्यस्यापत्यं पौत्र इति पौलस्त्यो रावणः पुलस्त्यनामा सप्तर्षीणामन्यतमः तत्पुत्रो विश्रवा तत्पुत्रो रावण इति रामायणं द्रष्टव्यम्। तत्कुलस्य रावणवंशस्य धूमकेतुः धूमकेतुरिव विनाशहेतुस्तस्य। धूमकेतुस्तु अशुभसूचको ग्रहविशेषः। तथा च समयसंहितायाम्— "ह्रस्वतनुः प्रसन्नः केतुर्लोकस्याभावाय न शुभो विपरीतो विशेषतः शक्रचापसङ्काशः द्विचिचतुःशृङ्गो वा दक्षिणसंस्थश्च मृत्युकरः।" रात्रिन्दिवं सर्व्वदा असंहृताः अविरताः आनन्दनान्द्यः आमोदजनकवाक्यानि यस्मिन् स तथोक्तः अभिषेकसमयो राज्याभिषेककालो वर्त्तत इति शेषः। तत् तदा किमिति कथं चत्वरस्थानानि अङ्गनप्रदेशाः विश्रान्तचारणानि विश्रान्ताः स्वस्वकर्त्तव्यविरताः चारणाः नटा येषु तानि वर्त्तन्त इति शेषः। अभिषेकसमये रङ्गप्राङ्गणे नटानां नाट्यादीनां सर्व्वदैव अनुष्ठानमुचितमिति भावः।

रात्रिश्च दिवा चेति द्वन्द्वे "अचतुरनडुहादयश्चे"ति निपातनात् रात्रिन्दिवमिति रूपम्। "अभिविधौ कालाध्वमाना"दिति द्वितीया।

"भरता इत्यपि नटाश्चारणाश्च कुशीलवाः।" "अङ्गनं चत्वराजिरे।" इति चामरः।

(ঙ—চ) প্রয়োজনবশতঃ এই আমি অযোধ্যানিবাসী ও তৎকালবর্ত্তী হইলাম। (সকল দিকে দৃষ্টিপাত করিয়া) ওহে! ওহে! জগদ্বন্দনীয় এবং রাবণবংশের ধূমকেতুস্বরূপ মহারাজ রামচন্দ্রের ইহাই যদি অভিষেকের সময় হইয়া থাকে এবং দিবারাত্র আমোদালাপের বিরাম

(१) किमद्य, किमिदानीमिति भिन्नौ पाठौ।

(प्रविश्य) नटः। भाव! प्रेषिता हि इतः स्वगृहात् महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गराक्षसाः सभाजनोपस्थायिनो नानादिगन्तागता (१) ब्रह्मर्षयो राजर्षयश्च, यदाराधनाय एतावतो (२) दिवसानुत्सव आसीत् (क)।

(क) प्रविश्येति। रङ्गभूमाविति शेषः। नटः अपरः कश्चन अभिनेता; प्रविश्य वदतीति शेषः। एवमन्यत्रापि ज्ञेयम्। भावयति उत्पादयति अभिनयमिति भावः। नटान्तरप्रयोज्यः सूत्रधारवाचकः शब्दोऽयम्। तथा च साहित्यदर्पणः—

"सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः।

सूत्रधारो मारिषे"ति।

हि यतः महाराजेन रामेण इतः स्वगृहात् अयोध्यानगरात् लङ्कासमरसुहृदः लङ्कासमरं सीतोद्धारार्थं लङ्कायुद्धं सुहृदः साहाय्यकरणेन मित्राणि ते, महात्मानः महाबलवन्तः प्लवङ्गराक्षसाः प्लवेन गच्छन्तीति प्लवङ्गाः सुग्रीवहनुमदादयो वानराः विभीषणादयो राक्षसाः ते। सभाजनाय नवराज्ये अभिषिच्यमानस्य रामस्य प्रीतिविधानाय उपतिष्ठन्ति निकटवर्त्तिनो भवन्तीति सभाजनोपस्थायिनः, नानादिगन्तेभ्यः सर्व्वाभ्यो दिग्भ्यः आगतास्ते। ब्रह्माणो ब्राह्मणाश्च ते ऋषयश्चेति ब्रह्मर्षयः वशिष्ठादयः राजानः क्षत्रियाश्च ते ऋषयश्चेति राजर्षयः जनकादयः प्रेषिताः स्वस्वभवनं प्रति विसृष्टाः। तेषां ब्रह्मर्षीणां राजर्षीणाञ्च आराधनाय सन्तोषकरणाय एतावतः इयतः दिवसान् व्याप्य उत्सव आसीत्। अत एवेदानीं विश्रान्तचारणानि चत्वरस्थानानीति भावः।

"अन्तं स्वरूपे नाशे वा" इत्यमरः।

---

না হইতে থাকে; তবে রঙ্গালয়ের প্রাঙ্গণে নটগণ বিরত রহিয়াছেন কেন?।

(ছ) নট। (প্রবেশ করিয়া) শিক্ষকমহাশয়! তাহার কারণ এই যে, মহারাজ লঙ্কাযুদ্ধে সাহায্যকারী মহাত্মা বানরগণ ও রাক্ষসগণকে

(१) नानादिगन्तपावना इति पाठान्तरम्। (२) इयत इति पाठभेदः।

अन्यच्च—(ज)

वशिष्ठाधिष्ठिता देव्यो गता राघवमातरः (१) ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥३॥

सूत्र । वैदेशिकोऽस्मीति पृच्छामि, कः पुनरसौ जामाता ? (झ)

(ज) अन्यच्चेति । अन्यच्च अपरञ्च । चत्वरस्थानानां विश्रान्तचारणतायाम् अपरञ्च कारणमस्तीत्यर्थः ।

किन्तदित्याह वशिष्ठेति । वशिष्ठेन महर्षिणा अधिष्ठिताः रक्षणीयत्वेनावलम्बिताः देव्यः राघवाणां रामादीनां मातरः कौशल्यादयः अरुन्धतीं तदाख्यां वशिष्ठपत्नीं पुरस्कृत्य अग्रे कृत्वा यज्ञे द्वादशवर्षसम्पाद्ये सत्रे जामातुः ऋष्यशृङ्गस्य आश्रमं गताः । अतएव साम्प्रतमयोध्यानगरी गौरवितजनशून्यप्रायेति विश्रान्तचारणानि चत्वरस्थानानीति भावः ।

अत्र प्रथमचरणे ष्ठकारयोः सकृत्साम्यात् छेकानुप्रासोऽलङ्कारः ॥३॥

(झ) सूत्रेति । अस्मि अहं वैदेशिकः अयोध्याभिन्नदेशवासी इति हेतोः पृच्छामि असौ त्वया उक्तो जामाता कः । अस्मीति अहमित्यर्थकमव्ययम् । पुनःशब्दो वाक्यालङ्कारे । अभिनयरूपप्रयोजनवशात् पूर्व्वमायोध्यिकः संवृत्त इत्युक्तम्, अत्र तु वास्तविकमुक्तमिति न विरोधः ।

এবং আপ্যায়িত করিবার জন্য উপস্থিত নানা দিক্ হইতে আগত ব্রহ্মর্ষিগণ ও রাজর্ষিগণকে এই অযোধ্যানগর হইতে পাঠাইয়া দিয়াছেন, যাঁহাদের প্রীতিবিধানের নিমিত্ত এতদিন যাবৎ উৎসব হইতেছিল ।

(জ) আরও কারণ আছে—

রামচন্দ্রপ্রভৃতির মাতা কৌশল্যাদেবীপ্রভৃতি, অরুন্ধতীদেবীকে অগ্রে অগ্রে করিয়া, বশিষ্ঠের সঙ্গে যজ্ঞ উপলক্ষ্যে, জামাতার আশ্রমে গিয়াছেন ॥৩॥

(१) रामस्य मातरः इति पाठान्तरम् ।

नटः। कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।
अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ ॥४॥
विभाण्डकसुतस्तामृष्यशृङ्ग उपयेमे (ञ)। तेन च साम्प्रतं

कन्यामिति। दशरथो राजा शान्तां नाम कन्यां व्यजीजनत उत्पादितवान्। लोमपादाय तदाख्याय राज्ञे अपत्यकृतिकां कृत्रिमकन्यारूपां यां ददौ।

यः समानवर्णः पुत्रः, मातापित्रोः पारलौकिकश्राद्धादिकरणं गुणः तदकरणं दोष इति जानाति, मातापित्रोः शुश्रूषाञ्च करोति; गृहीतः स पुत्रः कृत्रिमपुत्रो भवति। यथा मनुः—

"सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः॥"

तदेतत् कृत्रिमपुत्रवत् कृत्रिमकन्यापि शास्त्रीयेति बोध्यम। तथा च रामायणम्—

"अपत्यस्त्वङ्गराजो वै लोमपाद इति श्रुतः।
स राजानं दशरथं प्रार्थयिष्यति भूमिपः॥
अनपत्योऽस्मि मे कन्यां सखे। दातुं त्वमर्हसि।
शान्तां शान्तेन मनसा कन्यार्थं वरवर्णिनीम्॥
श्रुत्वा दशरथो वाक्यं प्रकृत्या करुणात्मकः।
दास्यते ता तदा कन्यां स राजा विगतज्वरः।
स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मना॥" ॥४॥

(ञ) विमेति। विभाण्डकस्य तदाख्यस्य मुनेः सुतः पुत्रः ऋष्यशृङ्गस्तां कन्याम् उपयेमे उदुवाह परिणीतवान्। यथा च रामायणम्—

---

(ঝ) সূত্রধার। আমি বিদেশী বলিয়া জিজ্ঞাসা করিতেছি, ঐ জামাতা আবার কে?

নট। রাজা দশরথ, শান্তানামে একটী কন্যা উৎপাদন করিয়াছিলেন; যাহাকে কৃত্রিমকন্যারূপে রাজা লোমপাদকে দিয়াছিলেন ॥৪॥

(नान्द्यन्ते) सूत्रधारः (क)। अलमतिविस्तरेण (ख)। अद्य

(क) नान्द्यन्त इति। नन्दयति स्तवेन देवादीन् आशीर्व्वादेन सभ्यान् नमस्कारेण वा आत्मानम् आनन्दयति या वाक् सा नान्दी, टुनन्दिनन्दधातोः कर्त्तरि पचादित्वादच् ततश्च "प्रज्ञादिभ्यश्चे"ति स्वार्थे अण्, ततः स्त्रियामीप्रत्ययः। तथा चोक्तं नाट्यप्रदीपे—

"नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः।
यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी॥"

"नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्त्तिता" इत्यपि। सा चेयं नान्दी सुप्तिङन्तरूपद्वादशपदा। तथा च 'प्रशास्महे' इति सोपसर्गमेकं तिङन्तं पदं विन्देम इति चापरम्, सुबन्तानि च दश इति मिलित्वा द्वादशपदानि। तथा चाह भरतः पञ्चमाध्याये—

"सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः।
नान्दीं पदैर्द्वादशभिरष्टाभिर्व्वाप्यलङ्कृताम्॥"

पदमत्र विविधं श्लोकपादरूपं सुप्तिङन्तरूपं श्लोकान्तर्गतवाक्यरूपञ्च। तथा च नाट्यप्रदीपे—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥"

तथा च वेणीसंहारे श्लोकत्रयेण श्लोकपादरूपद्वादशपदा नान्दी, इयं सुप्तिङन्तरूपद्वादशपदा अभिज्ञानशकुन्तले च श्लोकान्तर्गतवाक्यरूपाष्टपदेति तत्र तत्रानुसन्धेयम्। पदञ्चात्र वाचकमभिप्रेतम्, तेन 'प्र'शब्दस्य उपसर्गत्वेन वाचकत्वाभावात् न पदत्वं ततश्च नाधिकद्वादशपदत्वमिति बोध्यम्।

एतादृश्या नान्द्या अन्ते पाठावसाने सूत्रं प्राथमिकसूचनं धारयतीति सूत्रधारः

প্রাচীন কবি বাল্মীকিপ্রভৃতিকে নমস্কার করিয়া, আমি ইহা প্রার্থনা করি যে, পরমাত্মার অংশস্বরূপা ও অমৃতের ন্যায় সুরসা বাগ্‌দেবীকে যেন লাভ করিতে পারি ॥১॥

खलु भगवतः कालप्रियनाथस्य यात्रायामार्य्यमिश्रान् विज्ञापयामि, एवमत्रभवन्तो विदांकुर्वन्तु। अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम (१) (ग)।

प्रधाननटः। वदतीत्यध्याहृतं व्यया क्रियया अन्वयः। एवमन्यत्रापि बोध्यम्। सूत्रधारलक्षणं यथा सङ्गीतसर्व्वस्वे—

"वर्णनीयतया सूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥"

(ख) अलमिति। अतिविस्तरेण सुबहुलेन नान्दीप्रयोगेणेति शेषः, अलं निष्प्रयोजनो बहुतरनान्दीप्रयोग इत्यर्थः। एतेनैव मङ्गलार्थनिर्व्वाहादिति भावः। अष्टपदनान्दीप्रयोगेणैव मङ्गलाचरणनिर्व्वाहे द्वादशपदनान्दीप्रयोगादेव किञ्चिद्विस्तरो जातः, अतएव तदधिकनान्दीप्रयोगो निष्प्रयोजन एवेति निष्कर्षः।

(ग) अद्येति। भगवतः अणिमाद्यैश्वर्य्यशालिनः कालप्रियनाथस्य उज्जयिनीनगरस्थितस्य महाकालमूर्त्तेः शिवस्य, यात्रायां वार्षिकमहोत्सवे आर्य्यमिश्रान् आर्य्येषु वैदिकविधिनिषेधाधीनाचारवत्सु मिश्राः श्रेष्ठास्तान्, अथवा आर्य्यमिश्रान् सभ्यश्रेष्ठान्, विज्ञापयामि निवेदयामि। किमित्याह अत्रभवन्तः पूज्याः, एवं वक्ष्यमाणं विदांकुर्व्वन्तु अवगच्छन्तु। तत्रभवान् विद्यया ब्राह्मण्येन च पूज्यः, काश्यपः काश्यपगोत्रः, श्रीकण्ठपदलाञ्छनः श्रीकण्ठोपाधिकः भवभूतिर्नाम भवभूतिरिति नाम्ना प्रसिद्धः, कश्चिदिति शेषः।

अत्र खलुशब्दद्वयं वाक्यालङ्कारे। "खलु स्याद्वाक्यभूषाया"मिति मेदिनी।

भगः अणिमाद्यष्टैश्वर्य्यमस्यास्तीति भगवान्, ज्ञानवैराग्यवान् वा। तदुक्तम्—"ऐश्वर्य्यस्य च वीर्य्यस्य श्रियो यशस एव च। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥" अणिमादयश्च—"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायिता॥" एषां प्रकारास्तु न्यायकुसुमाञ्जल्यादौ ज्ञेयाः।

कलयति प्रलयकाले सर्व्वभूतानि संहरतीति कालो रुद्रः। तथा च तिथितत्त्वे

(१) जातूकर्णीपुत्र इति पाठान्तरं कुत्रचिदधिकम्।

विष्णुधर्म्मोत्तरम् —"अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः। कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः॥" शिवरूपेण मङ्गलकरणात् सर्व्वान् प्रीणातीति प्रियः। यथा तत्त्वप्रकाशे—"मुक्तात्मानोऽपि शिवाः किन्त्वेते तत्प्रसादतो मुक्ताः।" नाथः सर्वेश्वरः "ईशानो भूतभव्यस्य" इति श्रुतेः। कालप्रियनाथ इति त्रिपदकर्म्मधारयः प्रथमे द्विपद-कर्म्मधारयं कृत्वा कर्म्मधारयान्तरं वा। उज्जयिन्यां स्थापितायाः शिवमूर्त्तेः कालप्रियनाथः महाकालश्च इति नामद्वयम्। मूर्त्तिस्तु—"महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्। बिभ्रतं दण्डखट्वाङ्गौ दंष्ट्राभीममुखं शिशुम्॥" इत्याद्युक्तरूपा। कथासरित्सागरे च—"यस्यां वसति विश्वेशो महाकालवपुः स्वयम्। शिथिलीकृतकैलासनिवासव्यसनो हरः॥" महाकालमूर्त्तेः प्रतिष्ठास्थानमपि महाकालशब्देनोच्यते। तथा च मेघदूते—"अप्यन्यस्मिन् जलधर! महाकालमासाद्य काले" इत्यादि।

"यात्रोत्सवे गतो व्रतो"विति हेमचन्द्रः।

वैदिकविधिनिषेधाधीनाचारा आर्य्याः। तथा च पठन्ति—

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः॥" "स्यादुत्तरपदे मिश्रस्त्रिषु श्रेष्ठार्थवाचक" इति च।

विदांकुर्व्वन्तु इति "विद आम् कृञनुप्रयोगः वा" इति वेत्तेराम् कृञोऽनुप्रयोगश्च।

कश्यपस्यापत्यं पौत्रादिरिति काश्यपः काश्यपगोत्रः। गोत्रन्तु "वंशपरम्पराप्रसिद्ध-मादिपुरुषब्राह्मणरूपं गोत्र"मिति उदाहृतत्त्वे स्मार्त्तोक्तं ज्ञेयम्।

श्रीः सरस्वती कण्ठे यस्य सः, श्रीकण्ठपदं श्रीकण्ठेत्यानुपूर्वीकः शब्दः लाञ्छनं चिह्नम् उपाधिर्यस्य सः। तथा च व्याड़िः—

"लक्ष्मी-सरस्वती-धी त्रिवर्गसम्पद्विभूतिशोभासु।
उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता॥"

भवस्य शिवस्येव भूतिर्ज्ञानसम्पद्यस्य स भवभूतिः। "भूतिर्भस्मनि सम्पदि" इत्यमरः। केचित्तु श्रीकण्ठेति नाम भवभूतिरित्युपाधिरित्याचक्षते, तत्तु न समीचीनम्, महावीर-चरितोत्तररामचरितमालतीमाधवेषु एतत्कविना स्वयमेव "श्रीकण्ठपदलाञ्छनो भवभूति-र्नाम" इत्येकविधस्यैव स्पष्टमभिधानात् अन्यत्र तु तादृशप्रमाणाभावात्।

यं ब्राह्मणमियं देवी वागवश्येवानुवर्त्तते।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते (१) ॥२॥
एषोऽहं कार्य्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः (घ)।

यमित्यादि। इयं प्रसिद्धा वाग्देवी वश्येव वशतापन्नेव यं ब्राह्मणम् अनुवर्त्तते आज्ञाकारिणी भवति अनायासेनैव इच्छानुरूपभावाभिव्यञ्जिका भवतीत्यर्थः। तेन भवभूतिना प्रणीतं रचितम् उत्तरं चरमं रामचरितं प्रयोक्ष्यते अभिनेष्यते अस्माभिरिति शेषः। रावणवधसीतोद्धारपर्य्यन्तं रामस्य पूर्व्वचरितं महावीरचरिते निबद्धम्, अत्र तु राज्याभिषेकादारभ्य रामस्य शेषचरितं निबद्धमित्यर्थः।

अत्र भावाभिमानिनी वाच्या गुणोत्प्रेक्षालङ्कारः। तेन च वाग्देवी भार्य्येव वश्या इत्युपमा व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥२॥

(घ) एष इति। एष सूत्रधारोऽहं कार्य्यवशात् अभिनयानुरोधात् आयोध्यिकः अन्यस्थाननिवासी सन्नपि अयोध्यानिवासी तथा कलियुगे वर्त्तमानोऽपि तदानीन्तनः त्रेतायुगीयरामसमसामयिकः संवृत्तः जातोऽस्मीति शेषः। अभिनयो हि अवस्थानुकरणं तत्र अनुकार्य्यसमीपवर्त्तिनः तत्समानकालीनस्य च यथा सर्वाङ्गशुद्धं भवितुमर्हति न तथा दूरवर्त्तिनः कालान्तरस्थितस्य वा इति भावः। सहाभिनयनैपुण्याते सूत्रधारस्य आयोध्यिकत्वं तदानीन्तनत्वञ्च सभ्यैर्विज्ञायतामित्यभिप्रायः।

(ক—গ) নান্দীপাঠের পর সূত্রধার। অতি বিস্তৃত নান্দী প্রয়োগে প্রয়োজন নাই। অদ্য ভগবান কালপ্রিয়নাথের বার্ষিক মহোৎসবে সভ্যমহোদয়দিগকে আমি ইহা জানাইতেছি যে, আপনারা এইরূপ অবগত হউন, কাশ্যপগোত্র শ্রীকণ্ঠ-উপাধিক ভবভূতিনামে মাননীয় একজন কবি আছেন।

এই বাগ্‌দেবী বশতাপন্ন হইয়াই যেন, যে ব্রাহ্মণের আনুগত্য করেন, তাঁহার প্রণীত উত্তররামচরিত আমরা অভিনয় করিব ॥২॥

(१) ब्राह्मणमित्यत्र ब्रह्माणं, प्रयोक्ष्यत इत्यत्र प्रयुज्यत इति च पाठान्तरम्।

द्वादशवार्षिकं सत्रमारब्धम, तदनुरोधात कठोरगर्भामपि वधूं जानकीं विमुच्य गुरुजनस्तत्र गत इति (ट)।

सूत्र। तत् किमनेन, एहि, राजद्वारमेव स्वजातिसमयेनोपतिष्ठाव: (ठ)।

---

"तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिव:।
ऋष्यशृङ्गोऽपि च प्रीतो लब्धा भार्य्यां भविष्यति॥"

ननु ब्राह्मण ऋष्यशृङ्ग: कथं क्षत्रियकन्यां परिणीतवानिति वाच्यं कलीतरयुगेषु असवर्णविवाहस्य शास्त्रीयत्वात्। तथा च मनु:-

"शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विश: स्मृते।
ते च स्वा चैव राज्ञ: स्यु स्ताश्च स्वा चाग्रजन्मन:॥"

कलौ त्वसवर्णविवाहो निषिद्ध:। यथा निषेधानुवृत्तौ आदित्यपुराणम्—

"द्विजानामसवर्णासु कन्यासूपयमस्तथा।"

ऋष्यस्य मृगविशेषस्य शृङ्गमिव शृङ्गं यस्य स:। अत्र पौराणिकी वार्त्ता रामायणे द्रष्टव्या। उपयेमे इति "उपाद्यम: स्वकरणे" इत्यात्मनेपदम्।

(ट) तेनेति। किमिति चार्थ:। तेन ऋष्यशृङ्गेन। द्वादशवार्षिकं द्वादशवर्षव्यापकं सत्रं यज्ञ:। तस्य ऋष्यशृङ्गस्य अनुरोधात् आग्रहात् गुरुजन: कौशल्यादि: कठोरगर्भां पूर्णगर्भाम्। विमुच्य विहाय। तत्र ऋष्यशृङ्गाश्रमे। वशिष्ठेत्यादिना श्लोकेन यदुक्तम् एतद्गद्यांशेन तस्यैव विवरणं कृतम्। इतिशब्दोऽयं पूर्व्वप्रस्तावसमाप्त्यर्थ:।

(ठ) सूत्रेति। तत् तस्मात् चत्वरस्थानानां विश्रान्तचारणतायां सम्पूर्णहितपन्थासाम

---

(ঞ) মহর্ষি বিভাণ্ডকের পুত্র ঋষ্যশৃঙ্গ তাহাকে (শান্তাকে) বিবাহ করেন; (ট) তিনি (ঋষ্যশৃঙ্গ) এখন দ্বাদশবর্ষ নিষ্পাদ্য একটী যজ্ঞ আরম্ভ করিয়াছেন; তাঁহার (ঋষ্যশৃঙ্গের) অনুরোধে কৌশল্যা প্রভৃতি গুরুজনবর্গ, পূর্ণগর্ভা সীতাদেবীকেও ছাড়িয়া সেইস্থানে গিয়াছেন।

नटः । तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्र-पद्धतिं भावः (ड) ।

सूत्र । मारिष (ढ) !

सर्वथा व्यवहर्त्तव्ये (१) कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥५॥

इतीः, अनेन तद्विषयकालोचनेन किम, निष्प्रयोजनं तदालोचनमित्यर्थः । एहि आगच्छ, सवजातिसमयेन सूत्रधारजातिनियमेन । उपतिष्ठ वः उपस्थितौ भवावः गच्छाव इत्यर्थः ।

"समयो नियमः सम्पदि"ति हेमचन्द्रः ।

(ड) नट इति । तेन राजद्वारगमनकारणेन हेतुना भावो विद्वान् भवान् सूत्रधारः सुपरिशुद्धां निर्दोषाम् अनिन्दनीयामिति यावत्, राज्ञो रामस्य उपस्थानस्य उपासनायाः स्तोत्रपद्धतिं स्तुतिमार्गं सन्तोषजनकवाक्यमित्यर्थः, हि निश्चितं निरूपयतु चिन्तयित्वा निर्णयतु इत्यर्थः ।

"भावो विद्वान्" इति नाट्योक्तौ अमरः ।

(ढ) सूत्रेति । मा रिषति दुष्टाभिनयादिना सभ्यानां ग्लानिं न हिनस्ति यः स मारिषः, हिंसार्थकरिषधातो "नाम्न्युपधात्प्रीकिरः कः" इति कप्रत्ययः । शब्दोऽयं नटार्थे सूत्रधारवक्तव्यो योगरूढः ।

'सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति—" इति साहित्यदर्पणः ।

(ঠ) সূত্রধার। তা, এ আলোচনায় প্রয়োজন কি? আইস, নিজজাতীয় নিয়মানুসারে আমরা রাজদ্বারেই উপস্থিত হই।

(ড) নট। তাহা হইলে, শিক্ষকমহাশয়, রাজার সম্বন্ধে বিশুদ্ধ একটী স্তুতিবাক্য (মনে মনে) স্থির করুন।

(ঢ) সূত্রধার। নট!

(१) व्यवहर्त्तव्यमिति पाठान्तरम् ।

नटः । अतिदुर्जन इति वक्तव्यम् (ण) ।
देव्यामपि हि वैदेह्यां सापवादो यतो जनः ।
रक्षोगृहे स्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥६॥

सर्व्वथेति । व्यवहर्त्तव्ये आचरणीये पदार्थे सर्व्वथा सर्व्वेण प्रकारेण कुतः कस्मात् अवचनीयता अनिन्दनीयता स्यात् अपि तु कथमपि नेत्यर्थः । अतएवार्थापत्तिरलङ्कारः । सर्व्वदा व्यवहार्य्यं वस्तु येन केनापि प्रकारेण यस्य कस्यापि निन्दनीयं स्यादेवेत्यर्थः । अत्र हेतुमाह जनो लोकः यथा स्त्रीणां तथा वाचां स्त्रीणामिव वाचामित्यर्थः । अतोपमालङ्कारः । साधुत्वे प्रशस्यत्वे भद्रत्वे प्रतीत्यर्थः दुर्ज्जनः दोषोद्भावनात् खलो भवतीति शेषः । प्रायेण सर्व्वो जनः स्त्रीणामिव वाचामपि अकारणं दोषमुद्भावयतीत्यर्थः । अतएव उपस्थानस्तोवपद्धतेः सर्व्वथानिर्द्दोषत्वकरणचिन्ता निष्फलैवेति भावः ।

अत्र पराईवाक्यार्थः पूर्व्वं प्रति हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार इत्यर्थापत्त्युपमाभ्यामङ्गाङ्गिभावेन सङ्करः । अवचनीयतेत्यत्र नञर्थः प्रधानः, तस्य तु समासे गुणीभावाद्विधेयाविमर्षदोषः "निन्दाऽभावः क्वतो भवे"दिति पाठेन समाधेयः ।

द्विपदमसूयावाचकमव्ययम् । "पिशुनो दुर्ज्जनः खलः" इत्यमरः ॥५॥

(ण) नट इति । दुर्ज्जन इत्यत्र अतिदुर्ज्जन इति वक्तव्यमित्यर्थः सर्व्वैरिति शेषः । तथा च साधुः परदोषमेव न कथयति, सामान्यखलस्तु दोषिणो दोषं गुणिनो गुणञ्चाभिधत्ते, अतिखलस्तु निर्द्दोषस्यापि दोषमुद्भावयतीति भावः ।

अतिदुर्ज्जन इति वक्तव्यत्वे कारणमाह देव्यामिति । हि तथाहि, यतो यस्माद्धेतोः जनो लोकः वैदेह्यां देव्यामपि परमपतिव्रतायां सीतायामपि अन्यत्र का कथेति भावः । अतएवार्थापत्तिरलङ्कारः । सापवादः सनिन्दः चरित्रनिन्दाकारीत्यर्थः । किं तत्र

যে বিষয় সর্ব্বদা ব্যবহৃত হইয়া থাকে, তাহাতে সর্ব্বপ্রকারে অনিন্দনীয়তা হইবে কিরূপে ? মানুষ, যেমন স্ত্রীলোকের, তেমন বাক্যের সাধুতার প্রতি দুর্জ্জন হইয়া থাকে (স্ত্রীলোকের ন্যায় বাক্যের উপরেও অনর্থক দোষারোপ করিয়া থাকে) ॥৫॥

(ণ) নট। অতিশয় দুর্জন হয়, ইহাই বলা উচিত।

सूत्र। यदि पुनरियं किंवदन्ती महाराजं स्पृशेत् (१), ततोऽतिकष्टं स्यात् (त)।

नटः। सर्व्वथा ऋषयो देवताश्च श्रेयो विधास्यन्ति (२)।

कारणमित्याह रक्षोगृहे राक्षसगृहे रावणभवने इति यावत्, स्थितिर्निवास एव मूलम् अपवादस्य कारणम् एकाकिनी सीता दुर्वृत्तदुष्टतररावणगृहे स्थितवती, अतएव तस्याः असारवत्या एकान्तमसम्भवेतीति कृत्वा सीतायाश्चरित्रं निन्दन्तीत्यर्थः। तु किन्तु अग्निशुद्धौ अग्निपरीक्षया सीतायाः निर्दोषत्वे अवधारितेऽपि अनिश्चयः सन्देहः यं सीतेति निर्णयाभावः। दृढतरप्रमाणेन निर्दोषत्वे निर्णीतेऽपि लोकः सर्वथा निन्दां करोति सः अतिदुर्जन एवेति भावः।

अत्र प्रथमार्द्धे दोषत्वरूपकारणाभावे अपवादरूपतत्कार्य्यसद्भावात् विभावना, तथा चतुर्थपादे अग्निशुद्धिरूपे हेतौ सत्यपि निश्चयरूपतत्कार्य्याभावात् विशेषोक्तिश्च अलङ्कारः, अनयोः सङ्करः। अग्निशुद्धावित्यत्र अपिशब्दो वक्तव्यः किन्तु नोक्त इति वाच्यानभिधाननामा दोषः, तथा अनिश्चय इत्यत्र प्रधानस्य नञर्थस्य समासे गुणीभावात् विधेयाविमर्षांश इति दोषद्वयं "हेतुर्लङ्कास्थितिर्वाक्यशुद्धावपि तु संशयः" इति पाठेन समाधेयम् ॥६॥

(त) सूत्रेति। इयं किंवदन्ती सीताचरित्रविषयं कुत्सिता जनश्रुतिः, यदि महाराजं स्पृशेत् रामचन्द्रस्य कर्णगोचरीभवेदित्यर्थः ततस्तदा अतिकष्टं महादुःखं स्यात् भवेत् इमां किंवदन्तीं श्रुत्वा रामस्य दारुणं कष्टं भविष्यतीत्यर्थः। महाराजं प्रति स्यादिति पाठे तु महाराजभार्य्यां प्रति स्यादित्यर्थः तदा लोकानाम् अतिकष्टं स्यात् निर्दोषाया दोषोद्भावनादिति भावः।

যে হেতু লোক, সীতাদেবীরও অপবাদ করিয়া থাকে; রাক্ষসগৃহে অবস্থিতিই তাহার মূল; কিন্তু অগ্নিপরীক্ষায় নির্দোষতা প্রমাণ হইলেও লোকের মনে তাহা নিশ্চয় হয় নাই ॥৬॥

(ত) সূত্রধার। এই কিংবদন্তী যদি মহারাজকে স্পর্শ করে (মহারাজের কাণে যায়), তবে তাঁহার অত্যন্ত কষ্ট হইবে।

(१) प्रति स्यात् इति पाठान्तरम्। (२) स्वस्ति करिष्यन्ति इति पाठभेदः।

(परिक्रम्य) भो भोः! क्वेदानीं महाराजः? (आकर्ण्य) एवं जनाः कथयन्ति—(थ)

स्नेहात् सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्म्मासनाद्विशति वासगृहं नरेन्द्रः ॥७॥

(थ) नट इति। ऋषयो वशिष्ठादयः देवता ब्रह्मादयश्च सर्व्वथा दैहिकं दैविकं मानसिकञ्च श्रेयो मङ्गलं विधास्यन्ति करिष्यन्ति सीतारामयोरित्यर्थः। अतएवात्र भि-द्भावना न कार्य्येति भावः।

परिक्रम्य राजगृहगमनार्थमेव कियन्तं पदक्षेपं कृत्वेत्यर्थः।

भो भो इति अयोध्यानिवासिनां सम्बोधनम्। महाराजो राम इदानीं क्व कुत्र आस्ते इति प्रश्नः।

आकर्ण्य जनानामुत्तरं श्रुत्वेवेत्यर्थः। जना अयोध्यावासिनो लोकाः, एवं वक्ष्यमाणम्।

किं कथयन्तीत्याह स्नेहादिति। जनको विदेहराजः स्नेहात् वात्सल्यात् न तु गौरवादित्यर्थः, सभाजयितुं जामातॄन् रामादीन् सम्भावयितुम् एत्य अयोध्यायामागत्य अमूनि दिनानि कतिपयान् दिवसान् इत्यर्थः उत्सवेन आनन्देन नीत्वा अतिवाह्य अद्य विदेहान् स्वाधिकृतजनपदं गतः। ततः कारणात् विमनसः उत्कण्ठितचित्तायाः देव्याः सीतायाः परिसान्त्वनाय उत्कण्ठापनोदनाय नरेन्द्रो रामचन्द्रः धर्म्मासनात् विचारासनात् वासगृहं शयनागारं विशति प्रविशति।

विदेहानिति "बहुत्ववदस्यादि"रित्यादिना बहुवचनम्।

वसन्ततिलका वृत्तम्—"ज्ञेया वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥७॥

---

(থ) নট। ঋষিগণ ও দেবতাগণ সর্ব্বপ্রকারে মঙ্গল করিবেন। (কতিপয় পদক্ষেপ করিয়া) ওহে! মহারাজ এখন কোথায়? (শুনিয়া) লোকে এইরূপ বলিতেছে—

(इति निष्क्रान्तौ) (द)।

## प्रस्तावना (ध)।

(द) इतीति। इति उक्तप्रकारेण प्रतिपाद्यविषयं विज्ञाप्य निष्क्रान्तौ रङ्गालयात् निर्गतौ नटसूत्रधाराविति शेषः।

(ध) प्रेति। प्रस्तावयति प्रतिपाद्यविषयमुत्थापयति या वाक्यावली सा प्रस्तावना। तथा च साहित्यदर्पणः—

"नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥"

सा चेयं प्रयोगातिशयरूपा, सीतारामविषयकसंलापरूपे एकस्मिन् प्रयोगे प्रचलति सति "धर्म्मासनाद्विशति वासगृहं नरेन्द्रः" इति प्रयुक्तेन अन्यप्रयोगेण सीतारामरूपयोः पात्रयोः प्रवेशस्य सूचितत्वात्। यथा साहित्यदर्पणः:

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥"

केचित्तु 'विशति' इति वर्त्तमानकालनिर्द्देशात् प्रवर्त्तकरूपा प्रस्तावनेयम्।

"कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत् वर्णयेत्।
तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्त्तकम्॥"

---

মহারাজ জনক, আপ্যায়িত করিবার জন্য আসিয়া, এই কয় দিন উৎসবে অতিবাহিত করিয়া, আজ বিদেহদেশে গিয়াছেন। সেই কারণে বিষণ্ণ চিত্ত সীতাদেবীর সান্ত্বনার জন্য, মহারাজ (রামচন্দ্র) বিচারালয় হইতে বাসগৃহে প্রবেশ করিতেছেন ॥৭॥

(দ) (ইহার পর উভয়ে চলিয়া গেল।)

(ধ) প্রস্তাবনা।

(ततः प्रविशत्यासनस्थो रामः सीता च) (न)।

रामः। देवि! समाश्वसिहि, न ते हि गुरवश्चिरं शक्नुवन्त्यस्मान् वियोक्तुम् (१) (प)।

इति साहित्यदर्पणादिति वदन्ति। तदसत्, तथाहि तिङर्थो न वर्त्तमानत्वादिः, किन्तु यत्न एव। तथा च शब्दशक्तिप्रकाशिकाया जगदीशः—

"जीवनयान्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकम्।"

भवतु वा काल एव तिङर्थः, तथापि यत्र साक्षाद्वाचकपदेन वर्त्तमानो वसन्तादिविशेषकालोऽभिधीयते तत्रैव प्रवर्त्तकं भवेत्। यथा—"प्राप्तः शरत्समय एष विशुद्धकान्तः" इति दर्पणकारेणोदाहृतम्। अन्यथा "क्रूरग्रहः" इत्यादौ उद्घात्यके "द्वीपादन्यस्मादपि" इत्यादौ कथोद्घाते "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" इत्यादौ प्रयोगातिशये "तवास्मि गीतरागेण" इत्यादाववलगितस्थलेऽपि च प्रवर्त्तकत्वप्रसङ्गस्तद्दुर्निवार एवेति सुधीभिर्विभावनीयम्।

(न) तत इति। ततो नटसूत्रधारयोर्निष्क्रमणानन्तरम्। आसनस्थो राम सीता च आसनस्था प्रविशति सभ्यानां दृष्टिगोचरीभवति। अत्र विशधातोः सभ्यदृष्टिगोचरत्वेन रूढिमूला जहत्स्वार्था लक्षणा, तेन आसनस्थस्य स्वयं प्रवेशो न विरुद्ध इति बोध्यम्। एवमन्यत्रापि ज्ञेयम्।

(प) राम इति। समाश्वसिहि स्वजनविच्छेदजनितविषादरहिता भवेत्यर्थः। हि यस्मात्, ते गुरवः जनकादयः अस्मान् चिरं वियोक्तुं वियुज्य स्थातुं न शक्नुवन्ति; स्नेहाकृष्टाः पुनरप्यचिरादेव आगमिष्यन्तीति भावः। जनको रामस्य श्वशुरत्वेन गुरुरिति गुरव इत्युक्तम्। तथा च देवलः—

"आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामहपितामहौ।
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः॥"

---

(न) (তদনন্তর আসনস্থ অবস্থায় রাম ও সীতার প্রবেশ।)

(१) विमोक्तुं विहातुमिति पाठभेदौ।

किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥८॥

---

ननु यदि स्वेच्छात् पुनरप्यागमनसम्भावना, तदा कथमिदानीमपि अस्मान् विहाय गता इत्याह किन्त्विति। अनुष्ठानानाम् अग्निहोत्रादिकर्म्मणां नित्यत्वं सति सम्भवे अपरिहार्य्यत्वं कर्त्तृ स्वातन्त्र्यं स्वाधीनतां स्वेच्छाचारित्वमित्यर्थः अपकर्षति निवारयति नित्यकर्म्मकरणार्थमेव जनकः स्वगृहं गत इति भावः। हि तस्मात् आहिता वेदविधानेन स्थापिता अग्नयो यैस्तेषामाहिताग्नीनां गृहस्थता गृहान्तरे अवस्थानं प्रत्यवायैः पापैः सङ्कटा सविघ्ना साग्निकानां नित्यकर्त्तव्यहोममपहाय गृहान्तरे अवस्थानेन पापं भवतीत्यर्थः।

अत्र जनकप्रस्थानरूपकार्य्यस्य अनुष्ठाननित्यत्वरूपे एकस्मिन् कारणे सति गृहान्तरे अवस्थानं पापजनकमिति कारणान्तरनिर्द्देशात् समुच्चयोऽलङ्कारः।

नित्यकर्म्मणामपरिहार्य्यत्वेन इच्छानुसारिणैकत्राधिककालावस्थानासम्भवात् विशेषतः साग्निकानां होममपहाय गृहान्तरे अवस्थानस्य पापजनकत्वात् जनको गृहं गत इति सरलार्थः।

"यदकरणे प्रत्यवायस्तन्नित्य"मिति वेदान्तसारः।

"यावज्जीवमग्निहोत्रं जुहोति" इति श्रुत्या

"पूर्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः।
जीवन् भवति चाण्डालः मृतः श्वा चैव जायते॥"

इति स्मृत्या च अग्निहोत्रादीनां नित्यत्वम्, अकरणे प्रत्यवायजनकत्वञ्च प्रतिपत्तव्यम्। किन्तु प्रयोजनवशात् अग्निहोत्रादिनित्यकर्म्मकरणाय प्रतिनिधिविधानानन्तरं स्वल्पकालीनः प्रवासोऽपि शास्त्रीयः। यथा छन्दोगपरिशिष्टम्—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं वसेत्॥"

(প) রাম। দেবি! আশ্বস্ত হও। কারণ, সেই গুরুজনবর্গ আমাদিগকে ছাড়িয়া বহু কাল থাকিতে পারিবেন না।

सीता। जाणामि अज्जउत्त ! जाणामि। किन्तु सन्दाव-आरिणो बन्धुजणविप्पओआ होन्ति (फ)।

रामः। एवमेतत्। एते हि हृदयमर्म्मच्छिदः संसारभावाः येभ्यो बीभत्समानाः सन्त्यज्य सर्वान् कामानरण्ये मनीषिणो विश्राम्यन्ति (ब)।

---

(फ) जानामि आर्य्यपुत्र ! जानामि। किन्तु सन्तापकारिणो बन्धुजनप्रयोगा भवन्ति।

---

शातातपः—"श्रौतं कर्म्म स्वयं कुर्य्यात् अन्योऽपि आर्त्तमाचरेत्।

अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः॥"

अतएव कतिपयदिवसार्थं जनकः समागत्य पुनर्गत इति बोध्यम्।

"हेत्ववधारणप्रश्नविशेषेषु तथाहि हि" इति शब्दार्णवः॥८॥

(फ) सीतेति। आर्य्यो गुरुः श्वशुर इति यावत्, तस्य पुत्र इत्यार्य्यपुत्र इति भार्य्याकृतं भर्त्तृसम्बोधनमेतत् नाटकादिषु प्रसिद्धम्। बन्धुजनानां पित्रादीनां विप्रयोगाः विच्छेदाः। खेदवशात् जानामि जानामि इति द्विरुक्तिः। तथा चोक्तम्—

"विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे।

प्रसादने सम्भ्रमे च द्वित्रिरुक्तिर्न दुष्यति॥"

सीतायाः शिक्षितत्वादुच्चवंशोद्भवत्वाच्च तदार्च्यं यं शौरसेनी भाषा। तथा च दर्पणः—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्।

शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्॥"

आसां साधनप्रणाली गौरवभयात् परिहृता।

তবে বেদোক্ত কার্য্যের অবশ্যকর্ত্তব্যতা, স্বাধীনতা লোপ করে; সুতরাং সাগ্নিকদিগের গৃহান্তরে অবস্থান, প্রত্যবায়দ্বারা বিঘ্নিত (সাগ্নিকগণ, পাপ হইবার ভয়ে দীর্ঘকাল অন্য স্থানে থাকিতে পারেন না)॥৮॥

(ফ) সীতা। জানি, আর্য্যপুত্র! জানি; কিন্তু বন্ধুজনের বিচ্ছেদ, সন্তাপ জন্মাইয়া থাকে।

(प्रविश्य) कञ्चुकी। रामभद्र! (इत्यर्द्धोक्ते साशङ्कम्) महाराज! (भ)।

(ब) राम इति। एतत् त्वयोक्तम् एवं मयापि स्वीकार्य्यं सत्यमित्यर्थः। एते सर्व्वैरस्माभिरनुभूयमाना, संसारभावाः जगतः स्वभावा प्रियविच्छेदाप्रियसंयोगादय इत्यर्थः। हृदयमर्म्मच्छिदः हृदयसन्धिस्थानविश्लेषकाः महादुःखकरा इत्यर्थः। येभ्यः संसारभावेभ्यः बीभत्समाना विरक्ता सन्तः, मनीषिणः ज्ञानिनो सर्व्वान कामान् कामनाविषयान् धनजनादीन् सन्त्यज्य विहाय अरण्ये वने विश्राम्यन्ति शान्ति लभन्ते। गृहस्थितिपक्ष एव संसारभावा, प्रबलीभवन्ति, व्यवहारोपयोगिवस्तुसमासादनेन सर्व्वदा महान परिश्रमश्च स्यात, तत परित्यागे तु विश्राम एव स्यादिति भावः। संसारे प्रायेणैव निरवच्छिन्नदुःखानि, कदापि यदि किञ्चिदपि सुख स्यात्, तदपि दुःखमिश्रितमेव इति विश्रामसुखार्थं वनगमनमेव श्रेय इति भावः। तथा च पातञ्जलसूत्रम्-

'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः।

मुक्तिवादे गदाधरभट्टाचार्य्यश्च—"अस्मिन संसारकान्तारे कियन्ति दुःखदुर्द्दिनानि कियती वा सुखखद्योतिका' इत्यादि।

"संसारश्च मिथ्याधीप्रभवा वासने'ति प्राम ण्यवादे गदाधर।

"स्वादृष्टोपनिबद्धशरीरपरिग्रह संसारः" इति तु कातन्त्रपरिशिष्टटीकायां गोपीनाथः।

"भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः।

(भ) प्रविश्येति। रङ्गालय इति शेषः। अन्तःपुराध्यक्षो विद्वान ब्राह्मणः कञ्चुकी। तथा च भरत,—

"अन्तःपुरचरो विप्रो वृद्धो गुणगणान्वितः।
सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते॥
जरवैक्लव्ययुक्तेन विशद्गात्रेण कञ्चुकी।"

(ब) রাম। ইহা আমিও স্বীকার করি। সংসারের এই সকল অবস্থা, হৃদয়ের মর্ম্মস্থান ছেদ করে; জ্ঞানিগণ, সংসারের যে সকল অবস্থা হইতে বিরক্ত হইয়া, সমস্ত কামনা পরিত্যাগ করিয়া, বনে যাইয়া বিশ্রাম করেন।

रामः। (सस्मितम्) आर्य्य! ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य, तद्यथाभ्यस्त-(१)मभिधीयताम् (म)।

---

कञ्चुकिना रामस्य शैशवादवधि आगमनादौ रामभद्र इति वात्सल्यव्यञ्जकनाम्नैव सम्बोधनादिकं कृतम्, किन्तु इदानीमपि तदभ्यासवशात् सहसा रामभद्र इत्येव तत्-सम्बोधनपदे मुखान्निर्गते इदानीं राजचक्रवर्त्तिनः गौरवसम्भ्रमसम्बोधनं विना शिशुचित-रामभद्र इति सम्बोधनं नितान्तमनुचितमित्यनुमीयमानं रामस्य रोषमपनेतुं तत्क्षणात् महाराज इत्युक्तम्। इति बोधयितुं महाकविना साशङ्कमित्युक्तम्। रामभद्र! अवधारय इतिवाक्यसमुदायस्य 'रामभद्र' इत्येव अर्द्धं स्यादत उक्तम "इत्यर्द्धोक्ते" इति। उक्तमिति भावे क्तः।

(म) राम इति। बाल्ये लालनतर्जनभर्त्सनादिकं कृतवतः कञ्चुकिन इदानीमयं शिष्टाचारो नितान्तमनावश्यक इति स्मितकारणं रामस्य।

"ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधर"मिति स्मितलक्षणम्।

नन्विति अनुनये। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। तातपरिजनस्य पितृपरिवारस्य वयसा बाल्यशिक्षकत्वेन च पितृस्थानीयस्य इत्यर्थः, मां प्रति रामभद्र इत्येव उपचारः सम्बोधनव्यवहारः शोभते समुच्छ्रत इत्यर्थः। गुरुजनकृतं वात्सल्यव्यञ्जकं सम्बोधनं यथा चिराय श्रुतिमधुरं भवति न तथा गौरवसूचकमिति भावः। तस्मात् यथाभ्यस्तम् अभ्यस्तं रामभद्र इति सम्बोधनमनतिक्रम्य अभिधीयताम् उच्यतां रामभद्र इत्येव सम्बुध्यतामित्यर्थः। अनेन रामस्य महाविनयसौजन्यं प्रकटीकृतं कविना।

"उपचारो व्यवहारः" इति दुर्गसिंहः।

---

(ভ) কঞ্চুকী। (প্রবেশ করিয়া) রামভদ্র! (এই অর্দ্ধোক্তির পর আশঙ্কার সহিত) মহারাজ!

(ম) রাম। (ঈষৎ হাস্যের সহিত) আর্য্য! আমার প্রতি পিতার পরিজনবর্গের 'রামভদ্র' এইরূপ ব্যবহারই শোভা পায়; সুতরাং অভ্যাস অনুসারেই বলিলেন।

কঞ্চুকী। দেব! ঋষ্যশৃঙ্গাশ্রমাদষ্টাবক্রঃ সম্প্রাপ্তঃ(য)।

সীতা। অজ্জ! তদো কিং বিলম্বীঅদি (র)।

রামঃ। ত্বরিতং প্রবেশয়।

(কঞ্চুকী নিষ্ক্রান্তঃ)

(প্রবিশ্য) অষ্টাবক্রঃ। স্বস্তি বাম্ (ল)।

রামঃ। ভগবন্! অভিবাদয়ে। ইত আস্যতাম্ (ব)।

সীতা। ভঅবং! ণমো দে, অবি কুসলং সজামাতুঅস্স গুরুজণস্স (১) অজ্জাএ সন্তাএ অ (শ)।

---

(র) আর্য্যে! ততঃ কিং বিলম্ব্যতে?

---

(য) কঞ্চুকীতি। অষ্টাবক্রঃ অষ্টাবক্রনামা মুনিঃ। সম্প্রাপ্তঃ অযোধ্যামিতি শেষঃ, ভবদ্দর্শনার্থমুপস্থিত ইত্যর্থঃ।

(র) সীতেতি। ততস্তদা কিং বিলম্ব্যতে প্রবেশয়িতুমিতি শেষঃ।

(ল) প্রবিশ্যেতি। বাং যুবাভ্যাম্, স্বস্তি ক্ষেমম্। যুবয়োর্মঙ্গলং ভবত্বিত্যর্থঃ। "স্বস্ত্যাশীঃ ক্ষেমপুণ্যাদৌ" ইত্যমরঃ। "নমঃ স্বস্তি—" ইত্যাদিনা চতুর্থীদ্বিবচনম্, ততো "বাং নৌ দ্বিত্বে" ইতি বামাদেশঃ।

---

(য) কঞ্চুকী। দেব! ঋষ্যশৃঙ্গের আশ্রম হইতে অষ্টাবক্র আসিয়াছেন।

(র) সীতা। আর্য্য! তবে বিলম্ব করিতেছেন কেন?

রাম। শীঘ্র প্রবেশ করান।

(কঞ্চুকী চলিয়া গেলেন।)

(ল) অষ্টাবক্র। (প্রবেশ করিয়া) আপনাদের মঙ্গল হউক।

(ব) রাম। ভগবন্! নমস্কার করি। এই স্থানে উপবেশন করুন।

(১) সপত্নীগুরুজণস্স ইতি পাঠান্তরম্।

रामः। निर्विघ्नः सोमपीथी आवुत्तो मे भगवानृष्यशृङ्गः, आर्य्या च शान्ता? (ष)

सीता। अह्मे वि सुमरेदि? (स)

अष्टा। (उपविश्य) अथकिम्। देवि! कुलगुरुर्भगवान् वशिष्ठस्त्वामिदमाह—(ह)

(श) भगवन्! नमस्ते, अपि कुशलं सजामातृकस्य गुरुजनस्य आर्य्यायाश्च शान्तायाः?

(स) अस्मानपि स्मरति?

---

(व) राम इति। अभिवादये प्रणमामि भवन्तमिति शेषः। इत आस्यताम् अस्मिन् स्थाने उपविश्यताम्।

(श) सीतेति। सजामातृकस्य ऋष्यशृङ्गसहितस्य गुरुजनस्य कौशल्यादेः। आर्य्यायाः पूज्यायाः। अपि कुशलं मङ्गलं किम्।

"गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः।

(ष) राम इति। पानं पीतं भावे क्तः, सोमस्य पीतं सोमपीतं तदस्यास्तीति सोमपीथी पृषोदरादित्वात् तकारस्य थकारः। आवुत्तो भगिनीपतिः "भगिनीपतिरावुत्तः" इत्यमरः। निर्विघ्नः विघ्नशून्यः आर्य्या शान्ता च निर्विघ्नेति शेषः। अत्र काक्वा प्रश्नो व्यज्यते। सीताप्रश्नेनैव ज्ञातयजिज्ञासानिर्वाहे आवेगेन रामस्यापि पुनस्तथैव प्रश्न इति न दोषः।

(स) सीतेति। अत्रापि अपिशब्दः प्रश्नार्थे।

(শ) সীতা। ভগবন্! আপনাকে নমস্কার করি। জামাতার সহিত গুরুজনবর্গের এবং আর্য্যা শান্তাদেবীর মঙ্গল ত?

(ষ) রাম। সোমপায়ী আমার ভগিনীপতি ভগবান্ ঋষ্যশৃঙ্গ এবং আর্য্যা শান্তাদেবী নির্বিঘ্নে আছেন ত?

(স) সীতা। আমাদিগকে স্মরণ করিতেছেন ত?

विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां
येषां कुलेषु (१) सविता च गुरुर्वयञ्च ॥९॥

(ङ) अष्टेति। अथकिमिति स्वीकारार्थमेकमव्ययम्। ऋष्यशृङ्गः कौशल्यादिः शान्ता च कुशलमास्ते अवति च युष्मानित्यर्थः।

विश्वम्भरेति। भगवती माहात्म्यवती विश्वं बिभर्त्तीति विश्वम्भरा पृथिवी "नाम्नि तृभृ—" इत्यादिना खः, भवतीं त्वाम् असूत उत्पादितवती, तथा प्रजापतिसमः प्रजानां सानुरागपरिपालनात् तपोमाहात्म्याच्च ब्रह्मणा तुल्यो राजा जनकस्ते तव पिता परिपालकः। हे नन्दिनि! कन्यासदृशि! आनन्दकारिणि! त्वं तेषां पार्थिवानां राज्ञां वधूः स्नुषा असि, येषां कुलेषु वंशेषु नानाशाखत्वाद्बहुवचनं सविता साक्षाद्ब्रह्मण्यदेवः सूर्य्यो गुरुः पिता उत्पादक इत्यर्थः, तथा वयञ्च गुरव उपदेष्टारः। तव मातृपितृभर्त्तॄणां सर्वप्रार्थनानुरूपस्त्वमित्यर्थः।

अत्र प्रजापतिसम इति आर्थी समासगतोपमा, जनकः पिता इति प्रथमतः पुनरुक्तत्वप्रतीतेः परन्तु जनको जनकनामा इत्यर्थभेदात् पुनरुक्तवदाभासः, सविता च गुरुर्वयञ्च इत्यत्र उभयोरेकगुरुत्वधर्म्मयोगात् तुल्ययोगिता, तथा सीताया भाग्यवत्त्वरूपकार्य्यस्य पृथिवीकन्यात्वरूपे एकस्मिन् कारणे सत्यपि जनककन्यात्वसूर्य्यवंशीयराजवधूत्वरूपकारणान्तरद्वयोपन्यासात् समुच्चयेति, एतेषामङ्गाङ्गिभावेन सङ्करः। एषां लक्षणान्यनुसन्धेयानि। तथा यच्छब्दस्य शेषे पाठाद्विधेयाविमर्शदोषः, स तु चतुर्थपादं प्रथमं परञ्च तृतीयपादं पठित्वा समाधेयः।

(ङ) अष्टावक्र। (উপবেশন করিয়া) হাঁ; দেবি! কুলগুরু ভগবান্ বশিষ্ঠ, আপনাকে ইহা বলিয়াছেন।

ভগবতী পৃথিবী, তোমাকে প্রসব করিয়াছেন; প্রজাপতির তুল্য

(১) গৃহেষু इति पाठभेदः।

तत् किमन्यदाशास्महे, केवलं वीरप्रसवा भूयाः (च)।

रामः। अनुगृहीताः स्मः (क)।

लौकिकानां हि साधूनामर्थं वागनुवर्त्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥१०॥

---

सीतायाः पृथिवीकन्यात्वे प्रमाणं यथा रामायणम्—

"अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥
भूतलादुत्थिता सा तु व्यवर्द्धत ममात्मजा।"

वसन्ततिलका वृत्तम् ॥९॥

(च) तदिति। तत्तस्मात् अन्यत् पुत्रभिन्नं किम् आशास्महे आशिषा याचयामः पुत्रभिन्नानां सर्व्वेषामेव प्रार्थनीयानां सद्भावादित्यर्थः। प्रसूयत इति प्रसवः पुत्रः वीरः प्रसवो यस्याः सा तादृशी। भूया इति आशीर्लिङ्।

(क) राम इति। अनुगृहीताः लब्धकरुणाः स्मः सीतया सह वयमित्यर्थः, तेषामाशीर्वादस्य अव्यर्थत्वादिति भावः।

कथमित्याह लौकिकानामिति। हि यस्मात्, लौकिकानां प्राकृतानां साधूनां सत्यवादिनां वाक् वाक्यम् अर्थम् अभिधेयं वस्तु अनुवर्त्तते लक्ष्यीकृत्य प्रसरति, पुनः किन्तु अर्थः अभिधेयविषयः आद्यानां प्राथमिकानाम् ऋषीणां वशिष्ठादीनां वाचं वाक्यम् अनुधावति अनुसृत्य उत्पद्यत इत्यर्थः। (लोके यद्यद्वस्तु प्रसिद्धमस्ति प्राकृतसत्यवादिनस्तत्तदेव वदन्ति, न तु तेषां वाक्यतो वस्त्वन्तरमुत्पद्यते, किन्तु ब्रह्मर्षयो यद्यद्वदन्ति तत्तदेव असदपि उत्पद्यते इति सरलार्थः।) (अतएवास्माकं वीरपुत्रोऽवश्यम्भावीति भावः।) अत्र लौकिकसाधुभ्यो वशिष्ठादीनामाधिक्यप्रतिपादनात व्यतिरेकालङ्कारः, तथा

রাজা জনক, তোমার পিতা এবং হে নন্দিনি। তুমি সেই রাজগণের কুলবধূ, যাঁহাদের বংশে সূর্য্যদেব এবং আমরা গুরু ॥৯॥

(চ) সুতরাং অন্য কি আশীর্ব্বাদ করিব ; কেবল বীরপ্রসবিনী হও।

(ক) রাম। অনুগৃহীত হইলাম।

" অষ্টা। ইদঞ্চ ভগবত্যা অরুন্ধত্যা দেবীভিঃ শান্তয়া চ ভূয়ো ভূয়ঃ সন্দিষ্টম্, 'যঃ কশ্চিদ্গর্ভদোহদো ভবত্যস্যাঃ সোऽবশ্যমচিরাৎ সম্পাদয়িতব্য' ইতি (খ)।

রামঃ। ক্রিয়তে, যদ্যেষা (১) কথয়তি (গ)।

---

অপ্রস্তুতেভ্যঃ সামান্যঋষিভ্যঃ প্রস্তুতস্য বিশেষস্য বশিষ্ঠস্য প্রতীতেরপ্রস্তুতপ্রশংসা চ অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

ঋষীণামপি সাধুত্বমস্তি তদ্ব্যাবৃত্তয়ে লৌকিকানামিত্যুক্তম্, আদ্যঋষয়স্তু অলৌকিকাঃ, লৌকিকা অসাধবস্তু যদস্তু নাস্তি তদপি বদন্তি, অতস্তেষাং বাক্যানামর্থানুসারিত্বমপি নাস্তি মিথ্যাবাদিত্বাদিতি তদ্ব্যাবৃত্তয়ে সাধূনামিত্যুক্তম্ ॥১০॥

(খ) অষ্টেতি। দেবীভিঃ কৌশল্যাদিভিঃ। ভূয়ো ভূয়ঃ বারংবারম্। সন্দিষ্টং বাচিকং প্রেষিতম্। অস্যাঃ সীতায়াঃ যঃ কশ্চিৎ বিপুলায়াসসাধ্যোऽপীত্যর্থঃ। গর্ভদোহদঃ গর্ভকালীনঃ পানভোজনাদেরভিলাষঃ। "দোহদো দৌহৃদং শ্রদ্ধা লালসে"তি হেমচন্দ্রঃ। 'সাদ' ইতি লোকপ্রসিদ্ধঃ। সম্পাদয়িতব্যঃ ত্বয়েতি শেষঃ।

(গ) রাম ইতি। ক্রিয়তে অস্যা অভিলাষঃ সম্পাদ্যতে, ময়েতি শেষঃ। এষা সীতা যদি কথয়তি, স্বাভিলাষং যদি ব্যনক্তীত্যর্থঃ। ইয়মীদৃশী বিনয়লজ্জানিভৃতা যৎ কিমপি ন কথয়তি, অতএব মমাপি তৎসম্পাদনং ন ঘটতে ইতি ভাবঃ। যদ্যদেষেতি পাঠে যদ্যৎ কথয়তি তত্তৎ ক্রিয়ত ইত্যর্থঃ।

কারণ, প্রকৃত সাধুদিগের বাক্য, অর্থের অনুসরণ করে; কিন্তু অর্থ, প্রাচীন ঋষিদিগের বাক্যের অনুগামী হয় ॥১০॥

(খ) অষ্টাবক্র। ভগবতী অরুন্ধতী, দেবী কৌশল্যাপ্রভৃতি এবং শান্তাদেবী, ইহা বার বার বলিয়া পাঠাইয়াছেন, 'গর্ভকালীন ইঁহার (সীতাদেবীর) যে কোন অভিলাষ হইবে, অচিরাৎ তাহা অবশ্যই সম্পাদন করিবে।'

(১) যদ্যদেষা ইতি পাঠান্তরম্।

अष्टा। ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यशृङ्गेण—'वत्से! कठोरगर्भेति नानीतासि, वत्सोऽपि रामभद्रस्त्वद्विनोदनार्थमेव स्थापितः। तत् पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामो'ति (घ)।

रामः। (सहर्षस्मितम्) तथास्तु। भगवता वशिष्ठेन किमादिष्टोऽस्मि? (ङ)

अष्टा। श्रूयताम्—

जामातृयज्ञेन वयं निरुद्धा-
स्त्वं बाल एवासि नवञ्च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्या-
स्तस्माद्यशो यत् परमं धनं वः ॥११॥

---

(घ) अष्टेति। ननान्दा भर्तृभगिनी तस्याः "ननान्दा नन्दिनी नन्दा पतिस्वसे"ति शब्दरत्नावली। देव्याः सीतायाः। किं सन्दिष्टमित्याह वत्स इत्यादि। त्वं कठोरगर्भा पूर्णगर्भा इति हेतोर्नानीतासि ममाश्रममित्यर्थः। अत्र "यानादिभ्रमणञ्चैव सार्ष्टमात् स्त्री न चार्हती"ति शास्त्रं हेतुत्वेन केचित् पठन्ति। पुत्रेण पूर्ण उत्सङ्गः क्रोडो यस्यास्ताम्। आयुष्मतीं सीताम्। इति सन्दिष्टमित्यनेनान्वयः।

(ङ) राम इति। ऋष्यशृङ्गेण यथा उक्तं तथा अस्तु इत्यर्थः।

(গ) রাম। করি; যদি ইনি বলেন।

(ঘ) অষ্টাবক্র। সীতাদেবীর ননদের পতি ঋষ্যশৃঙ্গ বলিয়া পাঠাইয়াছেন, 'বৎসে! তুমি পূর্ণগর্ভা বলিয়া তোমাকে আনি নাই; বৎস রামভদ্রকেও তোমার সান্ত্বনার জন্যই রাখিয়াছি; অতএব পুত্রপূর্ণ ক্রোড় অবস্থায় তোমাকে দেখিব।'

(ঙ) রাম। (আনন্দবশতঃ ঈষৎ হাস্যের সহিত) তাহাই হউক। ভগবান্ বশিষ্ঠ আমাকে কি আদেশ করিয়াছেন?

राम:। यथाह भगवान् मैत्रावरुणि: (च)।

स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।

आराधनाय लोकानां (१) मुञ्चतो नास्ति मे व्यथा ॥१२॥

---

जामेति। वयं जामातु: ऋष्यशृङ्गस्य यज्ञेन निरुद्धा: पौरहित्येन वृता: अतएव आसमाप्तेर्गन्तुमसमर्था इत्यर्थ:, अतएव अस्मास्वदि तव निर्भरो न भवेदिति भाव:। त्वं बाल एव शिशुरेवासि अत: प्राचीनवद्भिज्ञता नास्तीति भाव:। च किञ्च राज्यं नवम् अचिरलभ्यम् अतएव अवश्यमेव विशृङ्खलाया: सम्भव इति भाव:। तस्मात् प्रजानामनुरञ्जने स्वं प्रत्यनुरागजनने युक्त: एकाग्रचित्त: स्या: भवे:। तथा चोक्तं रघुवंशे—"राजा प्रकृतिरञ्जना"दिति। तस्मात् प्रजानुरञ्जनात् यद्यशो भवतीत्यर्थ:, तत् वो युष्माकं रघुवंशीयानां परमं धनं तदर्थमेव सर्वदा त्वया यतितव्यमिति भाव:।

अत्र तृतीयपादं प्रति प्रथमद्वितीयपादगतवाक्यत्रयस्य हेतुतया निर्द्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार:। इन्द्रवज्रा वृत्तम् ॥११॥

(च) राम इति। मित्रश्च वरुणश्च मित्रावरुणौ तयोरपत्यं मैत्रावरुणि: वशिष्ठ:। देवताद्वन्द्वे दीर्घ:। यथाह सम्यक् ब्रवीति इत्यर्थ:। कदाचित् तपश्चरतो मित्रस्य वरुणस्य च मुनेरुर्वशीं पश्यतो रेत: पपात, तस्माच्च कुम्भनिहितात् अगस्त्यो वशिष्ठश्च जात इति मत्स्यपुराणवार्त्तात्र द्रष्टव्या। अतएव उभावेव अगस्त्यवशिष्ठौ मैत्रावरुणिशब्दवाच्यौ।

स्नेहमिति। लोकानां प्रजानाम आराधनाय सन्तोषाय स्नेहं वात्सल्यं दयां करुणाञ्च सौख्यम् आत्मसुखञ्च यदि वा किंवा जानकीं सीतामपि मुञ्चतस्त्यजत: मे मम व्यथा अति-

---

অষ্টাবক্র। শুনুন।

আমরা জামাতার যজ্ঞে আবদ্ধ হইয়াছি; তুমি বালকই বট; রাজ্যও নূতন; সুতরাং তুমি প্রজার অনুরঞ্জনে মনোযোগী হইবে; তাহাতে যে যশ হইবে, তাহাই তোমাদের পরম ধন ॥১১॥

(চ) রাম। ভগবান্ বশিষ্ঠ যথার্থই বলিয়াছেন;

---

(१) लोकस्य इति पाठभेद:।

सीता। अदो ज्जेव राहवकुलधुरन्धरो अज्जउत्तो (छ)।

रामः। कः कोऽत्र भोः! विश्राम्यतां भगवानष्टावक्रः।

अष्टा। (उत्थाय परिक्रम्य च) अये! कुमारलक्ष्मणः प्राप्तः। (इति निष्क्रान्तः) (ज)।

(प्रविश्य) लक्ष्मणः। जयति जयत्यार्य्यः। आर्य्य! तेन चित्रकरेणास्मदुपदिष्टमार्य्यस्य चरितमस्यां वीथिकायामभिलिखितम्, तत् पश्यत्वार्य्यः (झ)।

---

(छ) अतएव राघवकुलधुरन्धर आर्य्यपुत्रः।

---

जनितोऽनुतापो नास्ति। स्नेहदयाख्यौ सत्पुरुषगुणौ जगद्वाञ्छनीयं सुखं किं बहुना प्राणाधिका सीतामपि प्रजानां सन्तोषाय परित्यक्तुमर्हामीति भावः।

अत्र अन्यत्र का कथा जानकीमपीति अर्थागमादर्थापत्तिः, तथा मुञ्चत इत्येकया क्रियया स्नेहादीनामन्वयात् तुल्ययोगिता चेत्यनयोः सङ्करः।

तथा स्नेहादीनामुत्तरोत्तरोत्कर्षप्रतिपादनात् सारालङ्कारप्रसङ्गः, स च वाचकाभावात् व्यज्यत इति वस्तुनालङ्कारध्वनिः ॥१२॥

(छ) सीतेति। अतएव प्रजावात्सल्यातिशयादेव राघवकुलधुरन्धरः प्रजावत्सल-रघुवंशीयराजगणाग्रगण्यः।

(ज) अष्टेति। अयि इति ससन्तोषसम्बोधनसूचकमव्ययम्।

---

লোকের সন্তোষের নিমিত্ত, স্নেহ, দয়া, সুখ, এমন কি সীতাকেও পরিত্যাগ করিতে আমার দুঃখ নাই ॥১২॥

(ছ) সীতা। এই জন্যই আপনি রঘুবংশের ধুরন্ধর।

রাম। এখানে কে কে আছ হে? ভগবান্ অষ্টাবক্রকে বিশ্রাম করাও।

(জ) অষ্টাবক্র। (উঠিয়া, কতিপয় পদক্ষেপ করিয়া) ওহে! কুমার লক্ষ্মণ উপস্থিত হইয়াছেন। (এই বলিয়া চলিয়া গেলেন।)

रामः। जानासि वत्स! दुर्म्मनायमानां देवीं विनोदयितुम्। तत् कियन्तमवधिं यावत्? (ञ)

लक्ष्मणः। यावदार्य्याया हुताशने विशुद्धिः।

रामः। शान्तम् (ट)।

---

(झ) प्रविश्येति। आर्य्यो भवान् जयति उत्कर्षवान् भवति मत्तो भवानुत्कृष्ट इत्यर्थः। गुरुजनसन्निधाने एतदुक्त्या औद्धत्यपरिहारः स्यादिति बोध्यम्। एवमन्यत्रापि। वीथिकायां भित्तौ "पङ्क्तिवर्त्म गृहाङ्गेषु वीथिर्वीथी च वीथिका" इति रत्नकोषः। अभिलिखितं चित्रितम्।

चित्रदर्शनेन सीतायाः पञ्चवटीवनम्, तत्र मुनिपत्नीभिः सद्भावः, रामेण सह विस्रम्भालापादिकम्, स्वाभाविकसौन्दर्य्यञ्च स्मृतिपथे पतिष्यति; ततश्च तत्र स्वारसिकी गमनेच्छा भविष्यति, तदपदेशेन च रामस्य सीतानिर्वासनं सुकरं भवेदिति भवभूतिना प्रस्तावयोजनासुविधार्थं वैचित्र्यार्थञ्च चित्रदर्शनमुपनिबद्धमिति सुधीभिर्भाव्यम्।

(ञ) राम इति। दुर्म्मनायमानां केनचित् कारणेन विषण्णां देवीं सीतां विनोदयितुं सन्तोषयितुं जानासि अभिज्ञोऽसीति त्वमतीव सुचतुरः समयावस्थाभिज्ञश्चेति भावः। तत् चित्रं कियन्तमवधिं यावत् कां शेषसीमां व्याप्य चित्रितम्? "यावताऽवधौ" इति द्वितीया।

(ट) राम इति। शान्तमिति वारणार्थमव्ययम्। नैवं ब्रूहीत्यर्थः।

---

(ঝ) লক্ষ্মণ। (প্রবেশ করিয়া) আর্য্যের জয় হউক, আর্য্যের জয় হউক। আর্য্য! আমাদের উপদেশ অনুসারে সেই চিত্রকর, আপনার চরিত্র, এই দেওয়ালে চিত্র করিয়াছে; আপনি তাহা দেখুন।

(ঞ) রাম। বৎস! তুমি বিষণ্ণহৃদয়া দেবী সীতাকে আশ্বস্ত করিতে জান বটে। তবে তাহা (চিত্র) কোন্ পর্য্যন্ত?

লক্ষ্মণ। আর্য্যার অগ্নিশুদ্ধিপর্য্যন্ত।

(ট) রাম। থাম।

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥१३॥

देवि! देवयजनसम्भवे! प्रसीद, एष ते जीवितावधिः प्रवादः (ठ)।

---

कथमित्याह उत्पत्तीति। उत्पत्तेर्जन्मत एव आरभ्य परिपूतायाः पवित्रायाः अस्याः सीतायाः पावनान्तरैः अन्यैः पवित्रताजनकैः अग्न्यादिभिः किं स्वतः शुद्धत्वादनर्थका एव अग्न्यादय इत्यर्थः। तथा च तीर्थोदकञ्च वह्निश्च एतौ पदार्थौ अन्यतः द्रव्यान्तरात् शुद्धिं पवित्रतां न अर्हतः प्राप्तुं योग्यौ न भवतः।

अत्र यथा तीर्थोदकवह्न्योरन्यतः शुद्ध्यपेक्षा नास्ति तद्वत् सीताया अपीति; तथा एकया अर्हत इति क्रियया तीर्थोदकवह्न्योरन्वयात् समानधर्म्मस्य शब्दभेदेन निर्द्देशात् प्रतिवस्तूपमातुल्ययोगिता चैतयोरङ्गाङ्गिभावेन सङ्करः।

तथा तीर्थोदकमिति नपुंसकलिङ्गेन प्रक्रम्य वह्निरिति पुंलिङ्गनिर्द्देशात् प्रक्रमभङ्गदोषः न च "तीर्थोदकं तथाऽग्नितत्त्वम्" इति पाठेन समाधेयः। अग्नितत्त्वमपि वह्निः।

सीताया आजन्मशुद्धत्वञ्च अयोनिजत्वेनेति बोध्यम्। तत्प्रमाणन्तु पूर्व्वमुक्तम्। योनिजानान्तु जनकजनन्योरपवित्रशुक्रशोणितजातत्वादेव अपवित्रार्थं पापमुत्पद्यते, तत्तु संस्कारकर्म्मभिर्नश्यति। तथा च याज्ञवल्क्यः—

"एवमेनः शमं याति बीजगर्भसमुद्भवम्।"

तीर्थोदकवह्न्योः स्वतः पवित्रत्वं यथा वह्निकूर्म्मपुराणयोः—

"तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम्।"

"पावकः पवमानश्च शुचिरग्निश्च ते त्रयः॥" ॥१३॥

(ठ) देवीति। देवा इज्यन्ते अस्मिन्निति देवयजनं यज्ञस्थानं तस्मात् सम्भवतीति

---

জন্ম হইতে পবিত্র এই সীতাদেবীর পক্ষে, পবিত্রতাজনক অন্য পদার্থদ্বারা কি হইবে? তীর্থের জল ও আগ্নি, অন্য পদার্থ হইতে পবিত্রতা লাভ করে না ॥১৩॥

कष्टं जनः कुलधनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं नहि तत् क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्द्ध्नि स्थितिर्न चरणैरवताड़नानि ॥१४॥

पचाद्यच् । "लाङ्गलोल्लिख्यमानाया यज्ञभूमेः मुनिर्गता" इति महावीरचरितेऽपि. प्रसीद आत्मदोषश्रवणात् कलुषितचित्ता न भवेत्यर्थः । एषः अग्निपरीक्षाविषयकः प्रवादः लोकापवादः जीवितावधिः यावज्जीवं स्थास्यतीत्यर्थः । निष्पापस्य संशयितपापक्षयाय प्रायश्चित्ताचरणवत् निष्कलङ्काया अपि ते लोकप्रत्ययार्थम् अग्निपरीक्षाकरणात् विषादो न करणीय इति भावः ।

एवमपवादिनो जनाः कथं न दण्ड्यन्त इत्याह कष्टमिति । कुलमेव धनम् अनपवादनीयतया रक्षणीयं येषां तैः निष्कलङ्ककुलोत्पन्नैः जनैरित्यर्थः जनः साधारणलोकः अनुरञ्जनीयः अपवादं कुर्व्वन्नपि तत्सहनेन तच्छन्दानुवर्त्तनेन च सन्तोषणीयः इत्येव कष्टं दण्डनीयानामदण्डनाद्दुःखमित्यर्थः । अन्यथा खलः असम्भवमपि दोषमारोपयति तथात्वे च कुलस्य निष्कलङ्कता न स्यादिति भावः ।

नः अस्माकम् आवयोरित्यर्थः सम्बन्धे तत् प्रसिद्धं यत् अशुभम् अमङ्गलम् एकाकिनी रावणगृहे स्थिता सीता कथमग्निपरीक्षामन्तरेण रामेण ग्राह्या स्यादिति असुखकरं वाक्यमित्यर्थः, उक्तं लङ्काप्रदेशीयलोकैरिति शेषः । एतद्वाक्यस्य सीतारामोभयसम्बन्धित्वात् न इत्युक्तं सङ्गच्छते । तत् असुखकरं वाक्यं ते तव सम्बन्धे नहि क्षमं न योग्यं स्वभावत एव शुद्धत्वादित्यर्थः । (तथापि लोकानां विश्वासार्थमेव मया तथाग्निपरीक्षा कृता, न तु ममापि तव चरित्रविषये संशयोऽभूदिति भावः ।) तथाहि सुरभिणः कुसुमस्य सुगन्धपुष्पस्य नैसर्गिकी स्वाभाविकी मूर्द्ध्नि स्थितिः सिद्धा लोकेषु प्रचलिता, किन्तु चरणैरवताड़नानि पादैरवमर्द्दनानि न, सिद्धानीत्यर्थः ।

(৫) দেবি ! যজ্ঞভূমিসমুৎপন্নে ! প্রসন্ন হও ; এই প্রবাদ তোমার জীবন পর্য্যন্ত থাকিবে ।

लक्ष्मणः। देवि! एतानि सरहस्यानि जृम्भकास्त्राणि, यानि भगवतः कृशाश्वात् कौशिकमृषिमुपसंक्रान्तानि; तेन च ताड़कावधे प्रसादीकृतान्यार्य्यस्य (त)।

रामः। वन्दस्व देवि! दिव्यास्त्राणि (थ)।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥१५॥

---

(त) लक्ष्मण इति। रहस्यानि गोपनीयानि मन्त्रा इत्यर्थः तैः सह विद्यमानानि सरहस्यानि मन्त्रसहितानि जृम्भकास्त्राणि सम्मोहनास्त्राणीत्यर्थः। यानि अस्त्राणि कृशाश्वात् विश्वामित्रप्रपितामहात् कौशिकमृषिं विश्वामित्रमुनिम् उपसंक्रान्तानि आगतानि विश्वामित्रेण प्राप्तानीत्यर्थः, तेन च विश्वामित्रेण ताड़कावधे कृते सतीत्यर्थः आर्य्यस्य रामस्य प्रसादीकृतानि प्रसीदति मन एभिरिति प्रसादानि अनुग्रहदानानि अप्रसादानि प्रसादानि कृतानि प्रसादीकृतानि। प्रसादीकृतानि अनुग्रहेण दत्तानीत्यर्थः। आर्य्यस्येति सम्बन्धविवक्षया षष्ठी।

(थ) राम इति। दिवि स्वर्गे भवानीति दिव्यानि च तानि अस्त्राणि चेति दिव्यास्त्राणि। वन्दस्व प्रणम।

(ण) সীতা। (দেখিয়া) উপরে ঘনভাবে অবস্থিত ইঁহারা কে? যেন আর্য্যপুত্রের উপাসনা করিতেছে।

(ত) লক্ষ্মণ। দেবি! ইঁহারা সমন্ত্রক জৃম্ভকাস্ত্র; যাঁহারা ভগবান্ কৃশাশ্ব হইতে বিশ্বামিত্রে আসিয়াছিলেন এবং সেই বিশ্বামিত্র আবার তাড়কাবধের পর, আর্য্যকে (রামচন্দ্রকে) অনুগ্রহপূর্ব্বক দান করিয়াছিলেন।

(থ) রাম। দেবি! দিব্যাস্ত্রদিগকে নমস্কার কর।

सीता। भोदु, अज्जउत्त! भोदु, एहि पेक्खह्म दाव दे चरिदं। (इत्युत्थाय परिक्रामति) (ङ)।

लक्ष्मणः। इदं तावदालेख्यम् (ढ)।

सीता। (निर्वर्ण्य) के एदे उवरि णिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तं ? (ण)

---

(ङ) भवतु, आर्य्यपुत्र ! भवतु, एहि प्रेक्षामहे तावत्ते चरितम् ।

(ण) के एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्य्यपुत्रम् ?

अत्र सुगन्धिकुसुमस्य मूर्द्धि स्थितिरिव तव निर्द्दोषत्वप्रशंसैव प्रसिद्धा, न तु तस्य पादावमर्द्दनानीव तव चरित्रे दोषारोप इति स दृष्टान्तप्रतीतेः दृष्टान्तालङ्कारः ।

वसन्ततिलका वृत्तम् ॥१४॥

(ङ) सीतेति । भवतु स प्रवाद इत्यर्थः । अमूलकोऽयं प्रवादः अवज्ञेय इति भावः । भवत्विति दैन्यार्थे द्विर्वचनम् ।

(ढ) लक्ष्मण इति । तावत् वाक्यालङ्कारे । आलेख्यं चित्रम् ।

(ण) सीतेति । निर्वर्ण्य दृष्ट्वा । "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्"-मित्यमरः । उपरि ऊर्द्ध्वदेशे निरन्तरस्थिताः अनवकाशस्थिताः परस्परसंलग्नभावेन स्थिता इत्यर्थः । उपस्तुवन्तीव उपासत इव ।

---

সৎকুলোৎপন্ন লোকের পক্ষে জনসাধারণকে সন্তুষ্ট করা কষ্টকর; অতএব আমাদের সম্বন্ধে যে অসুখকর কথা বলিয়াছে, তাহা তোমার পক্ষে উচিত নহে; কারণ, মস্তকস্থিতিই সুগন্ধি পুষ্পের স্বভাবসিদ্ধ; কিন্তু চরণদ্বারা তাড়ন করা স্বভাবসিদ্ধ নহে ॥১৪॥

(ঙ) সীতা। হউক, আর্য্যপুত্র! হউক। আসুন, আপনার চরিত্র দেখি। (এই বলিয়া, উঠিয়া পাদক্ষেপ করিতে লাগিলেন।)

(ঢ) লক্ষ্মণ। এই চিত্র।

सीता। णमो णमो एदाणं (द)।

रामः। सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति (ध)।

सीता। अणुग्गहीदह्मि (न)।

(द) नमो नम एतेषाम्।

(न) अनुगृहीतास्मि।

दिव्यत्वं वन्दनहेतुत्वाह ब्रह्मादय इति। ब्रह्मादयः पुराणाः प्राचीना गुरवः उपदेष्टारः ब्रह्मणो वेदस्य "वेदस्तत्त्वं तपोब्रह्म ब्रह्मा विप्रः प्रजापति"रित्यमरः। हिताय रक्षणाय दानवादयो दस्यवः वेदं विनाशयितुं यतन्ते स्म तेषां निवारणाय इत्यर्थः। सहस्रात् परा इति परःसहस्राः सहस्राधिका इत्यर्थः शरदो वत्सरान् "स्याद्दतौ वत्सरे शरत्" इत्यमरः। तपांसि तप्त्वा दुष्करतपस्याः कृत्वेत्यर्थः एतानि अस्त्राणि अस्त्ररूपेण परिणतानि स्वान्येव स्वकीयान्येव तपोमयानि तेजांसि अपश्यन्।

परःसहस्रा इति "अपस्करादयश्च" इति सुटा सह निपातः। शरद इति "अभिविधौ कालाध्वमाना"दिति द्वितीया। उपजातिर्वृत्तम् ॥१५॥

(द) सीतेति। एतेषामिति "चतुर्थ्यां षष्ठी" इति पिङ्गलसूत्रात् चतुर्थ्यर्थे षष्ठी।

(ध) राम इति। इदानीं मत्प्राप्त्यनन्तरकाले सर्वथा सर्वेण प्रकारेण निक्षेपेण उपसंहारेण च त्वत्प्रसूतिं तव तनयम् उपस्थास्यन्ति उपगमिष्यन्ति त्वत्सन्तानायत्तानि भविष्यन्तीत्यर्थः।

(न) सीतेति। अनुगृहीतास्मि मम तनयेनापि लभ्यमानत्वादिति भावः।

ব্রহ্মাপ্রভৃতি প্রাচীন উপদেশকগণ, বেদ রক্ষার নিমিত্ত, সহস্র বৎসরেরও অধিককাল তপস্যা করিয়া, স্বকীয় তপোময় তেজস্বরূপ এই অস্ত্রগুলিকে দেখিয়াছিলেন ॥১৫॥

(দ) সীতা। ইঁহাদিগকে নমস্কার নমস্কার।

(ধ) রাম। এখন ইঁহারা সর্ব্বপ্রকারেই তোমার সন্তানের হস্তগত হইবেন।

लक्ष्मणः। एष मिथिलावृत्तान्तः (प)।

सीता। अम्महे! दलन्नव-णीलुप्पल-सामल-सिणिद्ध-मसिण-सोहमाण-मंसल-देहसोहग्गेण विम्मअ-त्थिमिदताद-दीसमाण-सुन्दर-सिरी • अणादर-खण्डिद-सङ्कर-सरासणो सिहण्डमुद्ध-मुह-मण्डलो अज्जउत्तो आलिहिदा (फ)।

(फ) अहो! दलन्नवनीलोत्पल-श्यामल-स्निग्ध-मसृण-शोभमान-मांसल देह-सौभाग्येन विस्मयस्तिमिततातदृश्यमान सुन्दरश्रीः अनादरखण्डितशङ्करशरासनः शिखण्ड-मुग्धमुखमण्डल आर्य्यपुत्र आलिखितः।

---

(प) लक्ष्मण इति। एष इत्यङ्गुल्या निर्द्देशः। मिथिलावृत्तान्तः मिथिलानगरी वासस्य घटनावलीत्यर्थः।

(फ) सीतेति। अम्महे इति शौरसेन्यादिभाषायां विस्मयसूचकमव्ययम्, संस्कृते तु तादृशशब्दाभावात् 'अहो'शब्देनानुवादः कृतः। दलत् विकसत् यत् नवं नीलोत्पलम् ईषत्प्रस्फुटितेन्दीवरमित्यर्थः तद्वत् श्यामलं स्निग्धम् अरूक्षं मसृणं चिक्कणं (चकमके इति भाषा) अतएव शोभमानं मांसलं बलशालि यत् देहं तस्य सौभाग्येन सौन्दर्य्येण विस्मयेन आश्चर्य्येण स्तिमितः निश्चलः तेन तातेन जनकेन दृश्यमाना सुन्दरी श्रीः शोभा यस्य सः। तथा अनादरेण अयत्नेन खण्डितं भग्नं शङ्करशरासनं हरधनुर्येन सः। तथा शिखण्डेन काकपक्षेण मुग्धं सुन्दरं मुखमण्डलं यस्य सः। आर्य्यपुत्रो राम आलिखितः चित्रितः। चित्रमिदं रामस्य अविकलमिति महदाश्चर्य्यमिति भावः।

---

(न) সীতা। অনুগৃহীত হইলাম।

(প) লক্ষ্মণ। এই মিথিলাব বৃত্তান্ত।

(ফ) সীতা। ওমা! এই আর্য্যপুত্রকে চিত্র করিয়া রাখিয়াছে; প্রস্ফুটিত নবনীলোৎপলের ন্যায় শ্যামবর্ণ, স্নিগ্ধ, কোমল, সুন্দর, অথ চ বলিষ্ঠ দেহের সৌন্দর্য্যবশতঃ, আমার পিতৃদেব বিস্ময়ে নিশ্চল হইয়া, সুন্দর শোভা

लक्ष्मणः। आर्य्य! पश्य—

सम्बन्धिनो वशिष्ठादीनेष तातस्तवार्च्चति।
गौतमश्च शतानन्दो जनकानां पुरोहितः॥१६॥

रामः। द्रष्टव्यमेतत् (ब)।

जनकानां रघूणाञ्च सम्बन्धः कस्य न प्रियः।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः॥१७॥

सम्बन्धिन इति। एष तव तातो जनकः, जनकानां जनकवंश्यानां पुरोहितः गौतमः अहल्यायां जातो गौतमपुत्रः शतानन्दस्तपस्वी मुनिश्च वशिष्ठ आदिर्येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः, तेन वशिष्ठं तदन्यान् सम्बन्धिनो विवाहजनितवैवाहिकत्वादिसम्बन्धवतो दशरथादीन् अर्च्चति प्रत्युद्गमनादिना सम्मानयति।

अत्र एकस्यामर्च्चतिक्रियायां जनकशतानन्दयोः कर्त्तृत्वेनान्वयात् तुल्ययोगितालङ्कारः। अर्च्च धातुरयं भौवादिकः॥१६॥

(ब) राम इति। द्रष्टव्यमेतत् विवाहसम्बन्धीयचित्रमित्यर्थः, विवाहघटनाया विचित्रत्वात् गौरवावहत्वाच्च तद्दर्शनमवश्यमुचितमिति भावः।

कथमित्याह जनेति। जनकानां जनकवंश्यानां रघूणां रघुवंश्यानाञ्च "रघुकुलसम्बन्धात् राघवोऽपि रघुरुच्यते" इति वैयाकरणोक्तिरुभयत्रापि प्रमाणम्। सम्बन्धो विवाहसम्बन्धः कस्य जनस्य न प्रियः सन्तोषकरः अपि तु सर्वस्यैवेत्यर्थः। यत्र सम्बन्धे स्वयं कुशिकनन्दनो विश्वामित्रः दाता ग्रहीता च। उभयोरपि जनकरघुवंशयोरतीवोच्चतया परस्परं

---

সন্দর্শন করিতেছেন; ইনি অবহেলায় হরধনু ভগ্ন করিয়াছেন এবং ইঁহার মুখমণ্ডল জ্বলিতে বড়ই সুন্দর হইয়াছে।

লক্ষ্মণ। আর্য্য! দেখুন—

এই আপনার পিতা এবং জনকবংশের পুরোহিত গৌতমপুত্র শতানন্দ, সম্বন্ধী বশিষ্ঠপ্রভৃতির অর্চ্চনা করিতেছেন॥১৬॥

(ব) রাম। ইহা দেখিবার বটে। কারণ—

सीता। एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदीक्खिदा तुह्मे। अम्महे! जाणामि, तस्सिं ज्जेव पदेसे तस्सिं ज्जेव काले वत्तामि (भ)।

(भ) एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्। अहो! जानामि, तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्त्ते।

---

विवाहसम्बन्धस्य महायोग्यत्वात् अतएव विषयनिस्पृहस्यापि विश्वामित्रस्य घटकत्वात् द्रष्टव्यमेव तच्चित्रमिति भाव:।

अत्रार्थापत्तिरलङ्कार:।

अत्र पूर्वं दाता सदयुक्तिदानादिना कन्यादानप्रयोजक: परञ्च ग्रहीता तादृशेनैव सदयुक्तिदानादिना ग्रहणप्रयोजक इति भिन्नकालत्वात् एकस्मिन् विश्वामित्रे दातृत्वं ग्रहीतृत्वञ्चाविरुद्धमिति भावम्॥१७॥

(भ) सीतेति। तस्मिन् काले हरधनुर्भङ्गानन्तरसमये कृतम् ऋत्विग्भिर्विहितं गोदानमेव केशान्तसंस्काराख्यकेशच्छेदनमेव मङ्गलं येषां ते तथोक्ता:। विवाहदीक्षिता विवाहे कर्म्मणि व्रता:। जानामि अनुभवामि। तस्मिन्नेव प्रदेशे मिथिलाराजधान्यां तस्मिन्नेव काले हरधनुर्भङ्गानन्तरसमये वर्त्ते तिष्ठामि इति जानामीत्यर्थ: अविकलचित्र-दर्शनादित्यर्थ:।

गवां लोम्नां केशानामित्यर्थ: दानं छेदनमिति गोदानम्। तथा च "गौ"रित्युपक्रम्य "स्वर्गेवज्राम्बुरश्मिदृग्बाणलोमसु वि"ति केशव:।

दानमिति "दो अवखण्डने" इत्यस्य युटा रूपम्।

गोदानन्तु संस्कारविशेष:। तथा च याज्ञवल्क्य:—

"केशान्तश्चैव षोड़श:।"

मिताक्षरा च—"केशान्तं पुनर्गोदानाख्यं कर्म्मे"ति।

---

जनकवংশীয় ও রঘুবংশীয়দিগের পরস্পর বিবাহসম্বন্ধ, কাহার প্রিয় নহে? যাহাতে স্বয়ং বিশ্বামিত্র, দাতাও বটেন, গ্রহীতাও বটেন॥১৭॥

रामः। एवम् (म)।

समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि! गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥१८॥

(म) राम इति। एवम्, त्वया यदुक्तं तत् सत्यमित्यर्थः।

तत्रकीयानुभवमप्याह समय इति। स समयो वर्त्तत इव अतीतोऽपि अविकलचित्र-दर्शनाद्वर्त्तमान इव अनुभूयत इत्यर्थः। हे सुमुखि! यत्र विवाहसमये गौतमार्पितः शतानन्देन मम करोपरि स्थापितः अयम् आगृहीतं परिहितं कमनीयं मनोहरं कङ्कणम् अलङ्कारविशेषो येन स तथोक्तः तव करः पाणिः मूर्त्तिमान् महोत्सव इव मां समनन्दयत् सन्तोषितवान्।

अत्र प्रथमा भावाभिमानिनी क्रियोत्प्रेक्षा, द्वितीया तु भावाभिमानिनी गुणोत्प्रेक्षा; उत्सवस्य आनन्दविशेषत्वेन गुणत्वात्।

विवाहकाले वरहस्तोपरि कन्याहस्तस्थापनमिति चिरन्तनी रीतिः। तथा च भवदेवः— "ततो जामाता चाचान्तो मङ्गलौषधिलिप्तेन दक्षिणहस्तेन तादृशमेव कन्याया दक्षिणहस्तं स्वहस्तोपरि निदध्यात्।"

मञ्जुभाषिणी वृत्तम्—"सजसा जगौ च यदि मञ्जुभाषिणी"ति लक्षणात् ॥१८॥

(ভ) সীতা। সেই সময় কেশান্তসংস্কাররূপ শুভকর্ম্ম করা হইয়াছিল এবং বিবাহকার্য্যে বরণ করা হইয়াছিল, এই অবস্থায় আপনারা চারি ভাই এই। ওহে! আমি মনে করিতেছি যেন, সেই স্থানে এবং সেই সময়ে রহিয়াছি।

(য) রাম। এইরূপই বটে।

এ যেন সেই সময়ই বর্ত্তমান (বলিয়া বোধ হইতেছে); হে সুমুখি!

लक्ष्मणः। इयमार्य्या, इयमप्यार्य्या माण्डवी, इयमपि बधूः श्रुतकीर्त्तिः (य)।

सीता। वच्छ! इअं वि अवरा का? (र)

लक्ष्मणः। (सलज्जस्मितं स्वगतम्) अये! ऊर्म्मिलां पृच्छत्यार्य्या। भवत्वन्यतः सञ्चारयामि। (प्रकाशम्) आर्य्ये! दृश्यतां द्रष्टव्यमेतत्। अयञ्च भगवान् भार्गवः (ल)।

(र) वत्स! इयमप्यपरा का?

(य) लक्ष्मण इति। इयमिति सर्व्वत्र अङ्गुल्या निर्द्देशः। आर्य्या भवती सीतेत्यर्थः। माण्डवीति भरतभार्य्याया नाम। अनयोस्तु ज्येष्ठभ्रातृभार्य्यात्वेन मातृतुल्यत्वात् आर्य्या-पदेन निर्द्देशः। तथा च वृहस्पतिः

"मातुः स्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः॥"

श्रुतकीर्त्तिरिति शत्रुघ्नभार्य्याया नाम। कनिष्ठभ्रातुः पुत्रतुल्यत्वेन तद्भार्य्यायाः पुत्रबधू-तुल्यत्वमिति बधूरित्युक्तम्। यथा मनुः—

"पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः।
पुत्रवच्चानुवर्त्तेरन् ज्येष्ठो भ्रातरि धर्म्मतः॥"

(र) सीतेति। लक्ष्मणोऽङ्गुलीनिर्द्देशेन सर्व्वं परिचाययन् लज्जया स्वभार्य्यामूर्म्मिला-मुल्लङ्घ्य माण्डवीतः श्रुतकीर्त्तिं परिचाययति, सीतासदृशी चतुरा तु तदवलोक्य कौतुकाय तादृशमवसरं प्रतीक्षितं नार्हतीति पृच्छति—"वत्स! इयमप्यपरा के"ति; अन्यथा चिरपरिचितायाः प्रश्नो नोपपद्यत इति बोध्यम्।

যে সময়ে শতানন্দসমর্পিত, রমণীয় কঙ্কণধারী এবং মূর্ত্তিমান্ মহোৎসবের ন্যায় তোমার এই হাতখানি আমাকে আনন্দিত করিয়াছিল।১৮॥

(য) লক্ষ্মণ। এই আর্য্যা (আপনি), ইনিও আর্য্যা মাণ্ডবী, আর এই বধূ শ্রুতকীর্ত্তি।

सीता। (ससम्भ्रमम्) कम्पिदह्मि (१) (व)।

रामः। ऋषे! नमस्ते।

लक्ष्मणः। आर्य्ये! पश्य, अयमार्य्येण। (इत्यर्द्धोक्ते) (श)।

---

(व) कम्पितास्मि।

(ल) लक्ष्मण इति। स्वगतम् अन्यैरश्राव्यरूपमस्फुटं वाक्यं वदतीति शेषः। भवतु, ऊर्म्मिलां प्रति प्रश्न इति शेषः, तथापि तस्योत्तरं न देयमिति भावः। अन्यतः अन्यस्मिन् दर्शनीये सञ्चारयामि सीतारामयोर्दृष्टिमित्यर्थः। प्रकाशं सर्व्वश्राव्यरूपं सुस्पष्टं वदतीति शेषः। एतच्चित्रं द्रष्टव्यम् अवश्यमेव दृश्यं पवित्रत्वात् महावीरत्वाच्च। भार्गवः परशुरामः। स्वगतप्रकाशयोर्लक्षणं यथा साहित्यदर्पणे—

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।"

"सर्व्वश्राव्यं प्रकाशं स्यात्।"

(व) सीतेति। सम्भ्रमो भयादिजनितत्वरा तत् सहितं वदतीति क्रियाविशेषणम्। "सम्भ्रमो संवेगसम्भ्रमा" वित्यमरः।

(श) लक्ष्मण इति। आर्य्येण रामेण अयं भार्गवः पराजित इति वाक्यशेषः, अतएव अयमार्य्येणेत्यंशो व क्याद्धमिव स्य इत उक्तम् इत्यर्द्धोक्ते इति।

(র) সীতা। বৎস! এই অপর স্ত্রীলোকটী কে?

(ল) লক্ষ্মণ। (লজ্জা ও ঈষৎ হাস্যের সহিত স্বগত) ও! আর্য্যা সীতা উর্ম্মিলার কথা জিজ্ঞাসা করিতেছেন। হউক, অন্য দিকে উঁহাদের দৃষ্টি সঞ্চারিত করি। (প্রকাশ্যে) আর্য্যে! এই দেখিবার ঘটনা দেখুন। এই ভগবান্ পরশুরাম।

(ব) সীতা। (ব্যস্ততার সহিত) কম্পিত কম্পিত হইয়াছি।

রাম। ঋষি! আপনাকে নমস্কার।

(১) भीदह्मि इति पाठान्तरम्।

रामः। (साक्षेपम्) वत्स! बहुतरं द्रष्टव्यमन्यतो दर्शय (ष)।

सीता। (सस्नेहबहुमानं निर्वर्ण्य) सुट्ठु सोहसि अज्जउत्त! एदिणा विणअमाहप्पेण (स)।

लक्ष्मणः। एते वयमयोध्यां प्राप्ताः।

रामः। (सास्रम्) स्मरामि हन्त! स्मरामि (ह)।

जीवत्सु तातपादेषु नवे दारपरिग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥१८॥

---

(स) सुष्ठु शोभसे आर्यपुत्र! एतेन विनयमाहात्म्येन।

---

(ष) राम इति। आक्षेपेण लक्ष्मणवाक्यनिवारणेन सहितं साक्षेपं लक्ष्मणवाक्यं वारयित्वेत्यर्थः। मान्यानामवमानना विनयविरुद्धा, किन्तु तदानीम् अनन्योपायतया महामान्यस्यापि भार्गवस्य पराजयेन सा घटिता किन्त्विदानीं तदर्थं श्लाघाकरणमेकान्तमनुचितमित्यभिप्रायेण अन्यतो दर्शयेत्युक्तम्।

(स) सीतेति। बहुमान आदरातिशयः। निर्वर्ण्य दृष्ट्वा राममिति शेषः। विनयमाहात्म्येन विनयगौरवेण। सुष्ठु इति प्रशंसार्थमव्ययम्।

(ह) राम इति। स्मरामि तत्कालीनवृत्तान्तमिति शेषः।

(শ) লক্ষ্মণ। আর্য্যে! দেখুন—আর্য্য (রাম) ইঁহাকে—(এই অর্দ্ধোক্তির পর।)

(ষ) রাম। (লক্ষ্মণের বাক্যে বাধা দিয়া) বৎস! বহুতর দেখিতে হইবে; সুতরাং অন্য দিক্ দেখাও।

(স) সীতা। (স্নেহ ও আদরের সহিত দেখিয়া) আর্য্যপুত্র! আপনি এই বিনয়ের প্রভাবে সুন্দর শোভা পাইতেছেন।

লক্ষ্মণ। এই আমরা অযোধ্যায় উপস্থিত হইয়াছি।

(হ) রাম। (অশ্রুপাতের সহিত) স্মরণ করি, হায়! স্মরণ করি বটে।

इयमपि तदा जानकी—(च)

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः
दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम्।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृतमधुरैरम्बानां मे कुतूहलमङ्गकैः॥२०॥

जीवत्स्विति। तातपादेषु पितरि जीवत्सु नवे नूतने दारपरिग्रहे विवाहे कृते सतीत्यर्थः मातृभिः कौशल्याकैकेयीसुमित्राभिः चिन्त्यमानानां रामोऽत्र शयिष्यते, भरतोऽत्र भोक्ष्यते, लक्ष्मणोऽत्र वेशरचनां करिष्यतीत्यादिरूपेण व्यवस्थाप्यमानसकलविषयकार्याणामित्यर्थः, नोऽस्माकं ते हि त एव दिवसाः गताः जीवनानामुत्कृष्टदिनानि अतीतानीत्यर्थः। तेषां दिवसानां तुलनया वर्त्तमानदिनानि नितान्ततुच्छानीति भावः।

अत्र ते दिवसा एव उत्कृष्टा आसन्, न तु वर्त्तमाना इति वर्तमानदिननिरासार्थो परिसंख्यालङ्कारः। तथा दिवसा इत्यस्य उत्कृष्टदिवसपरत्वादर्थान्तरसंक्रमितवाच्यो ध्वनिः।

भक्त्यतिशयसूचनाय तातपादैरित्यत्र पादशब्दस्य पितृत्वमात्रे लक्षणा, गुरुत्वाच्च बहुवचनम्॥१९॥

(च) इयमिति। जानकीति प्रथमान्तं पदं श्लोकस्थया अकृतेति क्रियया अन्वेति।

प्रतन्विति। इयं शिशुशालिका जानकी, प्रतनवः सूक्ष्माः विरलाः अनिविडाश्च तैः प्रान्ते अग्रदेशे वक्त्रे उन्मीलन्तः आगण्डसंश्लिष्टा मनोहरा ये कुन्तलाः केशास्तैः, तथा दशना दन्ता मुकुलानि कुड्मलानीव तैः मुग्धः मनोहर आलोको दर्शनं यस्य तत् सुदृश्यमित्यर्थः मुखं वदनं दधती वहन्ती सती। एतत् तृतीयान्तविशेषणद्वयं मुग्धत्वं प्रति हेतुः। ललितललितैः सुन्दरप्रकारैः ज्योत्स्नाः ज्योत्स्नासदृशानि प्रायेण ज्योत्स्ना इति ज्योत्स्नाप्रायाः तैः बाहुल्येन कौमुदीसदृशैरित्यर्थः अकृत्रिमः विभ्रमो विलासो येषां

---

পিতা জীবিত থাকিতে এবং নূতন বিবাহ হইলে, মাতৃগণ আমাদের সমস্ত কার্য্যের ব্যবস্থা করিতেন, এই অবস্থায় সেই আমাদের দিন গিয়াছে॥১৯॥

लक्ष्मणः। एषा मन्थरा।

रामः। (अनुत्तरमन्यतो दर्शयन्) देवि! वैदेहि!

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनासीत् समागमः ॥२१।

तैः अतएव मधुरैः सर्वेषां प्रियैः क्षुद्राण्यङ्गानीति अङ्गकानि हस्तपदाद्यवयवाः तैः मे मम अम्बानां मातृणां कुतूहलं कौतुकम् अकृत विहितवती।

अत्र दशनमुकुलैः ज्योत्स्नाप्रायैरिति लुप्तोपमाद्वयम्, तया कुतूहलकरणरूपकार्य्यं प्रति बहुकारणोक्तेः समुच्चयश्चेति अङ्गाङ्गिभावेन सङ्करः।

ललितललितैरिति "प्रकारे गुणवचनस्ये"ति द्विर्वचनम्। ज्योत्स्नाप्रायैरिति मयूरव्यंसकादित्वात् समासः।

सीतायाः सर्वदैवान्तःपरस्थायित्वेन अन्येषां तत्सौन्दर्य्यदर्शनासम्भवात् केवलम् अम्बानामित्युक्तम्।

हरिणी वृत्तम्—"न स म-र-स ल गः षड्वेदैर्हयैर्हरिणी मते"ति लक्षणात् ॥२०॥

इङ्गुदीति। अयं दृश्यमानः, शृङ्गवेरपुरे तदाख्ये गुहचाण्डालपुरे इङ्गुदीपादपः इङ्गुदीफलवृक्षः तिष्ठतीत्यर्थः, यत्र इङ्गुदीमूले पुरा वनगमनकाले स्निग्धेन वत्सलेन निषादपतिना व्याधेन गुहेन सह समागमः सम्मिलनमासीत् अस्माकमिति शेषः ॥२१॥

(ক) এই সীতাও, তখন সূক্ষ্ম, বিরল ও প্রান্তস্খলিত মনোহর কেশকলাপ এবং দন্তমুকুলদ্বারা সুদৃশ্য মুখমণ্ডল ধারণ করতঃ, জ্যোৎস্নার ন্যায়, অতি সুন্দর, অকৃত্রিম-বিলাস সম্পন্ন ও মনোহর অঙ্গদ্বারা আমার মাতৃগণের কৌতুক জন্মাইতেন ॥২০॥

লক্ষ্মণ। এই মন্থরা।

রাম। (উত্তর না দিয়া, অন্য দিক দেখাইতে থাকিয়া) দেবি! বিদেহনন্দিনি!

এই সেই ইঙ্গুদীবৃক্ষ; পূর্ব্বে শৃঙ্গবেরপুরে যেখানে স্নেহশীল ব্যাধপতি গুহের সঙ্গে আমাদের সম্মেলন হইয়াছিল ॥২১॥

लक्ष्मणः। (विहस्य स्वगतम्) अये! मध्यमाम्बावृत्तान्तोऽन्तरित आर्य्येण (क)।

सीता। अह्मो! एसो जटासञ्जमणवुत्तन्तो (ख)।

लक्ष्मणः। पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम्।
धृतं बाल्ये तदार्य्येण पुण्यमारण्यकं व्रतम् ॥२२॥

---

(ख) अहो! एष जटासंयमनवृत्तान्तः।

---

(क) लक्ष्मण इति। अयि इत्यात्मसम्बोधनम्। आर्य्येण रामेण मध्यमाम्बायाः कैकेय्या वृत्तान्तः मन्थरायुक्तिग्रहण-मानकरण-दशरथमतपरिवर्त्तन-वनप्रस्थापनादिव्यापारचित्रमित्यर्थः, अन्तरितः गोपित उल्लङ्घ्य अन्यत्र गतम् इत्यर्थः। गुरुजनकृतस्यान्याय्याचरणस्यालोचना नितान्तमसङ्गतेति रामेणायमंशः परित्यक्त इति भावः।

(ख) सीतेति। जटासंयमनवृत्तान्तः जटाबन्धनघटनाचितम्।

लक्ष्मण इति। पुत्रेषु संक्रान्ता गता लक्ष्मी राजलक्ष्मीर्येषां तैः पुत्रेषु न्यस्तराज्यभारैरित्यर्थः वृद्धा इक्ष्वाकवः प्राचीना इक्ष्वाकुवंशीयास्तैः यत् व्रतं धृतम् आचरितम्, बाल्ये नव्ये वयसि आर्य्येण रामेण तत् पुण्यं पुण्यजनकम् आरण्यकं वनवासरूपं व्रतं नियमः धृतम् अवलम्बितम्। वानप्रस्थावलम्बनं प्रति वार्द्धक्यमेव प्रयोजकम्। तथा च स्मृतिः—

"गृहस्थस्तु यदा पश्येद्बलीपलितमात्मनः।
अपत्यपुत्रांस्तत्पुत्रांस्तदारण्यं समाविशेत् ॥"

मनुश्च—"वनं पञ्चाशतो व्रजेत्।"

किन्त्वत्र रामेण बाल्ये तदवलम्बितमिति महदाद्भुतविषयोऽयमिति भावः।

अत्र वार्द्धक्ये कर्त्तव्यस्य वानप्रस्थावलम्बनस्य बाल्ये करणात् असङ्गतिर्नामालङ्कारः। तथा च चन्द्रालोके—

---

(क) লক্ষ্মণ। (হাস্য করিয়া স্বগত) ও! আর্য্য (রামচন্দ্র), মধ্যমা মাতা কৈকেয়ীর বৃত্তান্ত গোপন করিলেন।

(খ) সীতা। এই জটাবন্ধনের বৃত্তান্ত।

सीता। एसा पसस्सपुसुसलिला भअवदी भाईरही (ग)।

रामः। देवि! रघुकुलदेवते! नमस्ते (घ)।

"तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात् प्लुष्टान् पुरा (१) प्रपितामहान्।
अगणिततनूपातं (२) तप्त्वा तपांसि भगीरथो
भगवति! तव स्पृष्टानद्भिश्चिरादुददीधरत्॥२३॥

(ग) एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।

"विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गतिः।
अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा॥"

वार्द्धक्यरूपकारणस्य रघुषु सत्त्वात् तत्कार्य्यरूपवानप्रस्थावलम्बनस्य तु बालके रामे सत्त्वात् साहित्यदर्पणमतेऽपि असङ्गतिरेव। तथा च—

"कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः।

इतीमत्यस्य विरुक्तावपि उद्देश्यप्रतिनिर्द्देश्याविषयत्वात् न पुनरुक्ततादोष॥२२॥

(ग) सीतेति। प्रसन्नं निर्म्मलम्, पुण्यं पवित्रञ्च सलिलं यस्याः सा।

(घ) राम इति। रघुवंश्यान् प्रति परमानुग्रहकारित्वेन तेषामुपास्यत्वात् गङ्गाया रघुकुलदेवतात्वं बोध्यम्।

नमस्कारार्हत्वं गङ्गाया माहात्म्यं रघुकुलं प्रत्यनुग्रहञ्चाह तुरगेति। भगीरथः सूर्य्य-वंशीयः कश्चन राजा सगराध्वरे सगरराजस्य शताश्वमेधयज्ञानां पूरणीभूते शेषाश्वमेधे

লক্ষ্মণ। রাজলক্ষ্মী, পুত্রের উপর সংক্রান্ত হইলে, ইক্ষ্বাকুবংশীয় প্রাচীনগণ, যে ব্রত ধারণ করিতেন, আর্য্য রামচন্দ্র বাল্যকালেই সেই পবিত্র বানপ্রস্থ ব্রত ধারণ করিয়াছিলেন। ২২॥

(গ) সীতা। নির্ম্মল পবিত্রজলা ভগবতী গঙ্গা এই।

(ঘ) রাম। দেবি! রঘুকুলের দেবতা! তোমাকে নমস্কার করি।

(१) पितामहानिति पाठान्तरम्। (२) अगणिततनूतापं इति पाठभेदः।

भा[illegible] इति शेषः, तुरगस्य तदश्वमेधीयाश्वस्य इन्द्रेणापहृतस्येत्यर्थः। विचये अन्वेषणे व्यग्रान् आसक्तान् उर्वीभिदः भूतलविदारणकारिणः अमर्षात् क्रोधात् कपिलस्य तदाख्यमुनेर्महसा तेजसा प्लुष्टान् दग्धान् प्रपितामहान् निजपितामतपितृवैमात्रेयान् तपांसि अगणितः अविचारितः तनुपातः शरीरनाशो यस्मिन् कर्म्मणि तद्यथा तथा तम्। देहनाशमप्यङ्गीकृत्य तपस्यां कृत्वेत्यर्थः, हे भगवति! माहात्म्यशालिनि गङ्गे! तव अम्बुजलैः स्पृष्टान् सतः चिरात् पुरा पूर्वम् उदद्दीधरत् उद्धारितवान् मोक्षं प्रापितवानित्यर्थः। अतस्त्वं नम इति भावः।

अत्र तृतीयचरणे तपसोरसकृतसाम्यात् वृत्त्यनुप्रासोऽलङ्कारः।

"पुरा प्रपितामहा"नित्यत्र क्वचित "पितुः प्रपितामहा"निति पाठो दृश्यते, स तु न समीचीनः। तथा च रामायणे—

"सगरादसमञ्जस्तु असमञ्जादथांशुमान्।
दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथः॥"

तेन असमञ्जस्य वैमात्रेयाः सगरपुत्रा भगीरथस्यैव प्रपितामहा भवन्ति, न तु तत् पितुरिति।

कदाचित् सगरराजेन शतमश्वमेधान् सङ्कल्प्य शेषाश्वमेधे प्रक्रान्ते "शताश्वमेधयाजी इन्द्रत्वं लभते" इति श्रुत्वा इन्द्रः स्वपदभ्रंशभयेन तमश्वमपहृत्य पाताले ध्यानस्थितस्य कपिलमुनेः समीपे कस्मिंश्चित् वृक्षे बबन्ध, अथ असमञ्जभिन्नाः सगरसन्तानास्तमश्वं स्वर्गे मर्त्ये च अन्विष्यन्तोऽप्राप्य भुवं विदार्य गत्वा पाताले तथाविधं बद्धमश्वमालोक्य अयमेव अश्वापहारक इति कपिलमेव हन्तुमुद्यताः, तेन च तद्विज्ञाय स्वतेजसा दग्धा इति पौराणिकी वार्त्ता।

तनुशब्दो दीर्घान्तोऽप्यस्ति। तथा चामरः—"स्त्रियां मूर्त्तिस्तनुस्तनूः।" हरिणी वृत्तम्॥२३॥

---

পূর্ব্বে আমার প্রপিতামহগণ, সগররাজার যজ্ঞে অশ্বের অন্বেষণে ব্যগ্র হইয়া, ভূতল ভেদ করিয়া, (পাতালে যাইয়া) ক্রোধবশতঃ কপিলের তেজে দগ্ধ হইয়াছিলেন। হে প্রভাববতি! তাহার পর ভগীরথ, দেহপাত গণনা না

सा त्वमम्ब! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव (ङ)।

लक्ष्मणः। एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम (च)।

(रामः सस्पृहमवलोकयति)

सीता। सुमरदि एदं पदेसं अज्जउत्तो? (छ)

रामः। अयि! कथं विस्मर्य्यते!

अलसललित (१) मुग्धान्यध्वसञ्जातखेदात्
अशिथिलपरिरम्भैर्दत्तसंवाहनानि।

(छ) स्मरत्येतं प्रदेशमार्य्यपुत्रः?

(ङ) सेति। अम्ब! मातः! स्नुषायां पुत्रवध्वाम्। शिवानुध्यानपरा मङ्गलचिन्तापरायणा।

(च) लक्ष्मण इति। भरद्वाजेन मुनिना आवेदितः परिचायितः चित्रकूटयायिनि चित्रकूटपर्वतगामिनि वर्त्मनि पथि। कालिन्दी यमुना।

---

করিয়া, তপস্যা করিয়া, তোমার অঙ্গস্পর্শে, চিরকালের পর তাঁহাদিগকে উদ্ধার করিয়াছিলেন ॥২৩॥

(ঙ) হে মাতঃ! সেই তুমি, অরুন্ধতীর ন্যায়, পুত্রবধূ সীতার প্রতি শুভানুধ্যানপরায়ণা হও।

(চ) লক্ষ্মণ। যমুনার তীরে চিত্রকূটগামী পথে, মহর্ষিভরদ্বাজনিবেদিত শ্যামনামক বটবৃক্ষ এই।

(রাম সস্পৃহ দৃষ্টিপাত করিতে লাগিলেন।)

(ছ) সীতা। আর্য্যপুত্র এই স্থান স্মরণ করিতেছেন কি?

---

(१) ललित इति क्वापि पाठः।

परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥२४॥

लक्ष्मणः । एष विन्ध्याटवीमुखे विराधसंवादः (१) (ज) ।

---

घटनाविवरणद्वारा विस्मृत्यभावं व्यनक्ति अलसेति । यत्र यस्मिन् प्रदेशे त्वम् अध्वनि पथि सञ्जातः गमनेनोत्पन्नः यः खेदः परिश्रमस्तस्मात् अलसानि जडानि लुलितानि शिथिलीभूतानि मुग्धानि सुन्दराणि, अशिथिलपरिरम्भैः गाढालिङ्गनैः दत्तं संवाहनं मर्द्दनं येषु तानि ; तथा परिमृदिता मर्द्दिता या मृणाल्यः क्षुद्रमृणालानि तद्वत् दुर्बलानि कार्य्याक्षमाणि अङ्गकानि अवयवान् मम उरसि वक्षसि कृत्वा स्थापयित्वा निद्राम् अवाप्ता गता आसीरिति शेषः ।

अत्र परिमृदितमृणालीदुर्बलानीति लुप्तोपमालङ्कारः ।

अलसलुलितमुग्धानीति त्रिपदकर्म्मधारयः, आद्यपदद्वयं कर्म्मधारयं कृत्वा कर्म्मधारयान्तरं वा । क्षुद्राणि मृणालानीति मृणाल्यः क्षुद्रार्थे मृणालादिशब्दानां नद्यादित्वाङ्गीकारात् ईप्रत्ययः । तथा चामरः—"स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यदि ।"

मालिनी वृत्तम्—"न-न-म-य-य-युतेयं मालिनी भोगिलोकै"रिति लक्षणात् ॥२४॥

(ज) लक्ष्मण इति । विन्ध्याटवीमुखे विन्ध्यपर्वतस्यारण्यद्वारे । विराधसंवादं विराधराक्षसवृत्तान्तः ।

---

রাম। ওহে! কি করিয়া বিস্মৃত হইব?

মর্দ্দিত মৃণালের ন্যায় তোমার অঙ্গসমূহ, পথের পরিশ্রমে অলস, শিথিল অথচ মনোহর হইয়াছিল এবং গাঢ় আলিঙ্গনদ্বারা আমি তাহাতে সংবাহন করিয়াছিলাম ; তুমি সেই সকল অঙ্গ আমার বুকের উপরে রাখিয়া যেখানে যেখানে নিদ্রা গিয়াছিলে ॥২৪॥

(জ) লক্ষ্মণ। বিন্ধ্যারণ্যের সম্মুখে এই বিরাধরাক্ষসের বৃত্তান্ত।

---

(१) संवाधः, संरोध इति पाठभेदौ ।

सीता। अलं दाव एदिणा। पेक्खामि दाव अज्जउत्तहत्थ-धरिदतालवेण्टादवत्तं अत्तणो दक्खिणारण्णप्पवेसारम्भं (झ)।

राम:। एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रमतरूणि तपोवनानि।
येष्वातिथेयपरमा: शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥२५॥

(झ) अलं तावदेतेन। प्रेक्षे तावदार्य्यपुत्रहस्तधृततालवृन्तातपत्रमात्मनो दक्षिणारण्य-प्रवेशारम्भम्।

(झ) सीतेति। एतेन विराधवृत्तान्तचित्रदर्शनेन। विशेषकौतुकावहत्वात् अग्रिम-मेव द्रष्टव्यमिति भाव:। अग्रिमं ब्रवीति आर्य्यपुत्रेति। प्रेक्षे पश्यामि। आर्य्यपुत्रेण हस्तेन धृतं मम मस्तकोपरि धृत्वा नीतं तालवृन्तातपत्रं छत्रं यस्मिन् तम्। दक्षिणारण्य-प्रवेशारम्भं तस्य चित्रमित्यर्थ:।

एतानीति। गिरिनिर्झरिणीनां पार्वत्यनदीनां तटेषु एतानि दृश्यमानानि तानि वैखानसानां वनवासिमुनिविशेषाणाम् आश्रमतरवो येषु तानि तथोक्तानि तपोवनानि चित्रितानीति शेष:, येषु तपोवनेषु आतिथेयपरमा: आतिथेयम् अतिथिसत्कार एव परमं प्रधानकर्त्तव्यं येषां ते, नीवारमुष्टिं मुष्टिपरिमितमुनिधान्यतण्डुलं पचन्ति ये ते नीवार-मुष्टिपचना: शमिन: अन्तरिन्द्रियनिग्रहशालिन: गृहिणो गृहस्था गृहाणि भजन्ते आश्रयन्ति ; येषु तपोवनेषु गृहस्था मुनय: सन्तीति निष्कर्ष:।

"वानप्रस्थो वैखानसोऽग्रह:" इति त्रिकाण्डशेष:। "नीवारं मुनिधान्यं स्यात्" इत्यमर:। उड़ीधान इति वङ्गभाषा।

"शमस्तु अन्तरिन्द्रियनिग्रह:" इति वेदान्तसार:।

(ঝ) সীতা। ইহা দেখিয়া প্রয়োজন নাই। দক্ষিণারণ্যে নিজের প্রবেশারম্ভ দেখি ; যাহাতে আর্য্যপুত্র (রাম) নিজ হস্তে তালপত্রের ছত্র ধারণ করিয়াছিলেন।

लक्ष्मणः। अयमविरलानोकहनिवहनिरन्तरस्निग्धनील-परिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सन्ततमभिष्यन्दमान-मेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम (ञ)।

"पर्वषु दारानिक्षिप्य वनं गच्छेत् सहैव वा" इति स्मृतेः सस्त्रीकवनवासिनः सन्तो गृहस्था इति बोध्यम।

वसन्ततिलका वृत्तम् ॥२५॥

(ञ) लक्ष्मण इति। अयमित्यङ्गुल्या निर्द्दिष्टः अविरला घना ये अनोकहाः वृक्षाः तेषां निवहेन समूहेन निरन्तरम् अवकाशरहितं स्निग्धं मसृणं नीलं श्यामवर्णञ्च यत् परिसरारण्यं ग्रामसीमास्थितं वनं तेन परिणद्धा उभयतीरयोः परिवेष्टिता या गोदावरी तदाख्या नदी तया तस्यास्तरङ्गाघातशब्दादिनेत्यर्थः मुखरं शब्दायमानं कन्दरं गुहा यस्य स तथोक्तः सन्ततम् अनवरतम् अभिष्यन्दमानैः वर्षद्भिः मेघैः मेदुरितः स्निग्धीकृतः नीलिमा श्यामलत्वं यस्य स तथोक्तः। जनस्थानस्य दण्डकारण्यप्रदेशविशेषस्य मध्यगः मध्यवर्त्ती प्रस्रवणो नाम गिरिः पर्वतः विचित इत्यर्थः।

"अनोकहः कुठः सालः" "पर्य्यन्तभूः परिसरः" इति चामरः।

मेदुरित इति मेदुरः कृत इति इतन्तात् कर्म्मणि क्तः।

अभिनयप्रतिकूलमीदृशं दीर्घसमासयोजनमेव भवभूतिप्रबन्धेषु महान् दोष इति काव्यज्ञा आलङ्कारिकाश्च वदन्ति।

---

রাম। যাহাতে বনবাসী মুনিগণের আশ্রমবৃক্ষ ছিল, পার্ব্বত্য নদীর তীরে এই সেই সকল তপোবন; যে সকল তপোবনে অতিথিসৎকার-পরায়ণ ও শান্তচিত্ত গৃহী মুনিগণ, মুষ্টিপরিমিত উড়ীধান্যের তণ্ডুল পাক করিয়া (আহার করতঃ) গৃহ আশ্রয় করিয়া থাকেন॥২৫॥

(ঞ) লক্ষ্মণ। জনস্থানের মধ্যবর্ত্তী এই প্রস্রবণনামক পর্ব্বত; সর্ব্বদা বর্ষণকারী মেঘসমূহ, ইহার নীলবর্ণকে বিশেষ স্নিগ্ধ করিয়াছিল এবং গোদাবরী নদীর তরঙ্গের আঘাতে উহার গুহা শব্দায়মান হইয়াছিল;

राम:। स्मरसि सुतनु! तस्मिन् पर्वते लक्ष्मणेन
प्रतिविहितसपर्य्यासुस्थयो-(१) स्तान्यहानि
स्मरसि सुरसनीरां (२) तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्त्तनानि ॥२६॥

अपि च,

किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥२७॥

---

स्मरसीति। शोभना तनुर्यस्या इति सुतनूः तस्याः सम्बोधनम्। तस्मिन् पर्वते प्रस्रवणे लक्ष्मणेन प्रतिविहितया कृतया सपर्य्यया पूजया खाद्यानयनभयनिवारणादि-शुश्रूषयेत्यर्थः सुस्थयोः उत्पातशून्ययोस्तानि अहानि स्मरसि किमिति काकुः, वा किंवा तत्र प्रदेशे सुरसनीरां सुस्वादुजलां गोदावरीं नदीं स्मरसि? तथा तदुपान्तेषु आवयोः तव मम च वर्त्तनानि अवस्थानानि च स्मरसि किमित्यर्थः।

अत्र स्मरसीत्येकस्यैव पदस्य वारं वारमुक्त्या अनवीकृतत्वदोषः, स च तृतीयपादे सुमुखीति चतुर्थपादे च सुखकरेति पाठेन समाधेयः। मालिनी वृत्तम् ॥२६॥

গোদাবরী নদীর উভয় তীরের প্রান্তভাগই বনসমূহে ব্যাপ্ত ছিল; ঘন ঘন বৃক্ষসমূহে সেই বনগুলিকে নিবিড় ও স্নিগ্ধ করিয়াছিল।

রাম। সুন্দরি! আমরা সেই পর্ব্বতে লক্ষ্মণের পরিচর্য্যায় সুস্থভাবে ছিলাম; এই অবস্থায় আমাদের সেই দিনগুলিকে স্মরণ করিতেছ কি? আর সেখানে স্বাদুজলা গোদাবরীকে মনে করিতেছ কি? এবং গোদাবরীর নিকটে আমাদের অবস্থানের স্মরণ হইতেছে কি? ॥২৬॥

---

(१) स्वस्थयोरिति पाठान्तरम्। (२) सुरसतीरामिति पाठभेदः।

लक्ष्मणः। एषा पञ्चवट्यां शूर्पणखा (ट)।

किमपीति। आसत्तियोगात् सन्निधानवशात् मन्दं मन्दम् अल्पमल्पं किमपि किमपि कदाचिदेतत् कदाचिदन्यत् अधारावाहिकैकविषयमिति यावत् अक्रमेण पर्य्यायराहित्येन, कश्चित् जिज्ञासते, परश्चापरः उत्तरं ददातीत्येव क्रमः; तत्र न आविश्वासिप्रयात् कदाचिदुभावेव जिज्ञासितवन्तौ कदाचिदुभावेव वा उत्तरं दत्तवन्तौ इत्येवं रूपेणेत्यर्थः, अविरलितौ परस्परमिलितौ कपोलौ गण्डौ यस्मिन् कर्म्मणीति अविरलितकपोलं यथा तथा जल्पतोरनावश्यकविषयं ब्रुवतोः, तथा अशिथिलपरिरम्भे गाढ़ालिङ्गने व्यापृतौ आसक्तौ एकैकस्य परस्परस्य दोषौ बाहू ययोः तयोस्तथोक्तयोरावयोः सम्बन्धे रात्रिः, अविदितम् अज्ञातं यथा स्यात् तथा, गता यामाः प्रहरा यस्या सा तथोक्तैव व्यरंसीत् विरता प्रभाता आसीदित्यर्थः। सुखसागरमग्नानां हि दीर्घकालोऽपि भोगेन तत्प्रभावात् अल्प इव प्रतिभातीति भावः।

अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः।

विरलः 'फाँक्' इति यस्य वङ्गभाषा, स कृत इति इतन्तात् कर्म्मणि क्तः, ततो नञ्-समासः। किमपि किमपीति वीप्सायां द्विर्वचनम्। मालिनी वृत्तम् ॥२७॥

(ट) लक्ष्मण इति। पञ्चानां वटानां समाहार इति पञ्चवटी। इदन्तु अर्थ-प्रदर्शनमात्रम्, वास्तविकन्तु पञ्चाम्रादिवत् पञ्चविधवृक्षविशेषेषु पञ्चवटीशब्दो रूढ़ इति। यथा हेमाद्रिधृतं स्कन्दपुराणम्—

"अश्वत्थो विल्ववृक्षश्च वटधात्र्यावशोककः।
वटीपञ्चकमित्युक्तं स्थापयेत् पञ्चदिक्षु च॥

আরও, নিকট বলিয়া, আমরা অপর্য্যায়ক্রমে কোন কোন বিষয়, ছোট ছোট করিয়া বলাবলি করিতেছিলাম; তখন আমাদের কপোলযুগল পরস্পর সংলগ্ন ছিল এবং পরস্পরের বাহুযুগল, গাঢ় আলিঙ্গনে ব্যাপৃত ছিল; এই অবস্থায় প্রহরগুলি যে চলিয়া যাইতেছিল, তাহা আমরা জানিতে পারিয়াছিলাম না এবং সেইভাবেই রাত্রি প্রভাত হইয়াছিল ॥২৭॥

सीता । हा अज्जउत्त ! एत्तिअं ज्जेव दंसणं (ठ) ।

रामः । अयि विप्रयोगत्रस्ते ! चित्रमेतत् (ड) ।

सीता । जहा जहा होदु, दुज्जणो असुहं उप्पादेइ (ढ) ।

रामः । हन्त ! वर्त्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति (ण) ।

---

(ठ) हा आर्य्यपुत्र ! एतावदेव दर्शनम् ।

(ढ) यथा तथा भवतु, दुर्ज्जनोऽसुखमुत्पादयति ।

---

अश्वत्थं स्थापयेत प्राचि विल्वमुत्तरभागतः ।
वटं पश्चिमभागे तु धात्रीं दक्षिणतस्तथा ॥
अशोकं वह्निदिक्स्थाप्यं तपस्यार्थं सुरेश्वरि ! ।
मध्ये वेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम् ॥"

(ठ) सीतेति । एतावत् एतत्कालपर्य्यन्तम्, दर्शनं साक्षात्कारः तवेति शेषः । अविकलचित्रदर्शनात् समुत्पन्नतत्तद्भावेन चित्रमेतदिति विस्मृत्य यथार्थैवेयं घटनेति मन्यमाना सीता पुनरपि पूर्व्ववद्भविष्यतीति मत्वा एवमाहेति बोध्यम । पूर्व्वमपि शूर्पणखा-दर्शनानन्तरमेव सीता हृतेत्यनुसन्धेयम् ।

(ड) राम इति । अयीति सानुनयसम्बोधनम् । विप्रयोगत्रस्ते ! मम विच्छेद-भीते ! एतत् दृश्यमानम्, चित्रम् आलेख्यं न तु वास्तविकघटनेयमिति भयं न करणीयमिति भावः ।

(ढ) सीतेति । यथा तथा चित्रं प्रकृतं वा । यथार्थमिव अविकलं दुर्ज्जन-चित्रमपि तद्भावस्मारकत्वात् असुखं जनयतीत्यर्थः ।

---

(ट) লক্ষ্মণ । এই পঞ্চবটীতে শূর্পণখা ।

(ঠ) সীতা । হা আর্য্যপুত্র ! এই পর্য্যন্তই দর্শন ।

(ড) রাম । অয়ি বিয়োগভীতে ! এটা চিত্র ।

(ঢ) সীতা । যাহা তাহা হউক ; দুর্জন, দুঃখ উৎপাদন করে ।

रामः। अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणै-(१) रार्य्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥२८॥

(ख) राम इति। हन्तेति विषादसूचकमव्ययम्। वर्त्तमान इव अतीतोऽपीति शेषः। प्रतिभाति ज्ञानविषयो भवतीत्यर्थः अविकलचित्रदर्शनादिति भावः।

अथेदमिति। अथेत्यपि विषादसूचकमव्ययम्। पापैः पापाचारिभिः रक्षोभिः मारीचरावणादिभिः राक्षसैः कनकहरिणस्य सुवर्णमयमृगस्य यत् छद्म छलं तस्य विधिना तदादिकार्य्यकरणेनेत्यर्थः। तथा तत्प्रकारमिदं वृत्तं भूतं घटनमित्यर्थः यथा क्षालितमपि सवंशमारीचरावणादिवधेन सम्पूर्णं परिशोधितमपि व्यथयति स्मरणात् दुःखं ददाति तद्घटनमित्यर्थः। शून्ये तदवस्थानुभवकारिजनरहिते जनस्थाने विकलकरणैः विकलानि स्वस्वकार्य्याक्षमाणि करणानि रामस्यैव हस्तपदादीन्द्रियाणि येषु तैः आर्य्यस्य रामस्य चरितैः भूतलावलुण्ठनादिव्यापारैः ग्रावापि पाषाणोऽपि रोदिति क्रन्दतीव, तथा वज्रस्यापि हृदयं वक्षः कर्त्तृ दलति विदीर्य्यत इव। गुरुगभीरशोकावेगेन रामः अवश आसीदिति निष्कर्षः।

अत्र रोदिति दलतीत्यत्र इवशब्दाभावात् भावाभिमानिप्रतीयमानक्रियोत्प्रेक्षाद्वयम्, तेन च रामस्य शोकावेगोऽतीव महानिति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

"अथ स्यान्मङ्गले प्रश्ने कार्य्यारम्भविषादयो"रित्यादि मेदिनी। "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि।" "पाषाणः प्रस्तरग्रावोपलाश्मानः शिला दृष"दिति चामरः।

रोदिति दलतीति "प्रयोगतश्चे"ति वर्त्तमाना। रक्षोभिरिति करणे तृतीया। वृत्तमिति कर्त्तरि क्तः।

शिखरिणी वृत्तम्—"रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी"ति लक्षणात् ॥२८॥

(ग) राम। हाय! জনস্থানের বৃত্তান্ত যেন আমার বর্তমান বলিয়া বোধ হইতেছে।

(१) करुणैः इति पाठभेदः।

सीता। (सास्रम्) अइ देव! रहुउलाणन्द! एव्वं वि मम कारणादो किलिन्तो (१) आसी (त)।

लक्ष्मणः। (रामं निर्वर्ण्य साकूतम्) आर्य्य! किमेतत् (थ)?

अयं ते वाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति विरसाध्मातहृदयः (२) ॥२८॥

(त) अयि देव! रघुकुलानन्द! एवमपि मम कारणात् क्लान्त आसीः।

(त) सीतेति। कारणात् निमित्तात्। क्लान्तः क्लिष्ट आसीः त्वमिति शेषः। अतएव अहमधन्येति भावः।

(थ) लक्ष्मण इति। निर्वर्ण्य दृष्ट्वा। साकूतं साभिप्रायं कथमिदानीमपि रामो रोदितीत्यभिप्रायेण सहेत्यर्थः।

লক্ষ্মণ। হায়! পাপাত্মা রাক্ষসগণ, সুবর্ণ-হরিণের ছল করিয়া, তেমন ঘটনাই করিয়াছিল; যাহা পরিশোধ করিলেও দুঃখ জন্মায়। নির্জ্জন জনস্থানে, ইন্দ্রিয় সকল যাহাতে বিকল হইয়াছিল, সেইরূপ আর্য্যের (রামচন্দ্রের) চরিত্রে পাষাণও যেন রোদন করিয়াছিল এবং বজ্রের হৃদয়ও যেন বিদীর্ণ হইয়াছিল ॥২৮॥

(ত) সীতা। (অশ্রুপাতের সহিত) অয়ি দেব! রঘুকুলের আনন্দ-জনক! আমার জন্য আপনি এইরূপই ক্লিষ্ট হইয়াছিলেন।

(থ) লক্ষ্মণ। (রামকে দেখিয়া, বিশেষ অভিপ্রায়ের সহিত) আর্য্য! এ কি?

(१) कलिदो, किलिट्ठो, किलिदो इति च पाठान्तरम्।

(२) भवति च भराध्मातहृदयः इति पाठान्तरम्।

रामः । वत्स !

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढ़ः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्म्मव्रण इव वेदनां करोति (१) ॥३०॥

---

अयमिति । त्रुटितः छिन्नः मुक्तामणिसरः मुक्तारत्नमाल्यमिव अयं दृश्यमानः ते तव वार्य्यौघः अश्रुप्रवाहः धाराभिः अविच्छिन्नपातैः विसर्पन् बहिर्गच्छन् जर्ज्जराः भूमौ पतनेन क्षुद्रक्षुद्रांशतया विभक्ताः कणा बिन्दवो यस्य स तादृशः सन्, धरणीं भूतलं लुठति आश्लिष्यति । विरसेन विरागेण अप्रियत्वेन दुःखेनेति यावत्, आध्मातं परिपूरितं हृदयं यस्मिन् स तथोक्तः आवेगः शोकवेगः निरुद्धोऽपि हृदयमध्ये आबद्धोऽपि स्फुरत् स्पन्दमानम् अधरयोः नासायाश्च पुटं यस्य स तथोक्तः तस्य भावः स्फुरदधरनासापुटता तया परेषाम् अन्येषाम् उन्नेयः अनुमेयो भवति । तव अधरद्वयं नासाद्वयञ्च कम्पत इति दृष्ट्वा परैरनुमीयते, यत्तव हृदये महान् शोकावेगो वर्त्तत इत्यर्थः ।

अत्रोपमालङ्कारः । केचित्तु द्वितीयार्द्धे अनुमानालङ्कारं वदन्ति ।

"मरौ दध्यग्रगन्धश्रीभावमान्नासमीरणः" इति मेदिनी । "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः ।

परेषामिति "वा कर्त्तरि कृत्य" इति कर्त्तरि षष्ठी । शिखरिणी वृत्तम् ॥२९॥

तत्कालमिति । प्रियजनस्य सीतायाः विप्रयोगात् विरहात् जन्म यस्य स तथोक्तः तीव्रोऽपि तीक्ष्णोऽपि प्रतिकृतिवाञ्छया प्रतिकारेच्छया तत्कालं सीताहरणात् परस्मिन्

আপনার এই অশ্রুজলসমূহ, ছিন্ন মুক্তামালার ন্যায় ধারারূপে বহির্গত হইয়া, জর্জর অবস্থায় ভূতলে লুণ্ঠিত হইতেছে এবং শোকাবেগ রুদ্ধ করিলেও, নাসিকা কম্পিত হইতেছে বলিয়া, অন্যের তাহা অনুমিত হয় এবং আপনার হৃদয়, দুঃখে পরিপূর্ণ হইয়াছে (ইহাও বুঝা যায়) ॥২৯॥

---

(१) तनोति इति पाठान्तरम् ।

सीता। हद्धी हद्धी, अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्तसुस्सं विअ अत्ताणं पेक्खामि (द)।

लक्ष्मणः। (स्वगतम्) भवतु, अन्यतः क्षिपामि। (चित्रमवलोक्य प्रकाशम्) अथैतन्मन्वन्तरपुराणस्य गृध्रराजस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् (ध)।

(द) हा धिक्, हा धिक्, अहमपि अतिभूमिं गतेन रणरणकेन आर्य्यपुत्रशून्यमिवात्मानं प्रेक्षे।

काल इत्यर्थः, विसोढः सह्यः कृतः पुनर्विपच्यमानः चित्रदर्शनात् पुनरभ्युद्गीर्णः दुःखाग्निः हृन्मर्म्मव्रण इव वघर्मा मध्यगतस्फोटक इव मनसि वेदनां करोतीति।

अत्रोपमालङ्कारः। प्रहर्षिणी वृत्तम् ॥३०॥

(द) सीतेति। हाधिगित्येकमेव विषादसूचकमव्ययम्, तस्यातिशयार्थे द्विर्वचनम्, अतिभूमिं गतेन आधिक्यं प्राप्तेन अतिमहतेत्यर्थः, रणरणकेन उत्कण्ठया।

अत्रोत्कण्ठया रामविरहवदनुभवेन सीताया भविष्यतो वास्तविकविरहस्य सूचनात् सामान्यपताकास्थानमेतत्। तथा च साहित्यदर्पणः—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥"

"अतिभूमिराधिक्य"मिति शब्दकल्पद्रुमः। "रणरणक उत्कण्ठे"ति हेमचन्द्रः।

(ध) लक्ष्मण इति। भवतु, स्वर्णमृगादिचित्रदर्शनेनैव समाप्तं भवतु इत्यर्थः,

রাম। বৎস! সেই সময়ে প্রিয়জনের (সীতার) বিরহ হইতে উৎপন্ন দুঃখানল, তীব্র হইলেও, প্রতিকার করিবার ইচ্ছায় সহ্য করিয়াছিলাম; কিন্তু এখন হৃদয়ে পরিপক্ক হইয়া তাহা হৃদয়ের মর্ম্মস্থানে ব্রণের ন্যায় বেদনা জন্মাইতেছে ॥৩০॥

(দ) সীতা। হায়! হায়! আমিও অত্যন্ত উৎকণ্ঠাবশতঃ আপনাকে যেন আর্য্যপুত্রশূন্য বলিয়া মনে করিতেছি।

सीता। हा ताद! णिव्वूढो दे अपच्चसिणेहो (न)।

रामः। हा तात! काश्यप! शकुन्तराज! क्व पुनस्त्वादृशस्य महतस्तीर्थस्य साधोः सम्भवः? (प)।

(न) हा तात! निर्व्यूढस्ते अपत्यस्नेहः।

एतच्चित्रदर्शनेन तत्तद्घटनास्मरणादनयोरत्यन्तव्याकुलत्वादिति भावः। अन्यतः अन्यघटनायाश्चित्रे क्षिपामि सञ्चारयामि सीतारामयोश्चक्षुषी इत्यर्थः। अथेति व्यापारान्तरचित्रदर्शनारम्भे। एतत् दृश्यमानम्। मन्वन्तरं देवपरिमाणेनैकसप्ततियुगानि तादृशं पुरा कालं वर्त्तते इति मन्वन्तरपुराणम्तस्य। गृध्रराजस्य पक्षिराजस्य, तातस्य दशरथस्य मित्रत्वात्तातस्थानीयो जटायुस्तस्य। चरित्रं निस्वार्थभावेन सीतारक्षणोद्यमादिपरोपकारादिकम्, विक्रमः रावणेन सह युद्धोपयोगिमहाशक्तिः तयोरुदाहरणं निदर्शनं तस्य चित्रमित्यर्थः।

(न) सीतेति। अपत्यस्नेहः सन्तानवात्सल्यं निर्व्यूढः सम्पन्नो जातः सन्तानरूपाया मम रक्षार्थं प्राणत्यागादिति भावः।

(प) राम इति। तात! पितृसखत्वात् पितः! काश्यप! कश्यपप्रजापतिपौत्र! स्वपत्न्यां विनतायां कश्यपस्य द्वौ पुत्रौ बभूवतुः अरुणो गरुडश्च, तयोररुणस्यापि द्वौ पुत्रौ सम्पातिर्जटायुश्च इति रामायणवार्त्तानुसन्धेया। शकुन्तराज! पक्षिश्रेष्ठ! तीर्थस्य विद्यापरोपकारादिगुणयुक्तपात्रस्य, साधोर्धार्म्मिकस्य सम्भव उत्पत्तिः। न कुत्रापीत्यर्थः।

"तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बु, पात्रोपाध्यायमन्त्रिषु॥" इति मेदिनी।

(ध) लक्ष्मण। (স্বগত) হউক, ইঁহাদের দৃষ্টি অন্য দিকে সঞ্চালিত করি। (চিত্র দেখাইয়া প্রকাশ্যে) মন্বন্তরের প্রাচীন, পক্ষিরাজ, মাননীয় এবং পিতৃস্থানীয় জটায়ুর চরিত্র ও পরাক্রমের নিদর্শন এই।

(ন) সীতা। হা পিতঃ! আপনার সন্তানস্নেহ সম্পন্ন হইয়াছে।

(প) রাম। হা পিতঃ! কশ্যপবংশীয়! পক্ষিরাজ! আপনার ন্যায় মহাগুণবান্ সাধু ব্যক্তির আর কোথায় উৎপত্তি হইবে?

लक्ष्मणः। अयमसौ जनस्थानपश्चिमत-(१) श्चित्रकुञ्जन्-नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभूभागः, तदिदमृष्यमूक-पर्व्वते मतङ्गस्याश्रमपदम्, इयञ्च श्रमणा नाम सिद्धशवरी, तदेतत् पम्पाभिधानं सरः-(फ)।

सीता। जत्थ किल अज्जउत्तेण विच्छड्डिदामरिसाधीणं (२) पमुत्तकण्ठं रुदिअं आसी (ब)।

(ब) यत्र किलार्य्यपुत्रेण विच्छर्द्दितामर्षाधीनं प्रमुक्तकण्ठं रुदितमासीत्।

(फ) लक्ष्मण इति। अयमङ्गुल्या निर्द्दिष्टः असौ सः। तच्छब्दसमानार्थोऽयमदः-शब्दः। तथा च दर्पणः—"इदमेतददःशब्दास्तच्छब्दसमानार्थतया विधेया एव भवितुं युक्ताः।" इति। चित्रम् आश्चर्य्यं कुञ्जं लताद्याच्छादितस्थानमस्यास्तीति चित्रकुञ्जवान्। दनुकबन्धेन मस्तकशून्यशरीरधारिणा केनचित् दैत्येन अधिष्ठित आश्रितः। मतङ्गस्य तदाख्यस्य मुनेः आश्रमपदं तपोवनम्। श्रमयति तपस्यार्थमात्मानं या सा श्रमणा। सिद्धशवरी तपःसिद्धा काचन नीचजातीयरमणी। पम्पा अभिधानं नाम यस्य तत् सरः दीर्घिका। अस्य तीरजातफलविशेष एव 'पिपे' इत्युच्यत इति लोकप्रवादः।

(ब) सीतेति। यत्र पम्पासरसि। विच्छर्द्दितः वृद्धिं प्राप्तः योऽमर्षः असहिष्णुता तदधीनं सीताविच्छेदविह्वलत्वप्रयुक्तमित्यर्थः। प्रमुक्तः अनिरुद्धः यावद्वहिर्भवितुमर्हति तावद्वहिर्गत इत्यर्थः कण्ठः स्वरो यस्मिन् तत् उच्चैःस्वरमित्यर्थः।

(फ) লক্ষ্মণ। জনস্থানের পশ্চিমে দনুকবন্ধকর্তৃক অধিষ্ঠিত চিত্রকুঞ্জবান্ নামক এই সেই দণ্ডকারণ্যভূভাগ; ঋষ্যমূকপর্ব্বতে এই সেই মতঙ্গমুনির আশ্রমস্থান; শ্রমণানাম্নী সিদ্ধশবরী এই এবং এই সেই পম্পানামে সরোবর।

(१) जनस्थानपश्चिम इति क्वापि पाठः।

(२) विच्छित्तामरिसाधीणं, विसज्जिदामरिसधीरत्तणं इति पाठभेदौ।

रामः। देवि! रमणीयमेतत् पम्पासरः।
एतस्मिन् मदकलमल्लिकाख्यपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः।
वाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो भुवो विभागाः ॥३१॥

लक्ष्मणः। अयमार्य्यो हनूमान्।

एतस्मिन्निति। एतस्मिन् पम्पासरसि मदकला मदमत्ता ये मल्लिकाख्याः पक्षिविशेषाः तेषां पक्षैः व्याधूतानि कम्पितानि स्फुरन्ति प्रकाशमानानि उरुदण्डानि वृहन्मृणालानि पुण्डरीकाणि पद्मानि येषु ते तथोक्ताः कुवलयिनः उत्पलविशिष्टाः भुवो विभागाः भूप्रदेशाः, वाष्पाम्भसाम् अश्रुणां परिपतनं क्षरणम् उद्गमः पुनरुत्पत्तिः तयोरन्तराले मध्ये, एकः वाष्पाम्बुविन्दुः पतितः यावदन्य उत्पद्यते तावत्कालमध्य इत्यर्थः संदृष्टाः अवलोकिताः मयेति शेषः। तदानीं तव विरहदुःखेन अविरतमेव मया रुदितं किन्तु तथापि अत्यन्तमनोहरत्वात् तत्प्रदेशा दृष्टा इति भावः।

अत्र दण्डपुण्डेति व्यञ्जनसङ्घस्य अनेकधा साम्यात् छेकानुप्रासोऽलङ्कारः।

प्रहर्षिणी वृत्तम् ॥३१॥

---

(ব) সীতা। যেখানে আর্য্যপুত্র, অত্যন্ত অসহিষ্ণুতাবশতঃ মুক্তকণ্ঠে রোদন করিয়াছিলেন।

রাম। দেবি! এই পম্পাসরোবর বড়ই মনোহর।

অশ্রুজলের পতন এবং পুনর্ব্বার উৎপত্তি ইহার মধ্যসময়ে এই সরোবরের মধ্যস্থানগুলি দেখিয়াছিলাম; এই স্থানসমূহে বহুতর উৎপল ও পদ্ম ছিল; পদ্মগুলির আবার বৃহৎ দণ্ড সকল প্রকাশ পাইয়াছিল; সেই দণ্ডগুলি আবার মদমত্ত মল্লিকাপক্ষিগণের পক্ষপবনে কম্পিত হইতেছিল ॥৩১॥

লক্ষ্মণ। এই আর্য্য হনূমান্।

सीता । एसो सो चिरणिव्विसजीअलोअपच्चुद्धरणगुरुओवआरी महाणुभावो मारुदी (भ) ।

राम: । दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धन: ।

यस्य वीर्य्येण कृतिनो वयञ्च भुवनानि च ॥३२॥

सीता । वच्छ ! एसो कुसुमिदकअम्बतरुतण्डविदवरहिणो किस्सामधेओ गिरी ? जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसर-

(भ) एष स चिरनिर्विण्णजीवलोकप्रत्युद्धरणगुरुकोपकारी महानुभावो मारुति: ।

(भ) सीतेति । चिरनिर्विणस्य अन्यकृतापमानादिभिरवज्ञातस्य जीवलोकस्य प्रत्युद्धरणेन तत्तद्‌दु:खविनाशेन गुरूपकारी महोपकारी महानुभावो महाप्रभावो मारुति: मारुतस्य वायोरपत्यं हनूमान । धन्योऽयमिति भाव: ।

दिष्ट्येति । दिष्ट्यानन्दसूचकमव्ययम् । अयं दृश्यमान: स प्रसिद्ध: महाबाहु: विशालभुजबलशाली अञ्जनानन्दवर्द्धन: पुत्रत्वेन अञ्जनाख्याया वानर्या: सुखवर्द्धिकर: हनूमानित्यर्थ: । यस्य हनूमतो वीर्य्येण बलेन वयञ्च भुवनानि च कृतिन: सीतोद्धारेण जगद्वैरिरावणवधेन च सफलकामा इत्यर्थ:, हनूमतो बाहुबलेन सीता उद्धारिता रावणश्च हत इति भाव: ।

अत्र भुवनानि चेत्यनेन "कृतीनि" इत्यध्याहृत्यान्वय: कार्य्य: अन्यथा "नपुंसकानपुंसकयोर्नपुंसकमेकवद्वा" इत्यनेन कृतिन इत्यस्य नपुंसकत्वमेव स्यात् । अतएवात्र न्यूनपदत्वदोष:, स तु "वयञ्च जगतो जना" इति पाठेन समाधेय: । तथा पाठे तुल्ययोगितालङ्कारश्च स्यात् ॥३२॥

(ভ) সীতা । চিরদুঃখিত জীবলোকের উদ্ধার করায় গুরুতর উপকারী ও মহাপ্রভাবশালী এই সেই হনূমান্ ।

রাম । ভাগ্যবশতঃ মহাবাহু ও অঞ্জনার আনন্দবৰ্দ্ধক এই সেই হনূমান্‌কে দেখিতেছি, যাহার বলে আমরাও কৃতার্থ হইয়াছি, ত্রিভুবনও কৃতার্থ হইয়াছে ॥৩২॥

सीदो मुहुत्तं मुच्छन्तो तुए परुदिएण (१) अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो (म)।

लक्ष्मणः। सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन्
नीलः स्निग्धः (२) श्रयति शिखरं नूतनस्तोयवाहः।

रामः। वत्सैतस्माद्विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥३३॥

(म) वत्स ! एष कुसुमितकदम्बतरुताण्डवितबर्हिणः किं नामधेयो गिरिः ? यत्र अनुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मुहूर्त्तं मूर्च्छन् त्वया प्ररुदितेन अवलम्बितस्तरुतले आर्य्यपुत्र आलिखितः।

(म) सीतेति। कुसुमान्येषां जातानीति कुसुमिताः पुष्पिता ये कदम्बतरवस्तेषु ताण्डवान्येषां जातानीति ताण्डविता नृत्यन्तः बर्हिणो मयूरा यत्र स तथोक्तः। यत्र गिरौ तरुतले अनुभावेन तेजसा यत् सौभाग्यं सौन्दर्य्यं तन्मात्रं परिशेषम् अवशिष्टं यत्र तादृशी धूसरा पाण्डुवर्णा श्रीः शोभा यस्य सः कृशाङ्गोऽपि स्वाभाविकतेजःसम्पन्न इत्यर्थः। मुहूर्त्तं मूर्च्छन् कियन्तं कालम् अचेतनो भवन् प्रकृष्टं रुदितं यस्य तेन अतीवक्रन्दता त्वया अवलम्बितः धृतः। आलिखितश्चित्रितः।

'मयूरो बर्हिणो बर्ही'ति "ताण्डवं नटनं नाट्य"मिति चामरः।

सोऽयमिति। ककुभैरर्जुनपुष्पैः सुरभिः शोभनगन्धोपेतः माल्यवान् नाम अयं

(म) सीता। বৎস! যেখানে পুষ্পিত কদম্বৃক্ষের উপরে ময়ূরগণ নৃত্য করিতেছে, ইহা কিংনামক পর্ব্বত ? যাহাতে প্রভাব ও সৌন্দর্য্যমাত্র অবশিষ্ট এবং ধূসরকান্তি আর্য্যপুত্র কিছুকাল মূর্চ্ছিত হইতেছেন, আর তুমি রোদন করিতে করিতে উঁহাকে ধরিয়া রাখিয়াছ ; এই অবস্থায় বৃক্ষের তলে আর্য্যপুত্রকে চিত্র করিয়াছে।

(१) परुण्णेण इति पाठान्तरम्। (२) नीलस्निग्ध इति पाठान्तरम्।

लक्ष्मणः। अतः परमार्य्यस्य तत्रभवतां कपिराक्षसानाम् असंख्यातान्युत्तरोत्तराणि कर्म्माश्चर्य्याणि, परिश्रान्ता चेयमार्य्या, तद्विज्ञापयामि विश्रम्यतामिति (१) (य)।

दृश्यमानः स प्रसिद्धः शैलः पर्वतः, नूतनः अचिरपूर्णजलः अतएव नीलः श्यामलः स्निग्धः चिक्कणश्च तोयवाहः मेघः यस्मिन् यस्येत्यर्थः शिखरं शृङ्गं श्रयति अवलम्बते।

वत्स! लक्ष्मण! एतस्मात् माल्यवत्पर्वतचित्रदर्शनात् विरम विरम निवर्त्तस्व निवर्त्तस्व। कथमित्याह अतः परं न क्षमो न शक्तोऽस्मि द्रष्टुमिति शेषः।। अत्र हेतुमाह, पूर्वानुभूतः मे मम जानकीविप्रयोगः सीताविरहः पुनः प्रत्यावृत्त इव प्रत्युपस्थित इव।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, स तु वाक्यार्थहेतुककाव्यलिङ्गेन सङ्कीर्य्यते।

"इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः। "हरीतक्याः फलानी"तिवत् ककुभशब्दस्य पुष्पार्थेऽपि वृत्तिः। यस्मिन्नित्यस्यैव यस्येत्यर्थः। "तथा च षष्ठीसप्तम्योरर्थं प्रति भेदो नास्ति। यथा—वृक्षस्य शाखा वृक्षे शाखे"ति विलोचनः।

मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ गौ ययुग्म"मिति लक्षणात् ॥३३॥

(य) लक्ष्मण इति। आर्य्यस्य भवतः। कपिर्वानरः। असंख्यातानि संख्यारहितानि बहूनि। उत्तरोत्तराणि क्रमिकाणि कर्म्माश्चर्य्याणि सुग्रीवसख्यबालिवधसमुद्रलङ्घनादिमहाद्भुतानि कर्म्माणीत्यर्थः। "आहिताग्न्यादिषु वा पर"मितीति आश्चर्य्य-

লক্ষ্মণ। অর্জ্জুনপুষ্পে সুগন্ধি এই সেই মাল্যবান্ নামে পর্ব্বত; নীল ও স্নিগ্ধ নূতন মেঘ, যাহার শৃঙ্গ আশ্রয় করিতেছে।

রাম। বৎস! এখান হইতে বিরত হও; ইহার পর আমি দেখিতে সমর্থ হইতেছি না; কারণ, পুনরায় যেন সীতার বিরহ, আমার নিকট ফিরিয়া আসিতেছে ॥৩৩॥

(१) विश्राम्यतामिति पाठभेदः।

तत् किमत्र मन्दभाग्यः करोमि। (विमृश्य सकरुणम्) अथवा, किमन्यत् (भ)।

सतां केनापि कार्य्येण लोकस्याराधनं व्रतम्।
यत् पूरितं (१) हि तातेन माञ्च प्राणांश्च मुञ्चता ॥४१॥

---

परगृहवासदूषणं दैवदुर्विपाकात् दुरदृष्टपरिणामात् अलर्कस्य छिन्नकुक्कुरस्य इदम् इत्यालर्कं विषमिव पुनरपि सर्वतः सर्वाङ्गेषु सर्वासु दिक्षु च प्रसृतं व्याप्तम्। यथा छिन्नकुक्कुरदंशविषं तदानीं मन्त्रौषधादिना उपशमितमपि कालान्तरे सर्वाङ्गेषु व्याप्तं सदुत्पद्यते, तद्वदग्निपरीक्षादिना सीतायाः परगृहवासदोषसंशयस्तदानीमपनीतोऽपि इदानीं सर्वदेशेषु व्याप्त इत्यर्थः।

अत्रोपमालङ्कारः। प्रहर्षिणी वृत्तम् ॥४०॥

(भ) तदिति। तत्तस्मात्। प्राणाधिकसीतापरित्यागस्य कर्त्तुमशक्यत्वात् सीता-रक्षणं च दारुणलोकापवादस्य दुःसहत्वात् एतयोर्मध्ये किं करोमीत्यर्थः। विमृश्य विविच्य। अन्यत् किं करोमीत्यर्थः। लोकसन्तोषाय सीतामेव त्यजामीति भावः।

सीतापरित्यागे युक्तिमाह सतामिति। सतां साधूनां केनापि अनिर्वचनीयेन दुष्करे-णापीत्यर्थः कार्य्येण कर्म्मणा लोकस्य जनस्य आराधनं सन्तोषः व्रतं व्रतवदवश्यकर्त्तव्य-मित्यर्थः। हि तथाहि, तातेन महद्दर्शिना राज्ञा दशरथेन माञ्च प्राणांश्च मुञ्चता त्यजता सता यत् व्रतं पूरितं परिसमापितम्। प्रतिज्ञाभङ्गे पापं मिथ्यावादितया प्रजानामविश्वासे-

---

(ব) রাম। (আশ্বস্ত হইয়া) হায়! হায়! সীতার পরগৃহবাসের যে দোষ, অদ্ভুত উপায়ে প্রশমিত করিয়াছিলাম; দৈবদুর্বিপাকবশতঃ পুনরায় তাহা, ক্ষিপ্ত কুক্কুরের ন্যায় সকল দিকে এই বিস্তৃত হইয়া পড়িয়াছে ॥৪০॥

(ভ) সুতরাং মন্দভাগ্য আমি এ বিষয়ে কি করি? (বিবেচনা করিয়া, শোকের সহিত) অথবা, আর কি করিব।

---

(১) পূজিতমিতি ক্বাপি পাঠঃ।

सम्प्रत्येव भगवता वशिष्ठेन सन्दिष्टम्। अपि च, (म)

यत् सावित्रैर्दीपितं भूमिपालै:
लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।
मत्सम्बन्धात् कश्मला किंवदन्ती
स्याच्चेदस्मिन् हन्त! धिङ्मामधन्यम् ॥४२॥

---

नासन्तोषश्च स्यादिति विविच्य तातेन लोकानां सन्तोषायैव अहं निर्वासित: तच्छोकेन प्राणाश्च त्यक्ता: ; अतएव मया लोकसन्तोषाय ततोऽल्पतरसीतापरित्याग एव कर्त्तव्य इति भाव:।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास:, तथा मुञ्चतेत्येकया क्रियया माञ्च प्राणांश्च इत्यनयोरन्वयात् तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कार: ॥४१॥

(म) सीतापरित्यागस्य कर्त्तव्यतायां युक्त्यन्तरमाह सम्प्रतीति। सम्प्रत्येव न तु बहुपूर्वम्, येन विस्मृति: स्यादिति भाव:। सन्दिष्टम् अष्टावक्रमुखेन "युक्त: प्रजानामनुरञ्जने स्यात्" इत्यनेन सर्वं विहायापि लोकानुरागवर्द्धनं कर्त्तव्यमिति वाचिकं प्रेरितमित्यर्थ:। अतएव वशिष्ठोपदेशोऽपि सीतापरित्यागपक्षमेव प्रमाणयतीति भाव:। अपि च सीतापरित्यागे अन्या च युक्तिरस्तीत्यर्थ:।

तद्युक्त्यन्तरमाह यदिति। सवितु: सूर्य्यस्यापत्यानीति सावित्रा: तै: सूर्य्यवंशीयै: लोकश्रेष्ठै: भूमिपालै: यत् शुद्धं निर्म्मलं चरित्रं साधु सम्यक् दीपितं प्रकाशितमासीत्, चेद्यदि, मत्सम्बन्धात् मम सम्पर्कात् अस्मिन् तस्मिन् चरित्रे कश्मला मलिना निन्दारूपेत्यर्थ: किंवदन्ती जनश्रुति: स्यात्, हन्त खेदे। तर्हि अधन्यं पापिनं मां धिक् निन्दामीत्यर्थ:। सीतारक्षणे निन्दारूपजनश्रुतेरनिवार्य्यत्वात् सीतापरित्याग एवावश्यं कर्त्तव्य इति भाव:।

যে কোন কার্য্যের দ্বারা, লোকের সন্তোষ করা, সজ্জনের ব্রত; পিতৃদেব আমাকে এবং প্রাণকে পরিত্যাগ করিয়া যে ব্রত পূর্ণ করিয়াছিলেন ॥৪১॥

(ম) ভগবান্ বশিষ্ঠ, এখনই খবর দিয়া পাঠাইয়াছেন। আরও

हा देवि! देवयजनसम्भवे! हा स्वजन्मानुग्रहपवित्रीकृत-वसुन्धरे! हा जनकवंशनन्दिनि! हा पावकवशिष्ठारुन्धती-प्रशस्तशीलशालिनि! हा रामैकजीविते! हा महारण्यवास-प्रियसखि! हा तातप्रिये! हा स्तोकप्रियवादिनि! कथमेवं-विधायास्तवायमीदृशः परिणामः (य)।

"कश्मलं मलिने त्रिषु" इति हेमचन्द्रः।

शालिनी वृत्तम्—"मात्तौ गौ चेच्छालिनी वेदलोकै"रिति लक्षणात् ॥४२॥

(य) एवं परित्यागस्यावश्यकर्त्तव्यत्वनिश्चयेन शोकादयाविलपति हा देवीति। देवा इज्यन्ते पूज्यन्तेऽस्मिन्निति देवयजनं यज्ञस्थलं तस्मात् सम्भवति या तत्सम्बोधनम्। अशुक्रशोणितजाततया बीजदोषोऽपि ते नास्तीति भावः। स्वस्या आत्मनो जन्मैवानुग्रहो दया तेन पवित्रीकृता वसुन्धरा पृथिवी यया सा। तथा च ब्रह्मवैवर्त्ते—

"शतजन्मपुण्यवतां गृहे जाता पतिव्रता।
पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा॥"

ईदृशपतिव्रतापरित्यागो दारुणदुःखकर इति भावः। जनकवंशनन्दिनि! जनक-कुलानन्दकारिणि। धार्म्मिकस्यानन्दो धर्म्मेणैवोत्पद्यत इति महाधर्म्मवती त्वमिति भावः। पावको वह्निः। पावकवशिष्ठारुन्धतीभिः प्रशंसितं यत् शीलं स्वभावः तेन शालत इति सा सीताचरित्रम् अग्निना परीक्षाकाले वशिष्ठारुन्धतीभ्यान्तु सर्वदैव प्रशंसित-मिति रामायणे द्रष्टव्यम्। पावकः सर्वदेवमयः, वशिष्ठस्त्रिकालज्ञो ब्रह्मर्षिः, अरुन्धती च पतिव्रताशिरोमणिः अतिसत्यवादिभिरमीभिर्यतस्त्वं प्रशंसिता, अतएव त्वं परमपतिव्रता, नात्यत्र संशय इति भावः।

राम एव एकमद्वितीयं जीवितं जीवनं यस्याः सा, हा राममयजीवन इत्यर्थः अतएव ईदृश्याः परित्यागात् महती कृतघ्नता स्यादिति भावः। महारण्यवासप्रियसखि!

সূর্য্যবংশীয় লোকশ্রেষ্ঠ রাজগণ, জগতে যে নির্ম্মল চরিত্র সম্যক্‌রূপে প্রকাশ করিয়া গিয়াছেন, আমার সম্বন্ধবশতঃ সেই চরিত্রে যদি দূষিত জনশ্রুতি হয়; হায়! তবে পাপিষ্ঠ আমাকে ধিক্ ॥৪২॥

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस्त्वयालोकास्त्वमनाथा विपत्स्यसे ॥४३॥

महावनवासेऽपि सहवर्त्तिनि! या महारण्यवासे मम शुश्रूषार्थम् अनावश्यकत्वेऽपि स्वयमेव सहचारिणी बभूव, तामेवाहमेकाकिनीं महारण्ये विसर्जयामीति मत्तो जगत्यां क्रृतघ्नो नास्तीति भावः। हा तातप्रिये! पितृप्रीतिकारिणि! अतएव तव परित्यागेन स्वर्गस्थो महागुरुः पितापि मां प्रति महाविरक्तो भविष्यतीति भावः। स्तोकमल्पं प्रियं प्रीतिकरञ्च वदितुं शीलं यस्याः सा, तेन त्वं ममातीव प्रीतिपात्रभूतासि, तेन तव परित्यागो हृदयविदारक इति भावः।

अत्र गद्यभागे परिकरालङ्कारः—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात्।

एवंविधाया असाधारणनानागुणशालिन्या इत्यर्थः। अयं मया क्रियमाणः परित्यागरूपः। ईदृशो दारुणः इत्यर्थः। परिणामः शेषफलम्।

अत्रांश विभावनाविशेषोक्त्योः सन्देहसङ्करालङ्कारः।

त्वयेति। त्वया करणभूतया जगन्ति भुवनानि पुण्यानि पादरजःस्पर्शादिना पवित्रभूतानि, किन्तु त्वयि अपुण्याः अपवित्राः दुष्टा इत्यर्थः जनोक्तयः "लङ्कायामेकाकिनी स्थिता सीता कथं चरित्ररक्षणक्षमा आसी"दित्येवम्भूता जनप्रवादा वर्त्तन्त इति शेषः। तथा त्वया लोका नाथवन्तः अधिपतिशालिनः लक्ष्मीरूपत्वात् त्वमेव जनानां नाथा ईश्वरीत्यर्थः, किन्तु त्वम् अनाथा प्रभुशून्या रक्षकरहितेति यावत्, सती विपत्स्यसे वने विपदं प्राप्स्यसि।

---

(য) হা দেবি! যজ্ঞভূমিসমুৎপন্নে! হা জনকবংশানন্দকারিণি! নিজের জন্মগ্রহণরূপ অনুগ্রহদ্বারা তুমি পৃথিবীকে পবিত্র করিয়াছ; অগ্নিদেব, বশিষ্ঠদেব ও অরুন্ধতীদেবী তোমার চরিত্রের প্রশংসা করিয়াছেন; একমাত্র রামই তোমার জীবন; মহারণ্যবাসের সময় তুমি আমার সহচারিণী ছিলে, তুমি পিতৃদেবের প্রীতিকারিণী ছিলে এবং অল্প অথ চ প্রিয় বাক্য বলিতে। তুমি এইরূপ ছিলে, তথাপি তোমার এরূপ পরিণাম হইল কেন!!

(दुर्मुखं प्रति) ब्रूहि लक्ष्मणम्, एष ते नूतनो राजा रामः समाज्ञापयति। (कर्णे एवमेवम्) (र)।

रामेण मनसि सीताया निर्वासनस्य निश्चितत्वात् "अनाथा विपत्स्यसे" इत्युक्तमिति बोध्यम्।

अत्र पूर्वार्द्धे लोकचरित्रवैचित्र्याद्विरोधसमाधानम्, परार्द्धे च ईश्वरेच्छयेति विरोधाभासोऽलङ्कारः।

तथा 'त्वयि त्वं'मित्यनर्थाः परं तुशब्दः किन्तुशब्दो वा भेदज्ञापनार्थं वाच्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः; स च 'त्वया जगन्ति पुण्यानि वाचोऽपुण्यास्तु ते नृणाम्' इति पाठेन 'त्वन्त्वनाथा' इति पाठेन च समाधेयः।

पतिव्रतायाः पादरजःस्पर्शे पृथिव्याः पवित्रत्वे प्रमाणं यथा ब्रह्मवैवर्त्तपुराणम्—

"सतीनां पादरजसा सद्यः पूता वसुन्धरा।
पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः॥"

सीताया लक्ष्मीरूपत्वे प्रमाणं यथा पद्मपुराणम्—

"अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः।
शुभक्षेत्रे हलोत्खाते तारे चोत्तरफल्गुने॥" इत्यादि॥४३॥

(र) दुर्मुखमिति। नूतनः अदृष्टपूर्वाश्रुतपूर्वकर्मा इत्यर्थः। य एवमग्निपरीक्षया निर्दोषतया निश्चिताम् आसन्नप्रसवाम् अभिन्नहृदयाम् एकान्तविश्वासकारिणी परमप्रियतमां निर्वासयितुमर्हति, स नूतन एवेति भावः। इयन्तु गभीरविषादाक्षेपोक्तिः। कर्णे दुर्मुखस्य कर्णसमीपे मुखमुपनीय एवमेवमाहेत्यर्थः। तद्वचनन्तु यथा—"सम्प्रत्येव सीता पञ्चवटीदर्शनाय आग्रहं कृतवती, अतएव तत्प्रदर्शनच्छलेन रथेन तत्र नीत्वा विसृज्य द्रुतं निभृतञ्चागच्छ" इति इत्येव लक्ष्मणं ब्रूहीत्यर्थः।

अत्र "नितान्तनीचजातीयस्य कस्यचित् सामान्यकिङ्करस्य वचनविश्वासेन सीतापरित्यागो रामस्य विचारनैपुण्यशून्यताम् अवैधोपायेनाप्युत्पन्नयशःप्रियताञ्च प्रकटयति" इति केचि-

তোমাদ্বারা ত্রিজগৎ পবিত্র; কিন্তু তোমার বিষয়ে লোকপ্রবাদ অপবিত্র এবং জগতের লোক তোমাদ্বারা নাথবান্; কিন্তু তুমি অনাথা অবস্থায় বিপন্ন হইবে॥৪৩॥

दुर्म्मुखः। कधं दाणिं अग्गिपरिसुद्धाए गब्भपप्फुडिद-पवित्त-रहुउलसन्ताणाए देईए दुज्जणवअणादो एव्वं अणज्जं अज्झवसिदं देवेण ? (ल)

रामः। शान्तम्। कथं दुर्जनाः पौरजानपदाः (व)।

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातञ्च दैवाद्वचनीयवीजम्।

---

(ल) कथमिदानीम् अग्निपरिशुद्धाया गर्भपरिस्फुटितपवित्ररघुकुलसन्तानाया देव्या दुर्जनवचनाद्देवमनार्य्यमध्यवसितं देवेन ?

---

दिदानींन्तनाः शिक्षितम्मन्याः समालोचका रामचरिते दोषमारोपयन्ति ; न तु जानन्ति तं, यत्, इदानीमिव तदानीं नासन् प्रायेण मिथ्यावादिनः, येन रामस्य दुर्म्मुखवचने संशयो भवेत्, अपि च सीताहरणस्य श्रुतत्वात् अग्निपरीक्षायाश्चाश्रुतत्वात् लोकापवादो रामेणानुमितोऽपीत्यलं पल्लवितेन।

(ल) दुर्म्मुख इति। गर्भे परिस्फुटितः प्रकाशितः पवित्रो रघुकुलसन्तानो यस्याः तस्याः गर्भिणीमरणसम्भवे गर्भनाशावश्यम्भावात् गुरुतरपातकमेतदिति भावः। अनार्य्यम् असाध, अध्यवसितं निश्चितम् अत्यन्तासङ्गतमेतदिति भावः।

(व) राम इति। शान्तं विरतं भवतु इति शेषः प्रजां प्रति तव दुर्जन इति वाक्यं न वाच्यमित्यर्थः।

---

(র) (দুর্ম্মুখের প্রতি) লক্ষ্মণকে বল, তোমার এই নূতন রাজা রাম আদেশ করিতেছেন। (কর্ণে এইরূপ এইরূপ।)

(ল) দুর্ম্মুখ। অগ্নিপরীক্ষায় যিনি বিশুদ্ধ বলিয়া প্রমাণিত হইয়াছেন এবং যাঁহার গর্ভে পবিত্র রঘুকুলসন্তান স্পন্দিত হইতেছে, সেই সীতাদেবীর প্রতি মহারাজ এখন দুর্জ্জনের বাক্যে এইরূপ অন্যায্য আচরণ আরম্ভ করিলেন কেন ?

(ব) রাম। থাম। পুরবাসিগণ এবং দেশবাসিগণ দুর্জন হইবে কেন।

यच्चाद्भुतं कर्म्म विशुद्धिकाले
प्रत्येतु कस्तद्भुवि (१) दूरवृत्तम् ? ॥४४॥

तद्गच्छ।

पौरजानपदानामदुर्जनत्वं प्रतिपादयितुमाह इक्ष्वाक्विति। प्रजानाम् इक्ष्वाकुवंशः अभिमतः राजत्वेन अभीष्टः अतएव इक्ष्वाकुवंशीयं मां प्रति स्वभावतो विद्वेषवशात् अपवादं घोषयन्तीति न सम्भवतीति भावः। तर्हि कथमपवादं कुर्वन्तीत्याह, दैवात् दुरदृष्टवशात् वचनीयवीजं लङ्कायामेकाकिन्या अवस्थानरूपं निन्दाकारणं जातम्, अतएव प्रकृष्टकारणं प्राप्यैव अपवदन्ति कथमन्यथा तदपवादविषयपरिहारः स्यादिति भावः।

अग्निपरीक्षया सीताचरित्रविशुद्धिं विश्वस्य अपवादान्निवर्त्तन्तामिति चेत्तत्राह, विशुद्धिकाले अग्निपरीक्षया निर्द्दोषत्वप्रतिपादनसमये यच्च अद्भुतं स्वयमग्निदेवेन सीतामङ्के निधाय तस्या निर्द्दोषत्वं मुखेनैव यत् प्रतिपादितं तादृशम् आश्चर्य्यं कर्म्म आसीदिति शेषः, दूरवृत्तम् अतिदूरवर्त्तिलङ्कायां जातं तत् कर्म्म भुवि पृथिव्यां को जनः प्रत्येतु विश्वसितु अपि तु कोऽपि नेत्यर्थः। दूरवृत्तस्य प्रत्यक्षाभावात् लोकपरम्परया श्रवणस्य तु प्रायेणैवालीकत्वाच्च तदविश्वासो न दोषायेति भावः।

अत्र यतो दूरवृत्तम् अतः कः प्रत्येत्विति प्रत्ययाभावं प्रति दूरवृत्तत्वपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमुक्तार्थापत्तिश्चालङ्कारः।

अभिमत इति "ज्ञानुबन्धमती"त्यादिना वर्त्तमाने क्तः। प्रजानामिति "वर्त्तमानाधिकरणयोः सौत्रे" इति कर्त्तरि षष्ठी।

इन्द्रवज्रा वृत्तम् ॥४४॥

ইক্ষ্বাকুবংশ, প্রজাদের অভিমত ; কিন্তু দৈববশতই নিন্দার কারণ হইয়াছে। অগ্নিপরীক্ষাদ্বারা বিশুদ্ধি প্রমাণের সময়ে যে অদ্ভুত ঘটনা ঘটিয়াছিল, জগতের কোন্ লোক সেই দূরের ঘটনা বিশ্বাস করিবে ? ॥৪৪॥

অতএব যাও।

(१) कस्तद्भवति इति क्वापि पाठः।

दुर्म्मुखः। हा देइ! (इति निष्क्रान्तः) (श)।

रामः। हा कष्टम्! अतिबीभत्सकर्म्मा नृशंसोऽस्मि संवृत्तः (ष)।

शैशवात् प्रभृति पोषितां प्रियां
सौहृदादपृथगाश्रयामिमाम् (१)।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥४५॥

(श) हा देवि!।

(ष) राम इति। अतिबीभत्सम् अकारणसद्भार्य्यापरित्यागात् अतिनिन्दनीयं कर्म्म यस्य स तथोक्तः। नृशंसः क्रूरः।

नृशंसतां प्रति कारणमाह शैशवादिति। शैशवात् प्रभृति। बाल्यकालादवधि पोषितां पालितां प्रियां प्रीतिकरीं सौहृदात् प्रणयात् अपृथगाश्रयाम् एकस्थानस्थिताम् इमां सीतां सौनिकः पशुपक्षिमांसविक्रयकारी (कषाइ इति यस्य प्रसिद्धिः) गृहशकुन्तिकां गृहपालितपक्षिणीमिव छद्मना कपटतया मृत्यवे मरणाय परिददामि अर्पयामि। अनन्तहिंस्रसमाकुले महारण्ये निर्वासनात् मरणमस्या अवश्यम्भावीति परमप्रियतमाया ईदृशमरणसम्पादकादन्यः को नाम नृशंसोऽस्मीति भावः।

अत्र पूर्णोपमालङ्कारः। तेनाहमतीव कदर्य्य इति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

सूनया प्राणिहिंसया संसृष्ट इति सौनिकः "तेन दीव्यती"त्यादिना इकन्। "वैतंसिकः सौनिकश्च मांसिकः कौटिकस्तथा" इति हेमचन्द्रः। रथोद्धता वृत्तम् ॥४५॥

(শ) দুর্ম্মুখ। হা দেবি! (এই বলিয়া চলিয়া গেল।)

(ষ) রাম। হায় কি কষ্ট! আমি অতিঘৃণিতকর্ম্মা নৃশংস হইয়াছি।

বাল্যকাল হইতে প্রিয়াকে পোষণ করিয়াছি এবং প্রণয়বশতঃ যিনি ভিন্ন স্থানে থাকেন নাই; এখন কষাই যেমন গৃহপালিত পক্ষিণীকে মৃত্যুর

(१) अपृथगाश्रयामिमामिति पाठान्तरम्।

तत् किमित्यस्पर्शनीयः पातकी देवीं दूषयामि (स)।
(सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन्) (ह)
अपूर्वकर्म्मचाण्डालमयि मुग्धे! विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्॥ ४६॥

(स) तदिति। अस्पर्शनीयः स्पर्शायोग्यः। पातकी अपतितभार्य्यापरित्यागेन पातित्यजनकपापवान्। देवीं सीतां देवीव (सच्चरित्रामिति भावः। दूषयामि स्पर्शेन अपवित्रां पापिनीं वा करोमि।

अपतितपरित्यागे पातित्यमाह गौतमः—"ब्रह्महा सुरापगुरुतल्पग-पितृमातृसुतत्यागि-पितृमातृयोनिसम्बन्धागस्तेननास्तिकनिन्दितकर्म्माभ्यासिपतितात्यागपतितत्यागिनश्च पतिताः।"

पतितस्पर्शे स्नानमाह मनुः—

"दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति॥"

पतितस्पर्शे तु तत्पापसंक्रममेवाह गरुडपुराणम्—

"आलापाद्गात्रसंस्पर्शात् संवासात् सहभोजनात्।
आसनाच्छयनाद्यानात् पापं संक्रमते नृणाम्॥"

(ह) सीताया इति। स्वैरं मन्दम्, उन्नमय्य उत्थाप्य।

अपूर्वेति। अयि मुग्धे! सरलबुद्धिशालिनि! न तु सज्जनदुर्जनविवेकशालिनीत्यर्थः, अपूर्वः अदृष्टपूर्वोऽश्रुतपूर्व इत्यर्थः कर्म्मणा कृतघ्नतानृशंसव्यवहारादिना कार्य्येण चाण्डालः, न तु जात्या चाण्डालः तं कृतघ्नतादिकर्म्मणा यद्यपि केचित् रत्नाकरादयः कर्म्मचाण्डाला आसन्, तथापि ईदृशभार्य्यापरित्यागात् कदर्य्यातिकदर्य्यः कर्म्मचाण्डालः कश्चिदपि नासीत् न वा वर्त्तते इति अपूर्वपदप्रयोगस्याभिप्रायः। मां विमुञ्च स्वयमेव

হাতে দান করে, আমিও সেইরূপ সেই প্রিয়তমাকে ছলক্রমে মৃত্যুর হাতে দিতেছি॥৪৫॥

(স) অতএব অস্পৃশ্য পাতকী আমি কেন দেবীকে দূষিত করি।

(হ) (ধীরে ধীরে সীতার মস্তক উত্তোলন করিয়া বাহু আকর্ষণ করতঃ

(उत्थाय) हन्त! विपर्य्यस्तः सम्प्रति जीवलोकः, अद्य पर्य्यव-सितं जीवितप्रयोजनं रामस्य, शून्यमधुना जीर्णारण्यं जगत्, असारः संसारः, कष्टप्रायं शरीरम्। अशरणोऽस्मि, किं करोमि, का गतिः, क्व गच्छामि। अथवा—(च)

परित्यज। कथमित्याह चन्दनभ्रान्त्या चन्दनतरुभ्रमेण दुष्टो विपाकः परिणामफलं मरणमित्यर्थः यस्य तं विषद्रुमं विषवृक्षं श्रितासि अवलम्बितवत्यसि। सत्पुरुषभ्रमेण अतिदुर्ज्जनं मां पतित्वेन प्राप्तवतीत्यर्थः। अतएव तत्परित्याग एव श्रेयानिति भावः।

अत्र वस्तुतश्चन्दनभ्रमेण विषवृक्षाश्रयाभावात् वाक्यार्थोऽसम्भवन् चन्दनभ्रमेण विष-वृक्षाश्रय इव सत्पुरुषभ्रमेण अतिदुर्ज्जनाश्रयः कृत इति बिम्बप्रतिबिम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शना, तथा त्यागं प्रति विषवृक्षाश्रयस्य हेतुत्वात् कारणेन कार्य्य-समर्थनरूपोऽर्थान्तरन्यासश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः॥४६॥

(च) उत्थायेति। हन्त खेदे। जीवलोकः सजीवपदार्थः। विपर्य्यस्तः विपरीतः संवृत्तः। पूर्व्वं य एव लक्ष्मणादयो दासीदासादयश्च त्वया सहैकत्रावस्थाने परमस्नेहालाप-व्यवहारादिना उत्तरोत्तरवर्द्धमानसुखकरा आसन्, त एवेदानीं तवाभावेन तव स्मृतेरुत्थापकतया क्रमिकवर्द्धमानदुःखसाधका भवेयुरित्यर्थः। अद्य सीतापरित्यागदिने रामस्य जीवितप्रयोजनं जीवनोद्देश्यम् ऐहिकसुखमित्यर्थः पर्य्यवसितं परिसमाप्तम् इतः परं तव शोकेन सर्व्वदैव सर्व्वथा दुःखस्यैवावश्यम्भावादिति भावः। जीर्णारण्यं जीर्णं शुष्कविरलवृक्षप्रायम् अरण्यमिव जगत् भुवनं शून्यं शून्यमिवेत्यर्थः तव शोकजनित-दुःखस्यैव सर्व्वामोदनिवारकतया आश्वासमाधकपदार्थाभावादिति भावः। निविडारण्ये नवपत्रपल्लवदर्शनादिना कियानाश्वासः सम्भवति, शुष्कारण्ये तु विषाद एवेति ज्ञापनाय जीर्णपदं प्रयुक्तमिति बोध्यम्। न विद्यते सारो वरं उत्कृष्टपदार्थः सुखमिति यावत् यस्मिन् सः असारः संसारः जगत् सुखशून्यं जगदित्यर्थः। सीताभावेन सर्व्वस्यैव दुःखत्वादिति भावः। कष्टप्रायं दुःखबहुलम् एतेन किञ्चित् सुखमस्तीति विज्ञायते,

হে সরলে! আমি অপূর্ব্বকর্ম্ম চণ্ডাল; আমাকে পরিত্যাগ কর। তুমি চন্দনভ্রমে দুষ্পরিণাম বিষবৃক্ষ আশ্রয় করিয়াছিলে॥৪৬॥

दुःखसंवेदनायैव रामे चैतन्यमर्पितम् (१)।
मर्म्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः (२) ॥४७॥
हा अम्ब अरुन्धति! हा भगवन्तौ वशिष्ठविश्वामित्रौ!

तत्तु वैराग्येण वनवासादौ न तु गृहे इति भावः। अशरणः रक्षकशून्योऽस्मि दारुण-दुःखहन्तादिति भावः। का गतिरुपायः आश्वासं प्रतीति भावः। अथवा किंवा आश्वासोपायान्वेषणं निष्फलमित्यर्थः।

कुत इत्याह दुःखेति। दुःखसंवेदनायैव कष्टानुभवायैव रामे मयि चैतन्यम् अर्पितं निहितं विधिनेति शेषः। मर्म्म जीवस्थानम् उपहन्तुं प्रहर्त्तुं शीलं येषां तैः स्थिरैः अपसारयितुम् इष्यमाणैरपि निश्चलैः प्राणैः वज्रकीलं वज्रनिर्म्माणसाधनवस्तुनिर्म्मितशङ्कुः (पेरेक इति यस्य प्रसिद्धिः) तेन इव आचरितमिति वज्रकीलायितम्। नितान्तकठिनतया वज्रकीलं यथा कथमप्यपसारयितुं न शक्यते, तथा दारुणदुःखयातनयापि प्राणा न यान्तीत्यर्थः। प्राणानां सद्भाव एव मर्म्मपीडा सा न तु प्राणाभाव इति प्राणा एव मर्म्मोपघातिन इति भावः।

अत्र पूर्वार्द्धे एवशब्दो भ्रुवशब्दसमानार्थः, तेन वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, द्वितीयार्द्धे तु काचा साद्दृश्यबोधनादुपमालङ्कारः अनयोस्तिलतण्डुलवत् संसृष्टिः।

"मर्म्म जीवस्थान"मिति राजनिर्घण्टः ॥४७॥

---

(ক) (উঠিয়া) হায়! জীবলোক এখন উল্টিয়া গেল, আজ রামের জীবনের প্রয়োজন শেষ হইল, জীর্ণারণ্যের ন্যায় জগৎ এখন শূন্য, সংসার অসার এবং শরীর দুঃখবহুল। আমি রক্ষকশূন্য হইলাম; কি করি, উপায় কি, কোথায় যাই। অথবা—

বিধাতা, দুঃখভোগের জন্যই রামের দেহে চৈতন্য দিয়াছিলেন। আর মর্ম্মপীড়াদায়ক অথচ নিশ্চল প্রাণ, বজ্রশঙ্কুর ন্যায় আচরণ করিতেছে ॥৪৭॥

---

(१) आहितमिति क्वापि पाठः। (२) हतैरिति पाठान्तरम्।

हा भगवन् पावक! हा देवि भूतधात्रि! हा तात जनक! हा तात! हा मातरः! हा प्रियसख महाराज सुग्रीव! हा सौम्य हनूमन्! हा परमोपकारिन् लङ्काधिपते विभीषण! हा सखि त्रिजटे! दूषिताः स्थ, परिभूताः स्थ रामहतकेन। अथवा को नामाहमेतेषामाह्वाने? (क)

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥४८॥

(क) हा अम्बेति। पावक! वह्ने! भूतधात्रि! पृथिवि! तात! दशरथ! मातरः! कौशल्यादयः! त्रिजटा नाम काचित् राक्षसी लङ्कावस्थानकाले सीतायास्तत्त्वावधानकारिणी सकलभयनिवारिणी सान्त्वनाकारिणी आसीत्, परमोपकारित्वात्तस्याः सम्बोधनम्। दूषिताः स्थ, परिभूता अवमानिताः स्थ, सीतापरित्यागेन यूयमिति शेषः। तथा च सर्वैरेव युष्माभिः नितान्तनिर्म्मलचरित्रतया सीतायाः प्रशंसा कृता, इदानीं तस्या एव चरित्रदोषापवादेन परित्यागात् मया सर्वेषामेव मिथ्यावादित्वदोषः प्रतिपादितः, वाक्याविश्वासेन अवमानना च कृतेति भावः। हतः पातित्यजनकसद्भार्य्यापरित्यागपापेन नष्टप्रायः, हत एव हतकः कुत्सायां कप्रत्ययः, रामश्चासौ हतकश्चेति रामहतकः अभिधानाद्विशेषणस्य परनिपातः। आह्वाने सम्बोधने अहं कः, अपि तु कोऽपि न, अनधिकारीत्यर्थः।

अत्र हेतुमाह ते हीति। हि यस्मात् कृतघ्नेन सीतायाः प्रशंसोद्गारादिना महोप-

(क) হা মাতঃ অরুন্ধতি! হা ভগবন্ বশিষ্ঠ ও বিশ্বামিত্র! হা ভগবন্ অগ্নিদেব! হা দেবি পৃথিবি! হা পিতঃ জনক! হা পিতঃ! (দশরথ!) হা মাতৃগণ! হা প্রিয়সুহৃদ্ মহারাজ- সুগ্রীব! হা সৌম্যমূর্ত্তি হনূমন্! হা মহোপকারী লঙ্কাধিপতি বিভীষণ! হা সখি ত্রিজটে! নিকৃষ্ট রামকর্ত্তৃক তোমরা সকলেই দূষিত হইলে এবং অপমানিত হইলে। অথবা, আমি ইঁহাদের আহ্বান করিতে কে?

विस्रम्भादुरसि निपत्यलब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥४८॥

कारिणां तेषां दोषावमानाभ्यामपकारिणत्यर्थः। दुरात्मना अपतितभार्य्यात्यागात् पापात्मना मया गृहीतानि उच्चारितानि नामानि येषां ते तथोक्ताः ते अरुन्धत्यादयो महात्मानः पुण्यवन्तः पाप्मना पापेन स्पृश्यन्ते सम्बध्यन्त इव इत्यहं मन्ये।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, तथा पादस्पर्शं प्रति मया गृहीत-नामत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

कृतघ्नमाह प्रायश्चित्ततत्त्वधृतस्कन्दपुराणम्—

"कृतस्य दोषं वदति सकामान्न करोति यः।
न स्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत्।
सर्व्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः॥"

कृतघ्नस्य प्रायश्चित्तानपनेयपापत्वमपि तत्रैवोक्तम्। यथा—

"ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥" ॥४८॥

विस्रम्भादिति। निर्घृणः निर्दयः विस्रम्भात् "अयं मम प्रियतमः पति"रिति विश्वासात् उरसि वक्षसि निपत्य स्थित्वा लब्धनिद्रां गृहस्य शोभां लक्ष्मीस्वरूपाम् आतङ्केन कयाचित् शङ्कया आतङ्कजनितदीर्घश्वासेनेत्यर्थः स्फुरितः कम्पितः कठोरः पूर्णो यो गर्भस्तेन गुर्वीं भारवतीं तां प्रियगृहिणीं प्रियतमां भार्य्याम् उन्मुच्य उत्तोल्य क्रव्याद्भ्यो

তাঁহারা সকলেই মহাত্মা; আর আমি কৃতঘ্ন ও দুরাত্মা; সুতরাং আমি তাঁহাদের নাম উচ্চারণ করিলে তাঁহারা যেন পাপস্পৃষ্ট হন, ইহা আমি মনে করি ॥৪৮॥

(सीतायाः पादौ शिरसि कृत्वा) देवि! देवि! अयं पश्चिमस्ते रामस्य शिरसि पादपङ्कजस्पर्शः। (इति रोदिति) (ख)।

नेपथ्ये। अब्रह्मण्यम् अब्रह्मण्यम् (ग)।

---

मांसभोजिजन्तुभ्यः व्याघ्रादिभ्य इत्यर्थः बलिमिव खाद्यमिव क्षिपामि अर्पयामि। इतोऽधिका का नाम नृशंसतास्तीति भावः।

अत्रोपमालङ्कारः।

क्रव्यं मांसमदन्तीति क्रव्यादः "क्रव्ये च" इति अन् : क्विप्।

"कारुण्यं करुणा घृणा" इत्यमरः। प्रहर्षिणी वृत्तम् ॥४९॥

(ख) सीताया इति। कृत्वा अर्पयित्वा। रामस्य शिरसि ते तव पादपङ्कजस्पर्शः अयं पश्चिमः शेषः नातःपरं पुनर्भविष्यतीत्यर्थः।

ननु रामस्य शिरसि सीतायाः पादस्थापनं नितान्तमनुचितमिव प्रतिभाति।

"गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः॥"

इत्यङ्गिरोवचनेन रामस्य सीताया महागुरुत्वादिति चेत्, सत्यम्—

"पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि।
तेजश्च सर्वदेवानां मुनीनाञ्च सतीषु च॥"

इति स्मृतेर्यदा यदैव सीतायां महासतीज्ञानम्, तदा तदैव शिरसा रामेण तत्पदपङ्कजस्पर्शः कृतः, अयन्तु तेषां शेष इति दिक्।

---

নির্দ্দয়প্রকৃতি যে আমি; বিশ্বাসবশতঃ বুকের উপর পড়িয়া নিদ্রিতা, গৃহের শোভাস্বরূপা এবং আতঙ্কে স্পন্দিত পরিণত গর্ভের ভারে ভারবতী প্রিয়তমা গৃহিণীকে পরিত্যাগ করিয়া, খাদ্যদ্রব্যের ন্যায় হিংস্রজন্তুদিগের উদ্দেশে নিক্ষেপ করিতেছি ॥৪৯॥

(খ) (সীতার চরণযুগল মস্তকে স্থাপন করিয়া) দেবি! দেবি! রামের মস্তকে তোমার চরণকমলস্পর্শ এই শেষ। (এই বলিয়া রোদন করিতে লাগিলেন।)

[?]मः। ज्ञायतां भोः! किमेतत् (घ)।

(पुनर्नेपथ्ये) ऋषीणामुग्रतपसां यमुनातीरवासिनाम्।

लवणत्रासितः स्तोमस्त्रातारं (१) त्वामुपस्थितः ॥५०॥

रामः। आः! कथमद्यापि राक्षसत्रासः? तद्यावदस्य दुरात्मनः कुम्भीनसीपुत्रस्य समुन्मूलनाय शत्रुघ्नं प्रेषयामि। (कतिचित् पदानि गत्वा पुनः प्रतिनिवृत्य) हा देवि! कथमेवं-विधा गमिष्यसि। भगवति! वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीम् (ङ)।

---

(ग) नेपथ्य इति। ब्रह्मणे विप्राय हितं ब्रह्मण्यम्, न ब्रह्मण्यम् अब्रह्मण्यं ब्राह्मणानामहितम् उत्पात इत्यर्थः। उपस्थितमिति शेषः।

"वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापति"रित्यमरः।

(घ) राम इति। एतदुक्तं किं कथमिति ज्ञायतामित्यर्थः। परिजनानुद्दिश्य रामस्योक्तिरियम्।

ऋषीणामिति। उग्रं घोरं दुश्चरं तपो येषां तेषां यमुनातीरवासिनाम् ऋषीणां स्तोमः समूहः लवणेन लवणाख्यराक्षसविशेषेण त्रासितः भयं प्रापितः सन् त्रातारं रक्षकं त्वाम् उपस्थितः। लवणादात्मनो रक्षयितुं तव समीपमागत इत्यर्थः ॥५०॥

(ङ) राम इति। आ इति कोपसूचकमव्ययम्। तथा च "आस्तु स्यात् कोपपीड़यो"-रित्यमरः। अद्यापि रावणवधादव्यवहितपरकालेऽपि। सानुचरसवंशरावणवधेन विरोधिनो राक्षसा भयेन शान्तिमुपगताः, अनुकूलास्तु पूर्वस्मादेव सनातनधर्माविरोधे वर्त्तन्ते, अतएव

---

(গ) নেপথ্যে। ব্রাহ্মণদিগের অমঙ্গল, ব্রাহ্মণদিগের অমঙ্গল।

(ঘ) রাম। জান হে! এ ঘটনা কি।

পুনরায় নেপথ্যে। যমুনাতীরবাসী উগ্রতপা ঋষিগণ, লবণনামক রাক্ষসের ভয়ে ভীত হইয়া, রক্ষক আপনার নিকট উপস্থিত হইয়াছেন ॥৫০॥

---

(१) शरण्यं इति क्वचित् पाठः।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम्।
यां (१) देवयजने पुण्ये पुण्यशीलामजीजनः ॥५१॥

(इति निष्क्रान्तः।)

---

अस्मिन् समये राक्षसत्रासः असम्भव एवेति भावः। दुरात्मनः त्वृषीणां विरुद्धाचरणेन पापात्मनः। कुम्भीनसी नाम काचित् राक्षसी तत्पुत्रस्य लवणस्येत्यर्थः। समुन्मूलनाय सम्यगुच्छेदाय। तथा च रामायणम्—

"तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या।
विश्वावसोरपत्यं साप्यनलायां महाप्रभा॥
तस्याः पुत्रो महावीर्य्यो लवणो नाम दारुणः।
बाल्यात् प्रभृति दुष्टात्मा पापान्येव समाचरत्॥"

अभिज्ञानशकुन्तले शकुन्तलाया विरहविधुरस्य राज्ञो दुष्मन्तस्य विलापमाकर्ण्य तस्य समुत्तेजनार्थं यथा मातलिर्विदूषकनिपीडनवृत्तान्तो ग्रथितः, तथात्रापि सीताशोककातरस्य रामस्य समुत्तेजनार्थमयमंशः कविना निबद्ध इति तस्य छायायहणमिवैतदिति प्रतिभाति।

एवंविधा गर्भभरालसा। श्लाघ्य। सच्चरित्रादिभिः प्रशस्याम्।

जनकानामिति। जनकानां जनकवंशानां रघूणां रघुवंशानाञ्च यत् वस्तु कृत्स्नं सकलं गोत्रमङ्गलं वंशस्य मङ्गलस्वरूपं तथा यां पुण्यशीलां पुण्ये पवित्रे देवयजने यज्ञस्थले अजीजनः, त्वम् उत्पादितवती ; तां दुहितरम् अवेक्षस्व इति पूर्वेणान्वयः।

अत्र पूर्वार्द्धे निरङ्गं केवलं रूपकमलङ्कारः।

सीतायाः प्राप्त्यनन्तरमेव जनकरघुवंशयोः प्रभूतमङ्गलोत्पत्तेः कृत्स्नं गोत्रमङ्गलमित्युक्तम् ॥५१॥

---

(ঙ) রাম। আঃ! এখনও রাক্ষসের ভয়? তা, এই দুরাত্মা কুম্ভীনসীপুত্রের উচ্ছেদের নিমিত্ত শত্রুঘ্নকে প্রেরণ করি। (কতিপয় পদ গমন করিয়া পুনরায় ফিরিয়া আসিয়া) হা দেবি! এইরূপ তুমি কি করিয়া যাইবে। ভগবতি! পৃথিবি! প্রশংসনীয় কন্যা সীতার পর্য্যবেক্ষণ করিবেন।

---

(१) तां इति पाठान्तरम्।

—মৃতা। হা সোম্ম অজ্জউত্ত! কহিং সি? (সহসোত্থায়) হদ্ধী হদ্ধী! দুস্সিবিণ-রণরণঅবিপ্পলদ্ধাহং অজ্জউত্তং আক্কন্দামি। হদ্ধী হদ্ধী! কধং এআইণী মং উজ্ঝিঅ অজ্জউত্তো গদো, তা কিং দাণিং এদং, ভোদু, তস্স কুবিস্সং জই তং পেক্খন্তী অত্তণো পহবিস্সং। কো এত্থ পরিজণো? । (চ)

(চ) হা সৌম্য আর্য্যপুত্র! কস্মিন্নসি? হা ধিক্ হা ধিক্! দুঃস্বপ্নরণরণক-বিপ্রলব্ধাহম্ আর্য্যপুত্রম্ আক্রন্দামি। হা ধিক্ হা ধিক্! কথমেকাকিনী মাম্ উজ্ঝিত্বা আর্য্যপুত্রো গতঃ, তৎ কিমিদানীমেতৎ? ভবতু, তস্য কোপিষ্যামি যদি তং প্রেক্ষমাণা আত্মনঃ প্রভবিষ্যামি। কোঽত্র পরিজনঃ?

(চ) সীতেতি। 'হা সৌম্য আর্য্যপুত্র! কস্মিন্নসি' ইত্যন্তঃ স্বপ্নপ্রলাপঃ। হা ধিগিত্যাদিনা তদেব প্রকটয়তি। দুঃস্বপ্নে যঃ রণরণক উদ্বেগস্তেন বিপ্রলব্ধা 'রামোঽত্র নাস্তী'ত্যেবংরূপেণ প্রতারিতা অহম্ আর্য্যপুত্রং রামম্ আক্রন্দামি আহ্বয়ামি। "ক্রন্দনে রোদনাহ্বানে" ইত্যমরঃ। ন তু বস্তুত এবার্য্যপুত্রাহ্বানপ্রয়োজনমস্তীতি ভাবঃ। ইতস্ততো দৃষ্টিপাতেন রামমনবলোক্যাহ হা ধিগিত্যাদি। উজ্ঝিত্বা পরিত্যজ্য। এতৎ মামেকাকিনীং পরিত্যজ্য গমনম্, কিং কথং কৃতমিতি শেষঃ। তন্ন জানামীতি ভাবঃ। তস্য কোপিষ্যামি রামং প্রতি কপটকোপং করিষ্যামীত্যর্থঃ। প্রেক্ষমাণা পশ্যন্তী আত্মনঃ প্রভবিষ্যামি স্বাধীনা স্যাম্ শক্ষ্যামীত্যর্থঃ। রামস্য রূপলাবণ্যদর্শনাৎ সর্ব্বদৈবাহমবশাঙ্গী বিস্মৃতসকলহৃদয়ভাবা ভবামি, অতএব নির্দ্দিষ্টকোপং কর্ত্তুং শক্নোমি ন বেতি সন্দেহান্ সশঙ্কৈবেতি ভাবঃ।

যিনি জনকবংশীয় ও রঘুবংশীয়দিগের গোত্রের সমস্ত মঙ্গলস্বরূপা এবং আপনি পবিত্র যজ্ঞস্থানে যে পবিত্রচরিত্রাকে জন্মাইয়াছিলেন ॥৫১।

(এই বলিয়া চলিয়া গেলেন।)

(চ) সীতা। হা সৌম্য! আর্য্যপুত্র! আপনি কোথায় আছেন? (হঠাৎ উঠিয়া) হায়! হায়! দুঃস্বপ্নে উদ্বেগকর্তৃক প্রতারিত হইয়া আমি

(প্রবিশ্য) দুর্ম্মুখঃ। দেই! কুমারলক্খণো বিণ্ণবেদি, সজ্জো রহো, আরোহদু দেইত্তি (ছ)।

সীতা। ইঅমহং আরুহহ্মি। (উত্থায় পরিক্রম্য) পরিপ্ফুরদি বিঅ মে গব্ভভারো, তা সণিঅং গচ্ছহ্ম (জ)।

দুর্ম্মুখঃ। ইদো ইদো দেই (ঝ)।

সীতা। ণমো ণমো তবোধণাণং, ণমো ণমো রহুউলদেবদাণং, ণমো ণমো অজ্জউত্তচরণকমলাণং, ণমো ণমো সঅলগুরুঅণাণং (ঞ)।

---

(ছ) দেবি! কুমারলক্ষ্মণো বিজ্ঞাপয়তি, সজ্জো রথঃ, আরোহতু দেবীতি।

(জ) ইয়মহমারোহামি। পরিস্ফুরতীব মে গর্ভভারঃ, তৎ শনৈর্গচ্ছামঃ।

(ঝ) ইত ইতো দেবী।

---

(ছ) প্রবিশ্যেতি। সজ্জঃ সম্ভৃতঃ গমনোপকরণাদিনা সংযুক্তঃ।

(জ) সীতেতি। পরিস্ফুরতীব চলতীব। শনৈঃ মন্দং মন্দম্।

(ঝ) দুর্ম্মুখ ইতি। ইত ইতঃ অস্মাৎ অস্মাৎ স্থানাৎ দেবী আগচ্ছতু ইতি শেষঃ।

আর্য্যপুত্রকে ডাকিতেছি। হায়! হায়! একাকিনী আমাকে পরিত্যাগ করিয়া আর্য্যপুত্র গিয়াছেন; তা, এখন ইহা করিলেন কেন? হউক, তাঁহার উপরে কোপ দেখাইব, যদি তাঁহাকে দেখিয়া নিজের উপরে প্রভুত্ব রাখিতে পারি। এখানে কোন পরিজন আছ?

(ছ) দুর্ম্মুখ। (প্রবেশ করিয়া) দেবি! কুমার লক্ষ্মণ জানাইতেছেন যে, রথ সজ্জিত হইয়াছে; আপনি আরোহণ করুন।

(জ) সীতা। এই আমি আরোহণ করিতেছি। (উঠিয়া কতিপয় পদক্ষেপ করিয়া) আমার গর্ভ যেন স্পন্দিত হইতেছে; তা ধীরে ধীরে যাই।

(ঝ) দুর্ম্মুখ। দেবী এই এই স্থান দিয়া আগমন করুন।

(इति निष्क्रान्ताः सर्वे) (ट)।

# इति चित्रदर्शनो नाम प्रथमोऽङ्कः (ठ)।

(ञ) नमो नमस्तपोधनानाम्, नमो नमो रघुकुलदेवतानाम्, नमो नम आर्य्यपुत्र-चरणकमलानाम्, नमो नमः सकलगुरुजनानाम्।

---

(ञ) सीतेति। तपोधनानामित्यादौ सर्वत्र "चतुर्थ्यर्थे षष्ठी"ति पिङ्गलसूत्रेण षष्ठी। आर्य्यपुत्रचरणकमलानामिति गुरुत्वाद्बहुवचनम्।

"माङ्गल्यपुष्परवाद्यैः पूज्यामनभिवाद्य च।
न निष्क्रमेद्गृहात् प्राज्ञः सदाचारपरो नरः॥"

इति ज्योतिषतत्त्वधृतवचनादत्र पूज्यानामभिवादनं कृतमिति बोध्यम्।

(ट) इतीति। सर्वे सीताद्व्यतिरिक्तपरिजनाः। राजमहिष्याः सीतायाः शरीररक्षार्थं तत्रोपस्थितबहुतरपरिजनसम्भवात् केवलसीतादर्शनार्थी प्रत्यक्षत्वेऽपि निष्क्रान्ताः स इत्युक्तिर्नासङ्गता।

(ठ) इतीति। चित्रस्य दर्शनं यत्र सः। नाम प्रसिद्धं। अङ्कः परिच्छेदः समाप्त इति शेषः। एवमन्यत्रापि व्याख्येयम्।

"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः इत्यादि-
अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः॥" इत्यन्तमङ्कलक्षणं साहित्यदर्पणे द्रष्टव्यमिति।

इति गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मज महामहोपाध्याय महाकवि
भारताचार्य्य श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां
सुन्दररामचरितटीकायां सर्वार्थबोधिनीसमाख्यायां
प्रथमाङ्कविवरणं समाप्तम्॥०॥

---

(ঞ) সীতা। তপস্বীদিগকে নমস্কার, রঘুকুলের দেবতাদিগকে নমস্কার, আর্য্যপুত্রের চরণকমলে নমস্কার এবং সকল গুরুজনকে নমস্কার।

(ট) (ইহার পর সকলে চলিয়া গেল।)

(ঠ) চিত্রদর্শন নামে প্রথম অঙ্ক সমাপ্ত॥০॥

# द्वितीयोऽङ्कः ।

---:o:---

नेपथ्ये । स्वागतं तपोधनायाः ? (क) ।

(प्रविश्याध्वगवेशा) तापसी । अये ! वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते (ख) ।

(क) नेपथ्य इति । तप एव धनं प्राधान्येनोपार्ज्जनीयं यस्यास्तस्याः स्वागतं सुविन आगमनं किमु इति काकुः, तवागमने कोऽपि क्लेशो न जातः किमित्यर्थः ।

(ख) प्रविश्येति । अध्वगवेशा पथिकवेशा दण्डच्छत्रधारिणीत्यर्थः । वनदेवता वनाधिकारिणी तपःप्रभाववती काचन मानवी वनवासिनी । सा चेयं पञ्चवटीवाससमये सीतया सार्द्धं सखित्वं कृतवती वासन्ती च नामेति तृतीयाङ्के व्यक्तीभविष्यति । फलकुसुमपल्लवैर्विरचितमर्घ्यं तेन । उपतिष्ठते उपास्ते । "पथ्याराधनयोश्च" इत्यात्मनेपदम् । यद्यपि—

"सिद्धार्थमक्षतञ्चैव दूर्वा च तिलमेव च ।
यवं गन्धं फलं पुष्पमष्टाङ्गं त्वर्घ्यमुच्यते ॥"

इति महाकपिलपञ्चरात्रादिवचनात् अष्टाङ्गार्घ्यं सम्भवति ; किन्तु फलकुसुमपल्लवरूपद्रव्यत्रयात्मकमर्घ्यं क्वापि न दृश्यते, तथापि यथालाभोपपन्नद्रव्यकल्पितार्घ्यस्यापि देयत्ववचनादेव वनभूमिसुलभैरष्टाङ्गार्घ्यान्तर्गतैः फलकुसुमपल्लवैः कल्पितमर्घ्यमभिहितमिति न दोषः । तथा च गन्धर्वतन्त्रे—

"उक्तानुक्तैस्तथा पुष्पैर्जलजैः स्थलजैरपि ।
पत्रैः सर्वैर्यथालाभं भक्तिमान् सततं यजेत् ॥"

---

(क) নেপথ্যে। তাপসীর শুভাগমন ত ?

(খ) পথিকবেশে তাপসী। (প্রবেশ করিয়া) ওহে! এই বনদেবতা ফল, পুষ্প ও পল্লবের অর্ঘ্যদ্বারা আমার পূজা করিতেছেন।

(प्रविश्य) वनदेवता। (अर्घ्यं विकीर्य्य) (ग)

यथेच्छं भोग्यं (१) वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया तोयं यदपि तपसो (२) योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥१॥

(ग) प्रविश्येति। विकीर्य्य निक्षिप्य तापसीं प्रतीति शेषः।

यथेच्छमिति। इदं वनं वो युष्माकं यथेच्छं यथाभिलाषं भोग्यं व्यवहार्य्यम्। तथा अयं विद्यमानो दिवस इत्यर्थः मे मम सुदिवसः शुभदिनं तव समागमादिति शेषः। कथमित्याह, हि यस्मात्, सतां लोकानां सद्भिः साधुभिः सङ्गः संसर्गः कथमपि अनिर्वचनीयेनेत्यर्थः पुण्येन भवति। वनस्य यथेच्छभोग्यत्वं प्रति हेतुमाह तरुच्छायेति। इह वने तरुच्छाया, तोयं जलम्, तपसो योग्यं तपस्विनामुचितं फलं वा मूलं वा यदपि अश्यत इत्यशनं भोजनीयमस्तीति शेषः, तदपि सर्वं वो युष्माकं न पराधीनं न परानुमत्यपेक्षमित्यर्थः स्वकीयमिव सर्वं व्यवहार्य्यं न तु कस्यचिदपि अनुमतिरपेक्षणीयेति भावः।

अत्र "अयं मे सुदिवसः सता"मित्याद्यंशे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, तथा यथेच्छभोग्यत्वरूपकार्य्यस्य अपराधीनत्वरूपकारणेन समर्थनादर्थान्तरन्यासान्तरञ्च इत्यनयोः सजातीयसङ्करः।

तथा सुदिवसत्वं प्रति हेतोरनुक्तेर्निर्हेतुत्वदोषः, स च "भवत्सङ्गात् सङ्गो भवति सह पुण्येन सुजनै"रिति द्वितीयचरणपाठेन समाधेयः।

"सन्साधौ पूजिते लोके" इत्यादि व्याडिः।

शिखरिणी वृत्तम् ॥१॥

(গ) বনদেবতা। (প্রবেশপূর্বক অর্ঘ্য নিক্ষেপ করিয়া)

(१) यथेच्छाभोग्यमिति पाठान्तरम्। (२) तपसामिति क्वापि पाठः।

तापसी। किमत्रोच्यते? (घ)

प्रियप्राया वृत्तिर्विनयमधुरो (१) वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।
पुरो वा पश्चाद्वा तदिदमविपर्य्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥२॥

(इत्युपविशतः।)

(घ) तापसीति। अत्र भवत्याधिकृते वने किमुच्यते मयेति शेषः। अत्र सदाचार-विनयादिकं सर्व्वमेव सुस्थितमिति किमपि वक्तव्यं नास्तीति भावः।

तदेव सदाचारादिकं दर्शयति प्रियेति। साधूनां सज्जनानां वृत्तिः व्यवहारः प्रायेण प्रियेति प्रियप्राया बाहुल्येन प्रीतिकारिणीत्यर्थः, वाचि वाक्ये नियमः रीतिः, वाक्यव्यवहार इति यावत् विनयेन मधुरः मनोहरः, तथा मतिर्बुद्धिः प्रकृत्या स्वभावेनैव कल्याणी परेषां मङ्गलकारिणी, तथा परिचयः परस्परं विशेषेण ज्ञानम् अनवगीतः प्रतारणादिदोषाभावात् अनिन्दितः। अतएव पुरः प्रथमे वा पश्चात् शेषे वा अविपर्य्यासितः अपरिवर्त्तितः रसः अनुरागो यस्मिन् तत् तथोक्तम्, तत् प्रसिद्धमिदम् अनुपधि कपटताशून्यम् अतएव विशुद्धं निर्म्मलं रहसि निर्ज्जने भवम् अन्यैरज्ञेयं चरित्रमित्यर्थः विजयते उत्कर्षेण वर्त्तते।

अत्र अप्रस्तुतात् साधुचरित्रसामान्यात् प्रस्तुतस्य वनदेवताचारलक्षणविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। तथा चरित्रोत्कर्षं प्रति प्रियप्रायत्वप्रभृतिबहुकारणोक्तेः समुच्चयश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

---

এই বন, আপনাদের ইচ্ছানুসারে ভোগ্য; ইহা আমার শুভ দিন; কারণ, সজ্জনের সহিত সজ্জনের সংসর্গ, অনির্ব্বচনীয় পুণ্যেই হইয়া থাকে। বৃক্ষের ছায়া, জল এবং তপস্যার পক্ষে যোগ্য ভোজ্য ফল বা মূল, সে সমস্তই এ বনে আপনার পরাধীন নহে ॥১॥

(१) मसृण इति पाठभेदः।

वन । कां पुनरत्रभवतीमवगच्छामि ? । (ङ)

तापसी । आत्रेय्यस्मि (च) ।

वन । आत्रेयि ! कुतः पुनरिहागम्यते, किं प्रयोजनं वा दण्डकारण्यप्रवेशे (१) ? । (छ)

"कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवः" इत्यमरः ।

विजयत इति "विपराभ्यां जि"रित्यात्मनेपदम् । शिखरिणी वृत्तम् ॥२॥

(ङ) वनेति । भवती का इति ज्ञातुमिच्छामीत्यर्थः ।

(च) तापसीति । ब्राह्मणवत् सकलसंस्कारैः संस्कृता काचित् ब्राह्मणजातीया स्त्री आत्रेयी । तथा च यमः—

"जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवच्च या ।
गर्भिणी वा तथा या स्यात्तामात्रेयीं विनिर्द्दिशेत् ॥"

अस्या विशेषनामापि दैवदत्तादिवदात्रेयीति बोध्यम् ।

(छ) वनेति । कुतः कस्मात् स्थानादित्यर्थः ।

---

(ঘ) তাপসী। এ ক্ষেত্রে বলিব কি ?

সজ্জনের ব্যবহার, প্রায়শই প্রীতিকারক ; বাক্যের নিয়ম, বিনয়বশতঃ মধুর ; বুদ্ধি স্বভাবতই মঙ্গলকারিণী ; পরিচয় আনন্দিত এবং যাহাতে প্রথমে বা পরে অনুরাগ পরিবর্ত্তিত হয় না, এই সেই প্রতারণাবিহীন ও নির্ম্মল সাধুজনের চরিত্র সর্ব্বাপেক্ষা উৎকৃষ্ট ।২॥

(ইহার পর উভয়ে উপবেশন করিলেন ।)

(ঙ) বনদেবতা । আপনাকে কি বলিয়া জানিব ?

(চ) তাপসী । আমি আত্রেয়ী ।

(ছ) বনদেবতা । আত্রেয়ি ! আপনি কোথা হইতে এখানে আসিতেছেন এবং দণ্ডকারণ্যে প্রবেশের প্রয়োজনই বা কি ?

---

(१) किं प्रयोजनो वा दण्डकारण्यप्रचार इति पाठान्तरम् ।

आत्रेयी। अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्य्यटामि ॥३॥

---

अस्मिन्निति। अस्मिन् प्रदेशे दण्डकारण्यभूभागे अगस्त्यप्रमुखाः अगस्त्यादयो भूयांसः बहवः, उद्गीथः सामवेदस्य अंशविशेषस्तं विदन्ति ये ते उद्गीथविदः विशेषवाचिन उद्गीथशब्दस्य सामान्यपरत्वाङ्गीकारात् सामवेदज्ञा इत्यर्थः, वसन्ति। तेषां वेदज्ञत्वेन वेदान्तज्ञत्वम् अवश्यमेव सम्भवपरमिति भावः। तेभ्योऽगस्त्यप्रमुखमुनिभ्यः निगमो वेदः तस्यान्तः शेषभागः तद्विद्यां वेदान्तविद्याम् उपनिषदमिति यावत् अधिगन्तुमध्येतुं वाल्मीकिपार्श्वात् वाल्मीकेराश्रमादित्यर्थः इह दण्डकारण्ये पर्य्यटामि अगस्त्यादीनामाश्रममन्विष्यान्विष्य परिभ्रमामीत्यर्थः।

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादि छान्दोग्योपनिषत्।

"वेदान्तो नाम उपनिषत् प्रमाणम्, तदुपकारीणि च शारीरकसूत्रादीनि" इति वेदान्तसार

ननु "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयान्मृतः सोऽधो गच्छती"ति नित्यादितत्त्वधृतनृसिंहतापनीयश्रुत्या स्त्रिया वेदाध्ययननिषेधेन कथमेव "तेभ्योऽधिगन्तुं निगमान्तविद्या"मित्युक्तमिति चेत्, सत्यं द्विविधाः स्त्रियः, ब्रह्मवादिन्यः गृहस्थाश्च, तत्र ब्रह्मवादिनीनां वेदाध्ययनं विहितमेव। यथा हारीतः—

"द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्य्ये"ति।

यमश्च—"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां सावित्रीवाचनं तथा॥"

अतएवोक्तश्रुतिस्तु गृहस्थायाः स्त्रिया वेदाध्ययननिषेधपरेति बोध्यम्। इन्द्रवज्रा वृत्तम् ॥३॥

বন। যদি তাবদন্যেঽপি মুনয়স্তমেব হি পুরাণব্রহ্মবাদিন প্রাচেতসমৃষিং ব্রহ্মপারায়ণায়োপাসতে, তৎ কোঽয়মত্রার্য্যায়া দীর্ঘপ্রবাসপ্রয়াসঃ? (জ)

আত্রেয়ী। তত্র মহানধ্যয়নপ্রত্যূহ ইতি দীর্ঘপ্রবাসোঽঙ্গীকৃতঃ। (ঝ)

বন। কীদৃশঃ?

আত্রেয়ী। তস্য ভগবতঃ কেনাপি দেবতাবিশেষেণ সর্বপ্রকারাদ্ভুতং স্তন্যত্যাগমাত্রকে বয়সি বর্ত্তমানং দারকদ্বয়মুপনীতম্।

---

(জ) বনেতি। পুরাণঃ প্রাচীনো ব্রহ্মবাদী বেদবক্তা তং প্রাচীনবেদাধ্যাপকমিত্যর্থঃ। প্রাচেতসমৃষিং বাল্মীকিমুনিম। ব্রহ্মণো বেদস্য পারং অন্তং অয়নং গমনং তস্মৈ সম্পূর্ণবেদজ্ঞানলাভায়েত্যর্থঃ। উপাসতে আরাধ্য বর্তিনা অধ্যাপকত্বেনাবলম্বন্ত ইত্যর্থঃ।

(ঝ) আত্রেয়ীতি। অত্র বাল্মীকিঃ সকাশে। অধ্যয়নপ্রত্যূহঃ অধ্যয়নবিঘ্নঃ। "বিঘ্নোঽন্তরায়ঃ প্রত্যূহঃ" ইত্যমরঃ।

(ঞ) আত্রেয়ীতি। তস্য ভগবতঃ বাল্মীকেঃ সমীপ ইত্যর্থঃ, কেনাপি অবিজ্ঞাতনামা

---

আত্রেয়ী। এই প্রদেশে অগস্ত্যপ্রভৃতি বহুতর উদ্গীথবিদ্ বাস করেন, তাঁহাদের নিকট হইতে বেদান্তবিদ্যা লাভ করিবার নিমিত্ত বাল্মীকির নিকট হইতে এখানে আসিতেছি ॥৩॥

(জ) বনদেবতা। যদি অন্য মুনিগণও সেই প্রাচীন বেদাধ্যাপক বাল্মীকিমুনিকেই সম্পূর্ণ বেদবিদ্যা লাভের নিমিত্ত উপাসনা করিয়া থাকেন; তবে আপনার এই দীর্ঘপ্রবাসের প্রয়াস কেন?

(ঝ) আত্রেয়ী। সেখানে অধ্যয়নের গুরুতর বিঘ্ন; এই জন্যই দীর্ঘ প্রবাস স্বীকার করিয়াছি।

বনদেবতা। কি রকম?

तत् खलु न केवलमृषीणामपि तु (१) सचराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति (ञ)।

वन। अपि तयोर्नामसंविज्ञानमस्ति?। (ट)

आत्रेयी। तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः (ठ)।

प्रभावेणेत्यर्थः, देवताविशेषेण आत्रेय्या तु नासौ देवता परिचिता किन्तु गङ्गयेति कविरेव तृतीयाङ्के प्रकाशयिष्यति। स्तन्यत्यागमात्रके वयसि तृतीयवर्षारम्भे दारकद्वयं बालक-युगलम् उपस्थाप्य अर्पितम्। तत् दारकद्वयम्। सचराचराणां स्थावरजङ्गमात्मकानां भूतानां प्राणिनाम्। तत्र जङ्गमभूतानि मनुष्यपशुपक्ष्यादयः, स्थावरभूतानि केचित् वृहत्कायसर्पादयः, ये स्वस्थानाच्चलितुं न शक्नुवन्ति। आन्तराणि तत्त्वानि अन्तःकरणानि उपस्नेहयति वात्सल्ययुक्तानि करोति।

(ट) वनेति। नामसंविज्ञानं नामपरिचयः। अपिशब्दः प्रश्ने अस्ति किमित्यर्थः; भवत्या इति शेषः।

(ठ) आत्रेयीति। तयैव देवतया गङ्गयेत्यर्थः। कुशो लवश्चेति नामनी (नामद्वयम्) आख्याते, प्रभावो माहात्म्यञ्च आख्यात इति वाक्यभेदेनान्वयः कर्त्तव्यः अन्यथा "नपुंसकानपुंसकयोर्नपुंसकमेकवद्वे"ति वचनेन आख्यात इत्यस्य नपुंसकत्वं प्रसज्येत।

---

(ঞ) আত্রেয়ী। কোনও প্রধান দেবতা, সর্ব্বপ্রকারেই আশ্চর্য্য এবং স্তন্য দুগ্ধ ত্যাগের মাত্র বয়সে বর্ত্তমান দুইটী বালককে সেই ভগবান্ বাল্মীকির নিকটে উপস্থিত করিয়া গিয়াছেন। তাহারা কেবল ঋষিদিগের নহে; কিন্তু স্থাবর-জঙ্গমাত্মক সমস্ত প্রাণীরই অন্তঃকরণকে বাৎসল্যযুক্ত করিতেছে।

(ট) বনদেবতা। তাহাদের নাম জানা আছে কি?

(१) केवलमृषीणामेव न किन्तु तिरश्चां भूतानामपि अन्तराणि इति पाठान्तरम्।

—वन। कीदृशः प्रभावः?

आत्रेयी। तयोः किल सरहस्यजृम्भकास्त्राण्याजन्मसिद्धानीति (ड)।

वन। अहोनुभोः! चित्रमेतत् (१) (ढ)।

आत्रेयी। तौ च भगवता वाल्मीकिना धात्रीकर्म्मवत्सलतां (२) परिगृह्य पोषितौ परिरक्षितौ च, वृत्तचौड़कर्म्मणोश्च (३) तयोस्त्रयीवर्जमितरा विद्याः सावधानेन परिनिष्ठापिताः, समनन्तरञ्च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय तौ त्रयीविद्यामध्यापितौ। न ह्येताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति (ण)। यतः—

(ड) आत्रेयीति। रहसि निर्जने भव इति रहस्यं मन्त्रस्तत्सहितानि।

(ढ) वनेति। अहोनुभोरित्येकमेव विस्मयविशेषद्योतकमव्ययम्। एतत् सरहस्यजृम्भकास्त्राणामाजन्मसिद्धत्वं चित्रम् आश्चर्य्यम् अन्येषां शिक्षयैव तद्दर्शनादिति भावः।

(ण) आत्रेयीति। तौ कुशलवौ। धात्रीकर्म्मणा उपमातृकार्य्येण वत्सलतां स्नेहं परिगृह्य स्वीकृत्य समस्तविषयनिष्पृहेणापि सता अतिमनोहरत्वात् तयोरुपरि

(ঠ) আত্রেয়ী। সেই দেবতাই, তাহাদের কুশ ও লব এই নাম এবং প্রভাব বলিয়া গিয়াছেন।

বনদেবতা। প্রভাব কি রকম?

(ড) আত্রেয়ী। মন্ত্রের সহিত জৃম্ভকাস্ত্র সকল তাহাদের আজন্মসিদ্ধ।

(ঢ) বনদেবতা। ও! ইহা আশ্চর্য্য বটে!

(१) इति हि भोश्चित्रमिति क्वचित् पाठः। (२) धात्रीकर्म्मवस्तुत इति क्वापि पाठः। (३) कृतचड़ौ च परिपाठितौ इति क्वचित् पाठः।

ममतां विधायेत्यर्थः। पोषितौ वर्द्धितौ। वृत्तं सम्पन्नं चौड़कर्म्म चूड़ाकार्य्यं ययोः तयोः। तयोः कुशलवयोः त्रयीवर्ज्ज वेदं विहाय इतरा व्याकरणादयो विद्याः, सावधानेन तया: शिष्यां प्रत्येकाग्रताविशिष्टेन परिनिष्ठापिताः आरोपिताः तौ अध्यापितावित्यर्थः। समनन्तरञ्च ततः परञ्च गर्भात् मातृरुदरसंयोगात् एकादशे गर्भैयनवमाससहितैकादशे इत्यर्थः। क्षात्रेण कल्पेन क्षत्रियविधानानुसारेण उपनीय उपनयनसंस्कारं कृत्वा। अतिप्रदीप्तप्रज्ञाभ्यां प्रखरबुद्धिशालिभ्याम् एताभ्यां कुशलवाभ्यां सह अस्मदादेः मादृशस्याल्पबुद्धेर्जनस्येत्यर्थः अध्ययनयोगः एकयोगेनाध्ययनं नहि अस्ति नहि सम्भवतीत्यर्थः। तत्र कारणमाह यत इति।

त्रयीं वर्जयतीति त्रयीवर्ज्जं कर्म्मण्यण, परिनिष्ठापिता इति क्रियाविशेषणमेतत्। एतच्च उपनयनात् प्राक् वेदोच्चारणनिषेधादुक्तम्। यथा मनुः—

"नाभिव्याहरयेद्ब्रह्म स्वधानिनयमादृते।
शूद्रेण हि समस्तावद्यावद्वेदे न जायते॥"

गर्भैकादशैकादशवर्षयोः क्षत्रियाणामुपनयनमुख्यकालत्वात् गर्भैकादशे वर्षे इत्युक्तम्। तथा च मनुयाज्ञवल्क्यौ—

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥"
"गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम्॥"

अस्मत्प्रणीतस्मृतिचिन्तामणौ सर्वमेतत् प्रपञ्चितम्।

रुरुचर्म्म, मौर्वी मेखला, शणसूत्रमयमुपवीतमित्यादिक्षत्रियोपनयनकल्पः मनुसंहितामिताक्षरादौ द्रष्टव्यः।

अत्र त्रयीतरा विद्या इत्यनेनैवोपपत्तौ त्रयीवर्ज्जमिति वर्ज्जशब्दोपादानादधिकपदत्वदोषः, स तु त्रयीतरा इति पाठेनैव समाधेयः।

(৩) আত্রেয়ী। ভগবান্ বাল্মীকি বাৎসল্যবশতঃ ধাত্রীর কার্য্য গ্রহণ করিয়া তাহাদিগকে পরিবর্দ্ধিত ও পরিরক্ষিত করিয়াছেন এবং চূড়া হইয়া

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जड़े
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च पुन-(১) र्भूयान् भेदः फलं प्रति. तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥४॥

---

वितरतीति। गुरुरध्यापकः प्राज्ञे बुद्धिमति छात्रे यथा विद्या वितरति ददाति, जड़े निर्बोधे छात्रेऽपि तथैव विद्या वितरतीत्यर्थः। तु किन्तु तयोर्ज्ञाने शास्त्रार्थबोधविषये शक्तिं सामर्थ्यं न खलु करोति बुद्धिमतच्छात्रस्य न खलु सामर्थ्यविशेषं जनयति, वा किंवा शक्तिम् अपहन्ति निर्बोधच्छात्रस्य सामर्थ्य न खलु विनाशयति सुबोधनिर्बोधयोः समानाध्यापनात् समानभावेनैव शास्त्रज्ञानं वर्द्धयितुमिच्छतीत्यर्थः। पुनः किन्तु फलं शास्त्रज्ञानं प्रति शास्त्रीयज्ञानप्रकाशकाले इत्यर्थः, भूयान् भेदः महावैषम्यं भवति बुद्धिमान बाहुल्येन शास्त्रज्ञानवान्, निर्बोधस्तु सर्वथैव क्वचित् ज्ञानहीनः क्वचिद्वा किञ्चिज्ज्ञानी स्यादित्यर्थः। तत वैषम्यं यथा—शुचिर्निर्म्मलो मणिश्चन्द्रकान्तादिरवं बिम्बोद्ग्राहे प्रतिबिम्बग्रहणे प्रभवति समर्थो भवति, मृदा चयः मृत्तिकानां स्तूपं न बिम्बोद्ग्राहे प्रभवतीत्यर्थः। युगपत् समानमधीयानानां मध्ये कस्यचिद्बुद्धिमतो ज्ञानातिकर्षे अन्येषामल्पमतीनां तत्राध्ययनं नितान्तापमानकरमिति तत्रैकत्र समाध्ययनमयुक्तं इति भावः।

अत्राप्रस्तुतात् प्राज्ञसामान्यात् प्रस्तुतयोः प्राज्ञविशेषयोः कुशलवयोः प्रतीतिः तथा अप्रस्तुतात् जड़सामान्यात् प्रस्तुतावेर्योरूपजड़विशेषप्रतीतेश्च अप्रस्तुतप्रशंसा, तथा प्राज्ञे न

গেলে পর তাহাদিগকে বেদ ভিন্ন আর সকল বিদ্যা মনোযোগের সহিত শিক্ষা করাইয়াছেন; তাহার পর আবার গর্ভ হইতে একাদশ বৎসরে ক্ষত্রিয়ের নিয়মানুসারে উপনয়ন দিয়া, তাহাদিগকে বেদশাস্ত্র পড়াইয়াছেন; সুতরাং অতিতীক্ষ্ণবুদ্ধিসম্পন্ন এই বালক দুইটীর সঙ্গে আমাদের একযোগে অধ্যয়ন সম্ভব হয় না। যেহেতু—

---

(১) तयोरिति पाठान्तरम्।

वन। अयमसावध्ययनप्रत्यूहः?। (त)

आत्रेयी। अपरश्च (थ)।

वन। अथापरः कः?

आत्रेयी। अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये (१) नदीं तमसामनुप्रपन्नः, तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन

खलु शक्तिं करोति, न वा जडे शक्तिम् अपहन्तीति क्रमिकान्वयबोधात् यथासंख्यं तथा श्रौती उपमा चेत्येतेषामङ्गाङ्गिभावेन सङ्करालङ्कारः।

तथा 'न मृदां चयः' इत्यत्र तुशब्दः किन्तुशब्दो वा वाच्यो नोक्त इति वाच्यानभिधान-दोषः स तु 'न तु मृच्चयः' इति पाठेन समाधेयः।

प्राज्ञे जडे इति सम्प्रदाने अधिकरणत्वविवक्षया सप्तमी।

हरिणी वृत्तम्॥४॥

(त) वनेति। अत्र असौ इति तच्छब्दसमानार्थः, तेन सोऽयमित्यर्थः।

(थ) आत्रेयीति। अपरश्च तत्राध्ययनप्रत्यूहोऽस्तीति शेषः।

অধ্যাপক, বুদ্ধিমান্ ছাত্রকে যে ভাবে বিদ্যা দান করেন, নির্ব্বোধ ছাত্রকেও সেইভাবে বিদ্যা দান করিয়া থাকেন; কিন্তু জ্ঞানের বিষয়ে তিনি তাহাদের শক্তি জন্মানও না; কিংবা নষ্টও করেন না; অথ চ ফলের বেলায় তাহাদের অত্যন্ত বৈষম্য হইয়া পড়ে; তাহা যেমন, নির্ম্মল মণি প্রতিবিম্ব গ্রহণে সমর্থ হয়; কিন্তু মৃত্তিকাস্তূপও তাহাতে সমর্থ হয় না॥৪॥

(ত) বনদেবতা। এই সেই অধ্যয়নের বিঘ্ন?

(থ) আত্রেয়ী। আরও আছে।

বনদেবতা। আর কি?

---

(१) माध्यन्दिनसवनाय इति पाठान्तरम्।

विध्यमानं ददर्श, आकस्मिकप्रत्यवभासाञ्च देवीं वाचमनुष्टुभेन छन्दसा परिणतामभ्युदैरयत्—(१) (द)

"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥" इति ॥५॥

---

(द) आवेर्यौति। ब्रह्मा ब्राह्मणश्चासौ ऋषिश्चेति ब्रह्मर्षिः। मध्यन्दिनसमये मध्याह्नकाले। तमसां तमसाभिधानां नदीम् अनुप्रपन्नः प्राप्तो गत इत्यर्थः। युग्मेन मिथुनभावेन चरत इति युग्मचारिणौ तयोर्विहरतोरित्यर्थः, क्रौञ्चयोः पक्षिविशेषयोः एकं पुरुषक्रौञ्चम्। विध्यमानं बाणेन ताड्यमानम्। आकस्मिकः सहसोत्पन्नः न तु चिन्ताप्रसूत इत्यर्थः, प्रत्यवभासः प्रकाशो यस्यास्ताम्। परिणतां स्वयमेव ग्रथितीभूतामित्यर्थः, अभ्युदैरयत् उच्चारितवान्।

दिनस्य मध्यमिति मध्यन्दिनम् "धेन्वनडुहादयश्चे"ति निपातनात् सिद्धम्।

"क्रुङ् क्रौञ्चोऽथ बकः कह्वः" इत्यमरः।

अनुष्टुप्छन्दसो लक्षणं यथा श्रुतबोधे—

"पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठन्तु पादानां शेषेष्वनियमो मतः॥"

अतएव ज्ञापकादकारान्तोऽपि अनुष्टुभशब्दो मन्तव्यः।

किमभ्युदैरयदित्याह मेति। हे निषाद ! चाण्डाल ! व्याध इति केचित्, त्वं शाश्वतीः समाः नित्यान् वत्सरान् चिरकालमित्यर्थः प्रतिष्ठाम् आश्रयं मा अगमः न प्राप्नुहि

(द) আবেয়ী। তাহার পর, এক দিন দুই প্রহরের সময় সেই ব্রহ্মর্ষি বাল্মীকি, তমসানদীতে গিয়াছিলেন; সেখানে মিথুনভাবে সঞ্চারী দুইটী ক্রৌঞ্চপক্ষীর (কোঁচবকের) মধ্যে পুংপক্ষীটীকে ব্যাধকর্ত্তৃক বিদ্ধ হইতে দেখিলেন; তখন অতর্কিতভাবে আবির্ভূত এবং অনুষ্টুপ্ছন্দে পরিণত বাগ্দেবীকে উচ্চারণ করিলেন—

---

(१) अनुष्टुप्छन्दसा परिच्छिन्नामिति पाठभेदः।

वन। चित्रम्, आम्नायादन्योऽयं नूतनश्छन्दसामवतार (भ)।

चिरकालं त्वं सुखेनावस्थानं न प्राप्नुहीत्यर्थः, यत् यस्मात् त्वं क्रौञ्चमिथुनात् (कोँचबक इति प्रसिद्ध) पक्षिविशेषद्वयमध्यादित्यर्थः कामेन मोहितं विषयान्तरज्ञानशून्यमित्यर्थः अन्यथा हन्तुं त्वं नाशक्त इति भावः, एकं पुंक्रौञ्चम् अवधीनिहतवानसि। इति समाख्यमानमावोक्तिर्न त्वभिसम्पातः।

अतएव ब्रह्मर्षिवाक्यात् "शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च। स व्रजेत् कालसूत्रञ्च स्वामिनश्च विशेषतः॥" इति ब्रह्मवैवर्तपुराणाच्च रममाणतः हननत्यादिकं पापजनकमिति बोध्यम्।

"निषादश्वपचावन्तेवासि-चाण्डाल-पुक्कसाः।" "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः।" "शाश्वतस्तु ध्रुवो नित्य"मिति चामरः।

वाल्मीकिना शोकेनोच्यमानत्वादिदमेव वाक्यं प्रथमं श्लोकनामाऽभूत्। तथा च वाल्मीकीयरामायणम्—

"तस्येत्थं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः।
शोकार्त्तेनास्य शकुनेः किमिदं व्याहृतं मया॥
चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम्।
शिष्यञ्चैवाब्रवीद्वाक्यं इदं स मुनिपुङ्गवः॥
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः।
शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा॥"

एतदनुसारादेव अन्यदपि छन्दोबद्धं वाक्यं श्लोक इत्याख्यायते। तथा इमं श्लोकं सार्द्धद्वयवर्षमध्ये चेत् सुखस्थं कश्चिद् ब्रूयात्, तदा स बालको महामेधावी स्यादिति लोकप्रवादः॥५॥

(भ) वनेति। चित्रम् आश्चर्यं श्रुतमिति शेषः। आम्नायते सम्यगभ्यस्यत इत्याम्नायो वेदः "इङ्भ्याञ्चे"ति म्नाधातोर्घञ्, "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः। आम्नाया-

"হে চণ্ডাল! তুমি দীর্ঘকাল আশ্রয় পাইবে না। যেহেতু, ক্রৌঞ্চদ্বয় হইতে কামমোহিত একটীকে বধ করিয়াছ" ॥৫॥

आत्रेयी । तेन खलु पुनः समयेन तं भगवन्तमाविर्भूत-शब्दब्रह्मप्रकाशमृषिमुपसङ्गम्य भगवान् भूतभावनः पद्मयोनि-रवोचत्—"ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद्ब्रूहि रामचरितम्, अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु, आद्यः कविरसि" इत्युक्त्वान्तर्हितः । अथ भगवान् प्राचेतसः प्रथमं शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं प्रणिनाय (न) ।

---

इदानीं वेदान्तर्गतानुष्टुप्छन्दस इत्यर्थः अन्यो भिन्नो नूतनः प्रथमः अयं छन्दसाम् अवतारः आविर्भावः । वेदे ईदृशच्छन्दोऽस्त्येव, किन्तु मनुष्यकृतभाषायामयमेव प्रथमोऽनुष्टुभ आविर्भाव इत्यर्थः । तथा च वेदान्तदर्शनभाष्ये शङ्करभगवत्पूज्यपादधृतम्—

"एष सर्वेषु भूतेषु गूढ़ात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥" कठोपनिषद्वाक्यम् ।

उपनिषदादौ ईदृशान्यपराण्यपि अविकलान्यनुष्टुप्छन्दांसि दृश्यन्ते ।

(न) आत्रेयीति । तं वाल्मीकिम् । आविर्भूतः प्रकाशितः शब्दब्रह्मणः "मा निषाद"-त्यादिशब्दरूपपरमात्मनः प्रकाशः विकासः उच्चारणमिति यावत यस्मात् तं तथोक्तम् । भूतानि प्राणिनः भावयति उत्पादयतीति भूतभावनो जगत्स्रष्टा पद्मं विष्णोर्नाभिकमलं योनिरुत्पत्तिस्थानं यस्य स पद्मयोनिर्ब्रह्मा । वागात्मनि शब्दरूपे ब्रह्मणि प्रबुद्धोऽसि प्रकृष्टज्ञानवानसि बाहुल्येन शब्दब्रह्म ज्ञातवानसीत्यर्थः । तत्तस्मात् । रामचरितकथने यावती भाषाज्ञानस्यावश्यकता तावत्तव जातमिति भावः ।

ननु साम्प्रतमपि सीतारामौ जीवतः अतएव अज्ञातत्वात् तयोर्भविष्यच्चरितकथनमसम्भव-मेव इत्यत आह अव्याहतेति । अव्याहतं केनाप्यनिवारितसामर्थ्यं ज्योतिस्तेजो यस्य तत्ता-दृशम् आर्षम् ऋषिसम्बन्धीयं चक्षुः प्रतिभातु, भूतभविष्यद्वर्त्तमानज्ञानं तव भवत्वित्यर्थः ; अतएव तव भविष्यतोऽपि सम्यग्ज्ञानात् भविष्यद्रामचरितकथनं नासम्भवमिति भावः । आद्यः कविः प्रथमो वर्णनाकारी विद्वानसि सम्यग्रामचरितकथनादिति भावः । अथा-

---

(ध) বনদেবতা । আশ্চর্য্য, বেদ ভিন্ন এই নূতন ছন্দের আবির্ভাব ।

वन। हन्त! तर्हि पण्डितः (१) संसारः (प)।

न्तरम्। प्राचेतसो वाल्मीकिः। शब्दब्रह्मणः शब्दस्वरूपब्रह्मणः। तादृशं विवर्त्तं रामायणत्वेन मिथ्याप्रतीतिविषयम्। वास्तविकपक्षे रामायणाख्यः शब्दसमूहोऽपि ब्रह्मैव अतएव तस्य रामायणत्वेन या पृथक्प्रतीतिः सा मिथ्याप्रतीतिरिव रज्जौ सर्पप्रतीतिवदिति बोध्यम्। इतिहासं पुरावृत्तम्। रामोऽयते ज्ञायते यस्मात् तद्रामायणं तदाख्यं ग्रन्थं प्रणिनाय विरचयामास। तस्य रामायणस्यालोचनयैव कालो गच्छति न त्वध्यापनावसरो-ऽस्तीति द्वितीयो विघ्न इति बोध्यम्।

"इदं कविभ्यः" इत्यादिश्लोकव्याख्यानावसरे शब्दस्य ब्रह्मत्वप्रतिपादिका श्रुतिरुक्ता।

विवर्त्तनिरूपणं यथा वेदान्तसारे—

"स तत्त्वतोऽन्यथा प्रथा विकार इत्युदाहृतः।
अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदीरितः॥"

केचित्तु विवर्त्तः परिणाम इति वर्णयन्ति, तदसङ्गतम्, ब्रह्मणः परिणामाभावात्। तथा च वेदान्तदर्शनभाष्यटीकायां वाचस्पतिमिश्राः—

"विवर्त्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते॥"

(न) আত্রেয়ী। সেই সময়, যাঁহার নিকট শব্দময় ব্রহ্ম স্বয়ং আবির্ভূত হইয়াছিলেন, সেই ভগবান্ বাল্মীকির নিকটে ভগবান সৃষ্টিকর্ত্তা ব্রহ্মা উপস্থিত হইয়া বলিলেন—"ঋষি! তুমি বাঙ্ময়ব্রহ্মকে সম্যক্‌রূপে জানিয়াছ, অতএব রামের চরিত্র বর্ণনা কর; অব্যাহত তেজ, আর্ষ চক্ষু, তোমার প্রকাশিত হউক; তুমি আদিকবি হইলে" এই কথা বলিয়া অন্তর্হিত হইলেন। তাহার পর ভগবান্ বাল্মীকি শব্দময় ব্রহ্মের সেইরূপ প্রথম বিকারস্বরূপ রামায়ণনামক ইতিহাস প্রণয়ন করিয়াছেন।

(१) मण्डित इति पाठान्तरम्।

आत्रेयी। तस्मादवोचम्, तत्र महानध्ययनप्रत्यूह (१) इति।

वन। युज्यते (फ)।

आत्रेयी। विश्रान्तास्मि भद्रे! सम्प्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि (ब)।

वन। इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण।

आत्रेयी। (सवाष्पम्) अप्येतत्तपोवनम्? अप्येषा पञ्चवटी? अपि सरिदियं गोदावरी? अप्ययं गिरिप्रस्रवणः? अपि वनदेवता जनस्थानवासिनी वासन्ती त्वम्? (भ)

---

(प) वनेति। हन्तेति हर्षसूचकमव्ययम्। तर्हि तादृशरामायणे रचिते सति संसारी जगज्जनः पण्डितो जात इति शेषः। "मा निषाद"त्यादिवत् सरलभाषया रचितत्वेन रामायणस्य वेदादतीवसुगमत्वात् सर्व एव तत् बुध्येरन्निति भावः।

(फ) वनेति। युज्यते, त्वया यद्विघ्नकारणं दर्शितं तद्युक्तिसङ्गतमित्यर्थः।

(ब) आत्रेयीति। विश्रान्तास्मि कृतविश्रामास्मि।

---

(प) বনদেবতা। বেশ! তা হইলে জগতের লোক পণ্ডিত হইয়া গিয়াছে।

আত্রেয়ী। সেই জন্য বলিয়াছি যে, সেখানে অধ্যয়নের গুরুতর বিঘ্ন।

(ফ) বনদেবতা। সঙ্গত বটে।

(ব) আত্রেয়ী। ভদ্রে! আমি বিশ্রাম করিয়াছি, এখন অগস্ত্যাশ্রমের পথ বলুন।

বনদেবতা। এখান হইতে পঞ্চবটীতে প্রবেশ করিয়া, এই গোদাবরীর তীর দিয়া যান।

---

(१) तदनुरोधान्नस्तत्र हि इति पाठभेदः।

वासन्ती। अस्त्येतत् सर्व्वम् (म)।

आत्रेयी। वत्से! जानकि!

स एष ते वल्लभबन्धुवर्गः
प्रासङ्गिकीनां विषयः कथानाम्।
त्वां नामशेषामपि दृश्यमानः
प्रत्यक्षदृश्यामिव नः करोति ॥६॥

---

(भ) आत्रेयीति। पूर्वं बहुशो दृष्टानाम् एकत्रावस्थितानां मध्ये वनदेवतया केवलपञ्चवटीगोदावर्य्योः परिचयकरणेनापि सर्वेषां ज्ञानोदयात् स्थिरनिश्चयाय क्रमश एकैकं पृच्छति अप्येतदिति। अयमपिशब्दः सर्वत्र प्रश्नबोधकः। तथा चामरः—

"गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।"

(म) वासन्तीति। पूर्वम् आत्रेय्या 'वनदेवतेय'मिति सामान्यतो ज्ञातम्, इदानीन्तु वासन्तीत्वेन विशेषतः परिचिता, अतएव वासन्तीति नाम्ना उल्लेख एव श्रोतॄणां विशेषज्ञानं स्यादिति कविना पूर्वं 'वन' इत्युक्तम् इदानीन्तु तस्मिन्नर्थे 'वासन्ती' इति प्रयुज्यत इति न दोषः। एतत् सर्वम् अस्ति, त्वया यद्यत् पृष्टं तत्तदेव सत्यमस्तीत्यर्थः।

स एष इति। प्रसङ्गेन परस्परालापप्रयोगेन संसृष्टा इति प्रासङ्गिक्यः तासां कथानां वाक्यानां विषयः प्रतिपाद्यः, अस्माभिः सह पूर्वं तव कथोपकथनसमये त्वया "वासन्ती अतीवविनयलज्जामधुरभाषिणी काचित् मम सखी आसीत्, पञ्चवटीवनमतीवामोदस्थानम्" एवंप्रकारेण वर्णित इत्यर्थः, दृश्यमानः मयेति शेषः, स एष ते तव वल्लभः प्रियो बन्धुवर्गः। वनहरिणादीनामपि सीताया बन्धुमध्ये गणनात् वर्गशब्दोक्तिः। नाम-

---

(ভ) আত্রেয়ী। (অশ্রুপাতের সহিত) ইহা কি তপোবন? এই কি পঞ্চবটী? ইহাই কি গোদাবরী নদী? এই পর্ব্বতই কি প্রস্রবণ? এবং আপনিই কি জনস্থানবাসিনী বনদেবতা বাসন্তী?

(ম) বাসন্তী। এ সমস্তই সত্য।

আত্রেয়ী। বৎসে! জানকি!

বাসন্তী। (সভয়ং স্বগতম্) কথং নামশেষামিত্যাহ? (প্রকাশম্) আর্য্যে! কিমত্যাহিতং সীতাদেব্যাঃ? (য)

আত্রেয়ী। ন কেবলমত্যাহিতং সাপবাদমপি (র)।

বাসন্তী। কথমিব? (ল)

আত্রেয়ী। (কর্ণে এবমেবম্) (ব)।

---

শেষামপি নামমাত্রাবশিষ্টামপি ত্বামপীত্যর্থঃ নোঽস্মাকং প্রত্যক্ষদৃশ্যামিব সাক্ষাদবলোক্য-মানামিব করোতি। পরিবারদর্শনাৎ পরিবার্য্যস্মরণস্যাবশ্যকত্বাদিতি ভাবঃ।

অত্র ভাবাভিমানিনী বাচ্যা ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। তথা অতীতায়াঃ সীতায়াঃ প্রত্যক্ষায়মাণত্বাদ্ভাবিকালঙ্কারশ্চেত্যনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। উপজাতির্বৃত্তম্ ॥৬॥

(য) বাসন্তীতি। অত্যাহিতং জীবানপেক্ষি কিমপি কর্ম্ম বৃত্তং কিম্? যেন কর্ম্মণা জীবনং যাতুমর্হতি তাদৃশং কিমপি কর্ম্ম জাতং কিমিত্যর্থঃ।

"অত্যাহিতং মহাভীতিঃ কর্ম্ম জীবানপেক্ষি চ" ইত্যমরঃ।

(র) আত্রেয়ীতি। অত্যাহিতন্তু জাতমেব তব কলঙ্কোঽপি জাত ইতি সমুদায়ার্থঃ।

(ল) বাসন্তীতি। কথমিব ইত্যস্যার্থে "কেমন ধারা" "কি প্রকার" ইতি প্রচলিত-বঙ্গভাষা।

(ব) আত্রেয়ীতি। "লঙ্কায়ামেকাকিনী সীতা স্থিতেতি নিতরামেব তস্যাশ্চরিত্রদোষো জাত ইতি লোকাপবাদেন রামস্যাদেশাৎ লক্ষ্মণো রথেন সীতামানীয় মহারণ্যে জাহ্নবীতীরে

যাঁহারা, প্রসঙ্গক্রমে উত্থিত কথার বিষয় ছিলেন, ইঁহারা তোমার সেই প্রিয় বন্ধুগণ; ইঁহারা দৃষ্টিগোচর হইয়া, তুমি নামমাত্রাবশিষ্ট হইলেও, তোমাকে যেন আমাদের প্রত্যক্ষদৃষ্টিগোচর করিতেছেন ॥৬॥

(য) বাসন্তী। (ভয়ের সহিত স্বগত) 'নামমাত্রাবশিষ্ট' ইহা বলিলেন কেন? (প্রকাশ্যে) সীতাদেবীর কি বিপদ হইয়াছে?

(র) আত্রেয়ী। কেবল বিপদ নহে; তাহা অপবাদের সহিতও বটে।

(ল) বাসন্তী। কি প্রকার?

वासन्ती। अहह! दारुणो दैवनिर्घातः। (इति मूर्च्छितः) (श)।

आत्रेयी। भद्रे! समाश्वसिहि समाश्वसिहि।

वासन्ती। हा प्रियसखि! हा महाभागे! ईदृशस्ते निर्म्माणभागः। रामभद्र! रामभद्र! अथवा अलं त्वया, आर्य्ये! आत्रेयि! अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः? (ष)

आत्रेयी। नहि नहि (स)।

विसृज्य गतः" इत्येवमेवं वाक्यं कर्णे कर्णसमीपे मुखमुपनीय कथयतीत्यर्थः। अन्यान्यं श्रवणार्थं कर्णे इत्युक्तम्।

(श) वासन्तीति। अहहेति महाखेदे। दैवनिर्घातः दुरदृष्टकृतप्रहारः।

(ष) वासन्तीति। महाभागे! महाभाग्यवति! ते तव निर्म्माणभागः सृष्टेरंशः जीवनस्य शेषांश इत्यर्थः, ईदृशः, यस्त्वावशरणा महारण्ये मृतेति वाक्यशेषः। सम्राड्-महिष्यास्तव अशरणायाः सत्या महारण्ये मरणं नितान्तविस्मयविषादकरमिति भावः। रामभद्र! रामभद्रेति विषादे द्विरुक्तिः। रामभद्र! लोकापवादमात्रेण त्वमीदृशीं प्राणप्रियतमां निर्वास्य नितान्तगर्हितं कृतवानिति भावः। अलं त्वया निन्दितेनेत्यर्थः, तव निन्दयेदानीं किमपि फलं नास्तीति भावः। वृत्तं भूतं का दशा जातेत्यर्थः। इति अस्मिन् विषये काचित् प्रवृत्तिः कापि वार्त्ता अस्ति किमित्यर्थः। तव ज्ञातेति शेषः।

(ব) আত্রেয়ী। (কর্ণে এইরূপ এইরূপ।)

(শ) বাসন্তী। হায়! হায়! দারুণ দৈবনির্ঘাত। (এই বলিয়া মূর্চ্ছিত হইলেন।)

আত্রেয়ী। ভদ্রে! আশ্বস্ত হউন আশ্বস্ত হউন।

(ষ) বাসন্তী। হা প্রিয়সখি! হা মহাভাগে! তোমার জীবনের শেষভাগ এইরূপ হইল! রামভদ্র! রামভদ্র! অথবা তোমাকে দিয়া

वासन्ती। हा कष्टम्, आर्य्यारुन्धतीवशिष्ठाधिष्ठिते रघुकुलगृहे (१) जीवन्तीषु च प्रवृद्धराज्ञीषु कथमिदं जातम्? (ह)

आत्रेयी। ऋष्यशृङ्गसत्रे (२) गुरुजनस्तदासीत्। सम्प्रति परिसमाप्तं तद्द्वादशवार्षिकं सत्रम्, ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरवः, ततो भगवत्यरुन्धती "नाहं बधूरहितामयोध्यां गमिष्यामी"त्याह, तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वशिष्ठस्य परिशुद्धा वाचो यथा—"वाल्मीकितपोवनं गत्वा तत्र वत्स्याम" इति (च)।

(स) आत्रेयीति। नहि काचिदपि प्रवृत्तिरस्तीति शेषः। अवधारणे द्विरुक्तिः।

(ह) वसन्तीति। आर्य्याभ्याम् अरुन्धतीवशिष्ठाभ्याम् अधिष्ठिते अवलम्बिते दुर्दैवशान्तियुक्तिदानादिना सर्व्वापद्भ्यो रक्षिते इत्यर्थः। प्रवृद्धराज्ञीषु प्राचीनासु महिषीषु कौशल्यादिष्वित्यर्थः। इदं सीताया निर्व्वासनम्। अरुन्धतीवशिष्ठादयः कथमस्माद्दारुणव्यापारात् रामं न निवर्त्तितवन्त इति भावः।

(च) आत्रेयीति। सम्पूज्य दानमानाभ्यां सत्कृत्य। विसर्जिताः प्रेषिताः गुरवो वशिष्ठादयः। राममातृभिः कौशल्यादिभिः अनुमोदितं कर्त्तव्यतया स्वीकृतम्। तदनु-

প্রয়োজন নাই। আর্যে! আত্রেয়ি! লক্ষ্মণ সীতাদেবীকে পরিত্যাগ করিয়া সেই বন হইতে ফিরিয়া গেলে পর সীতাদেবীর কি হইল, এই বিষয়ে কোন বৃত্তান্ত জানা আছে কি?

(স) আত্রেয়ী। না না।

(হ) বাসন্তী। হায় কি কষ্ট! প্রাচীন রাণীরা জীবিত থাকিতে এবং আর্য্যা অরুন্ধতী ও বশিষ্ঠকর্ত্তৃক আশ্রিত রঘুকুলের গৃহে এ ঘটনা কি করিয়া ঘটিল?

(१) अधिष्ठितेषु रघुकदम्बकेषु इति पाठान्तरम्। (२) ऋष्यशृङ्गाश्रमे इति क्वचित् पाठः।

वासन्ती। अथ स राजा किमारम्भः (१) सम्प्रति? (क)

आत्रेयी। तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः (ख)।

वासन्ती। अहह! धिक्, परिणीतमपि (ग)।

---

रोधात् तासाम् अरुन्धतीकौशल्यादीनामाग्रहात्। परिशुद्धा निर्दोषाः युक्तियुक्ता इत्यर्थः अभवन्निति शेषः।

(क) वासन्तीति। अथ प्रश्ने। आक्रोशेन रामभद्र इत्यनुक्त्वा राजा इत्युक्तम्। कः प्रश्नविषयः जिज्ञास्य इति यावत् आरम्भो यस्य सः किमारम्भः। सम्प्रति किं कुरुत इत्यर्थः।

(ग) वासन्तीति। यथा "यजमानः पत्नी"ति श्रुतिप्रतिपादितपाठाभावात् मूकस्य यज्ञे अधिकाराभावः "तिर्य्यक्पङ्गु वार्षेयदेवानां नात्राधिकारः" इति मीमांसादर्शनसूत्रात् तथा "सपत्नीको धर्म्ममाचरे"दिति विधौ सपत्नीकत्वस्य कर्त्तृविशेषणतया श्रूयमाणत्वेन पत्न्यभावे यज्ञे अधिकाराभावः स्यात्। अतएव निर्वासितसीतस्य रामस्यापि दारान्तरमन्तरेण यज्ञे अधिकारो न स्यादेव किन्तु "क्रतुरश्वमेधः प्रक्रान्तः" इति श्रवणात् रामेण दारान्तरं संगृहीतमेवेति निश्चित्य निन्दति अहहेति। धिक् निन्दामीत्यर्थः। परिणीतमपि दारान्तरं संगृहीतमपीत्यर्थः। प्राणप्रियतमा सीता निर्वासिता, तदनन्तरञ्चेत् विपत्नीक-

---

(क) আত্রেয়ী। গুরুজনেরা তখন ঋষ্যশৃঙ্গের যজ্ঞে ছিলেন। সেই দ্বাদশ বার্ষিক যজ্ঞ এখন সমাপ্ত হইয়াছে এবং ঋষ্যশৃঙ্গ সন্তুষ্ট করিয়া গুরুজনগণকে বিদায় দিয়াছেন; তাহার পরে ভগবতী অরুন্ধতী বলিলেন— "আমি সীতাবিহীন অযোধ্যাতে যাইব না।" রামের মাতৃগণও তাহাই অনুমোদন করিলেন। তাঁহাদের অনুরোধে ভগবান্ বশিষ্ঠের নির্দ্দোষ বাক্য যথা—"আমরা বাল্মীকির তপোবনে যাইয়া বাস করি।"

(ক) বাসন্তী। সে রাজা এখন কি আরম্ভ করিয়াছেন?

(খ) আত্রেয়ী। সে রাজা, অশ্বমেধযজ্ঞ আরম্ভ করিয়াছেন।

(१) किमाचार इति पाठभेदः।

आत्रेयी । शान्तं पापम् (घ) ।

वासन्ती । का तर्हि यज्ञे सहधर्म्मचारिणी ? (ङ)

आत्रेयी । हिरण्मयी सीताप्रतिकृतिः (च) ।

वासन्ती । हन्तभोः (छ) ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥७॥

---

एव तिष्ठन्तदापि कियानाश्वासः स्यात् सत्यप्रेमिकत्वात्, परिणयान्तरे कृते तु मिथ्याप्रेमिकतया रामस्य नितान्तलघुत्वमेव सम्भाव्यत इति भावः ।

(घ) आत्रेयीति । पापं पापवत् अरुचिकरं रामस्य परिणयान्तरसम्बन्धि यद्वाक्यं शान्तं विरतं भवत्वित्यर्थः । रामेण दारपरिग्रहान्तरं न कृतमिति भावः ।

(ङ) वासन्तीति । सहधर्म्मचारिणी अभिन्नतया धर्म्मकारिणी पत्नीत्यर्थः ।

(च) आत्रेयीति । हिरण्मयी स्वर्णनिर्म्मितेत्यर्थः सीताप्रतिकृतिः सीतायाः प्रतिमा, यज्ञे सहधर्म्मचारिणीति वाक्यशेषः । युक्तञ्चैतत्—

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"

इति कात्यायनवचनात् ।

(छ) वासन्तीति । हन्तभोरिति हर्षविषादसूचकमेकमव्ययम् ।

वज्रादीति । वज्रादपि कठोराणि निष्ठुराणि कथमन्यथा प्राणप्रियतमां निर्वासयितुं समर्थानीति भावः, तथा कुसुमादपि मृदूनि पुष्पादपि कोमलानि स्नेहपरतन्त्राणीत्यर्थः

---

(গ) বাসন্তী। হায়! হায়! আবার বিবাহও করিয়াছেন।

(ঘ) আত্রেয়ী। ঐ পাপ প্রস্তাব করিবেন না।

(ঙ) বাসন্তী। তবে যজ্ঞে সহধর্ম্মিণী কে ?

(চ) আত্রেয়ী। সীতার স্বর্ণময়ী প্রতিমূর্ত্তি।

(ছ) বাসন্তী। আশ্চর্য্য বটে।

आत्रेयी। विसृष्टश्च वामदेवानुमन्त्रितो मेध्योऽश्वः, उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः, तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुः दत्तदिव्यास्त्रसम्प्रदायः चतुरङ्गसाधनान्वितोऽनुप्रहितः (१) (ज)।

---

कथमन्यथा निर्वासितायाः सीतायाः प्रतिमां सहधर्म्माचरणार्थमवलम्बन्त इति भावः। लोकोत्तराणां लोकश्रेष्ठानां चेतांसि मनांसि को जनो विज्ञातुं यथार्थतया बोद्धुम् अर्हति अपि तु कोऽपि नेत्यर्थः। प्राणप्रियतमा निर्वासितेति विषादः, पुनस्तस्या एव प्रतिमा यज्ञे सहधर्म्माचरणायावलम्बितेति आदरातिशयप्रकाशात् हर्षः। लोकापवादजनित प्रजाविरागमोचनार्थमेव सीता निर्वासिता, रामस्य तु सीतां प्रति गाढविश्वासः प्रणयातिशयश्चास्त्येव इति भावः।

अत्र कठोरमृदीर्विरुपयोः सङ्घटनाद्विषमालङ्कारः, तथा अप्रस्तुतात् लोकोत्तरसामान्यात प्रस्तुतस्य रामरूपविशेषस्य प्रतीतेरप्रस्तुतप्रशंसा अर्थापत्तिश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

हेत्वर्थे हिशब्दः, तथा च चेतोवैचित्र्यात् विज्ञातुं नार्हतीत्यर्थः॥७॥

(ज) आत्रेयीति। वामदेवेन तदाख्येन केनचिन्मुनिना अनुमन्त्रितः मन्त्रपाठेन संस्कृतः, मेध्यः यज्ञे हिंसनीयः "मेध हिंसायां"मित्यस्मात् घ्यण् "अश्वमेधे हि छिन्नाश्वमांसैर्हूयत" इति प्रयोगे द्रष्टव्यम्। विसृष्टः प्रेरितः। शास्त्रं शास्त्रविधानमनतिक्रम्येति यथाशास्त्रं तस्य अश्वस्य रक्षितारः उपकल्पिताः निर्द्दिष्टाः, अधिष्ठाता नेता सेनापतिरिति यावत् दत्तो दिव्यानामुत्कृष्टानामस्त्राणां सम्प्रदायः समूहो यस्मै सः, चत्वारि अङ्गानि यस्य तेन चतुरङ्गेन साधनेन सैन्येन अन्वितः युक्तः अनुप्रहितः तस्याश्वस्य पश्चात् प्रेरितः। रामेणेति शेषः।

"हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टय"मित्यमरः।

---

লোক শ্রেষ্ঠদিগের চিত্ত, বজ্র হইতেও কঠিন, (আবার) পুষ্প হইতেও কোমল ; সুতরাং সেই চিত্ত, কে বুঝিতে পারে ? ॥৭॥

(জ) আত্রেয়ী। মহর্ষি বামদেবকর্তৃক অভিমন্ত্রিত ছেদনীয় অশ্ব,

---

(१) चतुरङ्गबलान्वितोऽनुप्रहितः इति पाठभेदः।

वासन्ती। (सस्नेहकौतुकास्रम्) कुमारलक्ष्मणस्यापि पुत्रः? हन्त! मातर्जीवामि (झ)।

आत्रेयी। अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताड़नमब्रह्मण्यमुद्घोषितम्, ततो न राजापराधमन्तरेण प्रजास्वकालमृत्युश्चरतीति आत्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—(ञ)

---

(झ) वासन्तीति। स्निग्धलक्ष्मणनामश्रवणात् स्नेहः, तत्पुत्रः सेनापतिरिति कौतुकम्, द्रष्टुमशक्यत्वादस्रमिति बोध्यम्। कुमारो बालकः। यं लक्ष्मणं क्षुद्रबालकमिव दृष्टवती, तस्य पुत्रः, स च सेनापतिरिति महत् कौतुकम् आश्चर्यञ्चेति भावः।

यथा "भूतमस्मि भूतमस्मी"त्यादि लौकिकोक्तौ द्वितीयं "भूतमस्मी"ति वाक्यमेव विस्मयव्यञ्जकं तथात्रापि "मातर्जीवामी"ति वाक्यमेव विस्मयव्यञ्जकमिति दिक्। हन्त हर्षे।

(ञ) आत्रेयीति। अत्रान्तरे अस्मिन्नवकाशे समय इत्यर्थः। ब्राह्मणेन केनचिदिति शेषः। उत्क्षिप्य उत्तोल्य संस्थाप्येत्यर्थः। उरसो वक्षसस्ताड़नेन सह इति सोरस्ताड़नं वक्षसि कराघातं कृत्वेत्यर्थः। ब्रह्मणे विप्राय हितं ब्रह्मण्यम्, न ब्रह्मण्यम् अब्रह्मण्यं ब्राह्मणस्याहितम् अमङ्गलमित्यर्थः। उद्घोषितम उच्चैः शब्दितम् अब्रह्मण्यमिति कृत्वा उच्चैः शब्दः कृत इत्यर्थः। ततस्तदनन्तरम। अन्तरेण विना। आत्मदोषम् आत्मनः शासनदोषं निरूपयति निर्णयति सति। करुणामये, अन्यथा अनेककोटिप्रजेश्वरस्य रामस्य कस्यचित् पुत्रमरणादुद्वेगो न स्यादिति भावः। सहसा तत्क्षणात्। शरीरं शरीरादुत्पत्तिः सा विद्यते यस्या इति शरीरिणी केनचिदुच्चारिता सा न भवतीत्यशरीरिणी आकाशवाणीत्यर्थः। उदचरत उत्थिता।

ছাড়িয়াও দেওয়া হইয়াছে; শাস্ত্রানুসারে তাহার রক্ষকও নির্দ্দিষ্ট করা হইয়াছে; লক্ষ্মণের পুত্র চন্দ্রকেতুকে সেই অশ্বরক্ষকদিগের নেতা করিয়া, দিব্য অস্ত্রসমূহ দিয়া, চতুরঙ্গ সৈন্যসমন্বিত অবস্থায় পিছনে পাঠাইয়াছেন।

(ঝ) বাসন্তী। (স্নেহ, কৌতুক ও অশ্রুপাতের সহিত) কুমার লক্ষ্মণেরও আবার পুত্র! হায়! মা বাঁচিলাম।

"शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।
शीर्षच्छेद्यः स ते राम ! तं हत्वा जीवय द्विजम्" ॥८॥

इत्युपश्रुत्यैव कृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसमन्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान् (ट)

---

राजापराधात् प्रजानामुपद्रव उक्तो महाभारते—

'अनाधुशासनाद्राज्ञो महाभीतिरुपप्लवः।
प्रवर्त्तन्ते च नियतमकालमृत्युरीतयः॥"

अशरीरिणीं वाचमाह शम्बूक इति। शम्बूको नाम वृषलः शूद्रः पृथिव्यां तपस्तप्यते चरतीत्यर्थः। हे राम! ते तव स शम्बूकः शीर्षे मस्तकावच्छेदे छेद्यः छेदनार्हः तस्य शिरश्छेदः कर्त्तव्य इत्यर्थः, अतएव तं हत्वा द्विजं ब्राह्मणपुत्रं जीवय।

"शीर्षच्छेद्य" इति "गले बद्धा गौ"रितिवदधिकरणे सप्तमी ॥८॥

(ट) इत्युपेति। अर्थवशात्: शीघ्रत्वमननाय। जगत्पतिः पृथिवीश्वरो रामः कृपाणपाणिः खड्गहस्तः सन् पुष्पकं पुष्पकनामकं विमानं व्योमयानम्। विदिशः अग्न्यादिकोणान्।

"दिशोर्मध्ये विदिक् स्त्रियां"मित्यमरः।

(ঞ) আত্রেয়ী। এই সময়ে এক ব্রাহ্মণ, রাজদ্বারে নিজের মৃত পুত্রকে রাখিয়া, বক্ষে আঘাতের সহিত অব্রহ্মণ্য (ব্রাহ্মণের অমঙ্গল) ঘোষণা করিলেন। তাহার পর, 'রাজার দোষ ভিন্ন প্রজাদের মধ্যে অকালমৃত্যু হয় না' এইরূপে দয়াময় রামভদ্র, নিজের দোষ নিরূপণ করিতে লাগিলে হঠাৎই দৈববাণী উত্থিত হইল—

শম্বূকনামক কোন শূদ্র, পৃথিবীতে তপস্যা করিতেছে; হে রাম! তাহার শিরশ্ছেদ করা তোমার উচিত; অতএব তাহাকে হত্যা করিয়া ব্রাহ্মণবালককে বাঁচাও"।৮।

(ট) ইহা শুনিয়াই ভূপতি রাম খড়্গহস্তে পুষ্পকবিমানে আরোহণ

वासन्ती। शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति तदपि नाम रामभद्रः पुनरपीदं वनमलङ्कुर्य्यात् (ठ)।

आत्रेयी। भद्रे! गम्यतेऽधुना।

वासन्ती। एवमस्तु, कठोरीभूतोऽयं दिवसः। तथाहि—(ड)

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्म्मस्रंसितबन्धनैः स्वकुसुमैरर्च्चन्ति गोदावरीम्।
छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्त-(१) कपोतकुक्कुटकुलाः कुले कुलायद्रुमाः॥८॥

(ठ) वासन्तीति। धूमपो यज्ञीयधूममात्रपानकारी नित्योपवासीत्यर्थः। तत्स्मात् हेतोः। अलङ्कुर्य्यात् आगमनेन शोभयेत्। प्रथमोऽपिशब्दः प्रश्ने, नामशब्दः सम्भावनायाम्। अलङ्कुर्य्यादिति सम्भावनां कर्त्तुमर्हामि किमित्यर्थः। द्वितीयोऽपिशब्दः समुच्चये।

(ड) वासन्तीति। कठोरीभूतः दारुणातपसन्तापाद्दुरतिक्रम इत्यर्थः। तथाहि तमिवार्थं जानीहीत्यर्थः।

कण्डूलेति। कूले तीरे गोदावर्य्या इत्यर्थः स्थिता इति शेषः। छायायाम् अपास्किरमाणः कीटबहिष्करणार्थं तरुषु चञ्च्वाघातं कुर्वन्तो ये विष्किराः पक्षिणः, तेर्मुखैः करणभूतैः

করিয়া, সেই শূদ্র তপস্বীর অন্বেষণের নিমিত্ত, সমস্ত দিক্ ও বিদিকে বিচরণ করিতে আরম্ভ করিয়াছেন।

(ঠ) বাসন্তী। যজ্ঞের ধূমমাত্র পানকারী শম্বূকনামক শূদ্র, এই জনস্থানেই তপস্যা করিতেছে। তা, আবারও কি রামভদ্র এই বনকে অলঙ্কৃত করিবেন?

আত্রেয়ী। ভদ্রে! এখন যাই।

(ড) বাসন্তী। ইহাই হউক। এই দিনটা কঠিন হইয়া দাঁড়াইয়াছে। তাহাই দেখ—

(১) कूजत्क्लान्त इति पाठान्तरम्।

(इति परिक्रम्य निष्क्रान्ते ।) (ढ)

---

व्याकृष्टा आकृष्य बहिष्कृताः कीटा याभ्यः ताः तथोक्तास्त्वचो वल्कलानि येषां ते तथोक्ताः, तथा कूजन्ति शब्दायमानानि क्लान्तानि आतपतापात् खिन्नानि कपोतकुक्कुटानां कुलानि समूहा येषु ते तथोक्ताः कुलायद्रुमाः नीडवृक्षाः कण्डूलानां कण्डूयनयुक्तानां द्विपगण्डपिण्डानां हस्तिकपोलदेशानां कषणेन घर्षणेन य उत्कम्पः चलनं तेन सम्पातिभिः पतद्भिः तथा घर्म्मेण आतपतापेन स्रंसितानि ध्वस्तानि बन्धनानि वृन्तानि येषां तैः स्वकुसुमैः स्वकीयपुष्पैः गोदावरीं नदीम् अर्च्चन्ति पूजयन्तीव। दारुणातपतापस्यैवायं व्यापार इति भावः।

अत्र अर्च्चन्तीत्यत्र इवशब्दाभावात् वृक्षाणाञ्च पूजनायोग्यत्वात् इवशब्दोऽध्याहार्य्य इति प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः स्वभावोक्तिश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः वृत्त्यनुप्रासश्च शब्दालङ्कारः।

“विविष्किरपतत्रयः” “कुलायो नीडमस्त्रिया”मिति चामरः। “घर्म्मः स्यादातपे ग्रीष्मेऽप्युष्मस्वेदाम्भसोरपी”ति मेदिनी।

अर्च्चतिरयं भौवादिकः। कण्डूरेषामस्तीति कण्डूलाः सिध्मादित्वाल्लच्। अपस्किरमाण इति अपपूर्वात् किरतेः “अपस्किरः” इत्यात्मनेपदविधानविषयत्वादानश्, “अपाच्चतुष्पा”दित्यादिना सुट्।

शार्दूलविक्रीडितं वृत्तम् ॥९॥

---

যাহাতে পাখীর বাসা আছে, এইরূপ বহুতর বৃক্ষ, তীরে রহিয়াছে, কপোত ও কুক্কুটপক্ষিসমূহ আতপতাপে সন্তপ্ত হইয়া, তাহাতে বসিয়া রব করিতেছে; আর কতকগুলি পক্ষী ছায়াতে থাকিয়া, চঞ্চুর আঘাত করিয়া, মুখদ্বারা বৃক্ষের বল্কল হইতে কীট আকর্ষণ করিয়া বাহির করিতেছে; এদিকে কণ্ডূয়নশালী হস্তিগণ গণ্ডদেশ ঘর্ষণ করায় বৃক্ষের কম্পনবশতঃ আতপে শিথিলবৃন্ত পুষ্পসমূহ পতিত হইতেছে; ইহাতে বোধ হইতেছে যেন, ঐ বৃক্ষসকল ঐ পুষ্পসমূহদ্বারা গোদাবরী নদীর পূজা করিতেছে ॥৯॥

## विष्कम्भकः (ण)।

(ततः प्रविशति सदयोद्यतखड्गो रामभद्रः (त)।

रामः। रे हस्त! दक्षिण! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि, दुर्वहगर्भखिन्न-
सीताविवासनपटोः (१) करुणा कुतस्ते? ॥१०॥

---

(ढ) इतीति। परिक्रम्य इतस्ततः पादविक्षेपं कृत्वा निष्क्रान्ते आत्रेयीवासन्त्या-विति शेषः।

(ण) विष्कैति। भूतानां भाविनीनाञ्च घटनानामुपस्थापकः संयोजको वा संक्षिप्तः प्रबन्धो विष्कम्भकः। तथा च साहित्यदर्पणे—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥"

तथा चास्मिन् प्रबन्धे सीतानिर्वासनं कुशलवयोर्जन्म, तयोर्वाल्मीकिसमीपे समर्पणं शिक्षा चेत्यादीनामतीतघटनानामुपस्थापनं तथा शम्बूकवधार्थः रामस्य भ्रमणम्, शम्बूक-वधः, अश्वमेधायोजनञ्चेत्यादीनां भविष्यद्घटनानामुपस्थापनं द्रष्टव्यम्। स चायं शुद्धो विष्कम्भकः मध्यमाभ्यामात्रेयीवासन्तीभ्यां प्रयोजितत्वात्। यथा साहित्यदर्पणः—

"मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धं स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥"

(त) तत इति। सदयं सकरुणम् उद्यत उत्तोलितः खड्गो येन सः वधार्हापराधं विना वधोद्यमात् सदयेत्युक्तम्।

---

(ঢ) (ইহার পর আত্রেয়ী ও বাসন্তী কতিপয় পদক্ষেপ করিয়া চলিয়া গেলেন।)

(ণ) বিষ্কম্ভক।

(ত) (তদনন্তর দয়ার সহিত খড়্গ উত্তোলন করিয়া, রামচন্দ্রের প্রবেশ।)

---

(१) सीताप्रवासनपटोरिति पाठान्तरम्।

रे हस्तेति। रे इत्यवज्ञायसम्बोधनसूचकमव्ययम्। अवज्ञा च सीतानिर्वासनकरणा-देवेति बोध्यम्। रे दक्षिण हस्त! मृतस्य द्विजस्य शिशोः ब्राह्मणबालकस्य जीवातवे जीवनाय शूद्रे एव मुनिस्मिन् कृपाणं खड्गं विसृज निक्षिप, ब्राह्मणशिशुजीवनमेव प्रहारस्य मुख्यमुद्देश्यं न तु शम्बूकहननमिति भावः। ननु प्रहारयोग्यापराधाभावे कथं प्रहरामि दयैव मां निवारयतीत्याह त्वं रामस्य गात्रम् अङ्गमित्यर्थः असि भवसि, तेन किमित्याह दुर्वहो यो गर्भभार इत्यर्थः तेन खिन्ना श्रान्ता या सीता तस्या विवासने वनप्रेरणे पटुर्निपुणस्तस्य ते तव कुतः करुणा दया कुतोऽपि नेत्यर्थः। प्रायेण सर्वस्यैव कार्यस्य दक्षिणहस्तेन क्रियमाणत्वात् सीतानिर्वासनस्यापि दक्षिणहस्तेनैव कृतत्वोक्ति-रुपचारात् सङ्गच्छते। यः पूर्णगर्भभारक्रान्तायाः प्राणप्रियतमायाः सीतायाः निर्वासनं कृतवान्, तस्य तव निःसम्पर्कसापराधजनप्रहारे दया न सम्भवत्येवेति भावः।

अत्र करुणाभावं प्रति सीताविवासनपटुत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः अर्थापत्तिश्चेत्यनयोरङ्गाङ्गित्वं न सङ्करः।

"जीवातुर्स्त्रियां भक्ष्ये जीविते जीवनौषधे" इति मेदिनी।

ननु "अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते॥
इष्टापूर्त्तौ द्विजातीनां धर्म्मः सामान्य इष्यते।
अधिकारी भवेच्छूद्रः पूर्त्तधर्म्मे, न वैदिके॥"

इति हारीतवचनात् शूद्रस्य तपश्चरणे अधिकाराभावात् पापमेव, अतएव अपराधोऽपि मन्तव्य एव किन्तु स न प्राणदण्डार्ह इति सत्यम्, "शम्बूको नाम वृषलः" इत्याद्याकाशवाणी विश्वासादेव रामेण शम्बूकस्य प्राणदण्डं कृतो न तु शास्त्रत इति दिक्।

वसन्ततिलका वृत्तम्॥१०॥

---

রাম। রে দক্ষিণহস্ত! তুমি মৃত ব্রাহ্মণশিশুর জীবনের জন্য শূদ্র তপস্বীর প্রতি তরবারির আঘাত কর। তুমি রামের অঙ্গ হইয়াছ; সেই জন্যই দুর্ব্বহ গর্ভের ভারে ক্লান্ত সীতার নির্ব্বাসনে সমর্থ হইয়াছ; সুতরাং তোমার দয়া কোথায়? ॥১০॥

(अथ कथञ्चित् प्रहृत्य) कृतं रामसदृशं कर्म्म, अपि जीवेत् स ब्राह्मणशिशुः ? (थ)

(प्रविश्य) दिव्यपुरुषः। जयति जयति देवः (द)।

दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरयं मम चेयमृद्धिः।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥११॥

---

(थ) अथेति। अथ अनन्तरम्। कथञ्चित् कष्टेनेत्यर्थः, प्रहारायोग्ये अपराधिनि प्रहारकरणं दुःखमेव स्यादिति कवेरभिप्रायः। रामसदृशं रामोचितम्। येन निरपराधायाः सीतायाः निर्वासनेन हत्या कृता तस्य अतिनृशंसस्य रामस्य निरपराधशम्बूकहत्याकरणं योग्यमेव अनुरूपत्वादिति भावः। गभीरविषादव्यपोक्तिरियम्। अपिशब्दः प्रश्ने।

(द) प्रविश्येति। दिव्यपुरुषः स्वर्गीयाकृतिविशिष्टः कश्चित् पुरुष इत्यर्थः।

दत्तेति। यमादपि दत्तम् अभयं येन तादृशे भगवन्नारायणावतारतया यमभयनिवारक इत्यर्थः। देवयोनिविशेषः शम्बूको रामं नारायणावतारत्वेन जानातीति तस्य ईदृशोक्तिः सङ्गच्छत इति भाव्यम्। त्वयि रामचन्द्रे दण्डधारे दण्डधारिणि सति अयं शिशुः सञ्जीवितः, मम च इयं दिव्याकृतिलाभरूपा ऋद्धिः अभ्युदयः। अतएव एष शम्बूकः शिरसा ते तव चरणौ नतः नमस्करोतीत्यर्थः। ननु दण्डविधानात् कथमृद्धिः स्यादित्याह सत्सङ्गजानि सतां संसर्गादुत्पन्नानि निधनान्यपि मरणान्यपि तारयन्ति "सद्भक्तसन्निकर्षो हि घर्णाईमपि शस्यत" इत्युक्तेः पापादुद्धारयन्तीत्यर्थः।

अत्र दण्डरूपकारणात् ऋद्धिरूपविरुद्धफलोत्पत्तेर्विषमालङ्कारः, तथा ऋद्धिरूपविशेषस्य सत्सङ्गजातनिधनकृततारणरूपसामान्येन समर्थनात् अर्थान्तरन्यासस्य अनयोः संसृष्टिः।

(থ) (তদনন্তর কোন প্রকারে প্রহার করিয়া) রামের উপযুক্ত কার্য্য করিয়াছ ; এখন সেই ব্রাহ্মণবালক বাঁচিবে কি ?

(দ) কোন দিব্যপুরুষ। (প্রবেশ করিয়া) রাজার জয় হউক।

রামঃ। ইয়মপি প্রিয়ং নঃ, তদনুভূয়তামুগ্রস্য তপসঃ পরিপাকঃ (ধ)।

যত্রানন্দাশ্চ মোদাশ্চ যত্র পুণ্যাশ্চ (১) সম্পদঃ।
বৈরাজা নাম তে লোকাস্তৈজসাঃ সন্তু তে ধ্রুবাঃ (২) ॥১২॥

---

রাজদণ্ডস্য পাপনাশকত্বমভ্যুদয়হেতুত্বঞ্চাহ মনুঃ—

"রাজভির্ধৃতদণ্ডাস্তু কৃত্বা পাপানি মানবাঃ।
নির্ম্মলাঃ স্বর্গমায়ান্তি সন্তঃ সুকৃতিনো যথা॥"

বসন্ততিলকা বৃত্তম্ ॥১১॥

(ধ) রাম ইতি। ইয়মপি ব্রাহ্মণশিশোর্জীবনং তব চ দিব্যদেহপ্রাপ্তিঃ এতদ্ দ্বয়মপীত্যর্থঃ। যদ্যপি ব্রাহ্মণশিশোর্জীবনমেব হত্যায়া মুখ্যমুদ্দেশ্যমাসীৎ তথাপি প্রসঙ্গসিদ্ধাপি শম্বূকস্য দিব্যদেহপ্রাপ্তিঃ প্রীতিজনিকৈব সতাং পরাভ্যুদয়দর্শনেন প্রীতেরেব সম্ভবাদিতি ভাবঃ। তৎ তস্মাৎ। উগ্রস্য দারুণস্য দুষ্করস্যেত্যর্থঃ। পরিপাকঃ ফলম্। শূদ্রস্যৈব তপস্যনধিকারঃ, কিন্তু দেবযোনিবিশেষস্য শম্বূকস্য তপস্যধিকার আসীদেব; অতএব তস্য ফলমপি সম্ভবত্যেবেতি বোধ্যম্।

কিন্তৎ ফলমিত্যাহ যত্রেতি। যত্র যেষু লোকেষু আনন্দাঃ ব্রহ্মপ্রীতয়ঃ, মোদা নানাবিধসম্ভোগাঃ, যত্র যেষু চ পুণ্যাঃ পবিত্রা ন তু মর্ত্ত্যবৎ দুর্ব্যবহারাদিনা কলুষিতাঃ সম্পদঃ ধনজনাদিসম্পত্তয়ঃ সন্তীতি শেষঃ। বিরাজো ব্রহ্মণ ইমে ইতি বৈরাজা ব্রহ্মসম্বন্ধীয়াঃ

আপনি যম হইতেও অভয় দিয়া থাকেন; আপনি আমার প্রাণদণ্ড করিলে, এই শিশু জীবিত হইয়াছে, আমারও এই সম্পদ হইয়াছে। এই শম্বূক, মস্তকদ্বারা আপনার চরণে নমস্কার করিতেছে। সজ্জনের সংসর্গ হইতে উৎপন্ন মৃত্যুও উদ্ধার করে ॥১১॥

(ধ) রাম। দুইই আমার প্রিয়; অতএব ভয়ঙ্কর তপস্যার পরিণাম অনুভব কর।

---

(১) পুণ্যাভিসম্ভবাঃ ইতি ক্বাপি পাঠঃ। (২) শিবা ইতি পাঠভেদঃ।

शम्बूकः। युष्मत्पादप्रसादोपाय एष महिमा, किमत्र तपसा (१)। अथवा महदुपकृतं तपसा (न)।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि।
क्रान्त्वा प्राप्तः, स इह तपसां (२) सम्प्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ? ॥१३॥

---

नाम्ना च वैराजाः तेजसाः आलोकमयास्ते लोका ब्रह्मलोका इत्यर्थः ते तव ध्रुवा नित्या अक्षया इति यावत् सन्तु भवन्तु। त्वं चिरमेव ब्रह्मलोके तिष्ठेत्यर्थः। एतदेव तव तपसः फलम्, न त्वयमाशीर्वादो वरो वेति भावः ॥१२॥

(न) शम्बूक इति। युष्माकं पादस्य चरणस्य प्रसादः अनुग्रह एव उपायः कारणं यस्य स तथोक्तः, एष मम ब्रह्मलोकलाभरूपः महिमा माहात्म्यम्। अत्र महिम्नि विषये तपसा किं कृतमित्यर्थः। ममेयं ब्रह्मलोकप्राप्तिसम्भावना तवानुग्रहादेव न तु तपसेत्यर्थः।

तपसा कृतं महान्तमुपकारमाह अन्वेष्टव्य इति। भुवने जगति भूतानां प्राणिनां नाथः पतिः तथा शरणेषु रक्षकेषु साधुः शरण्यः रक्षकश्रेष्ठ इत्यर्थः अतएव अन्वेष्टव्यः सर्वेषां साक्षात्कर्त्तव्यस्त्वं वृषलकं कुत्सितशूद्रं माम् अन्विष्यन् विचिन्वन् सन् योजनानां शतानि क्रान्त्वा विलङ्घ्य इह अस्मिन् महारण्ये यत् प्राप्तोऽसि आगतोऽपि, स तवागमः तपसां मत्कृतानामित्यर्थः सम्प्रसादः अनुग्रहः अनुग्रहजन्य इत्यर्थः। चेत् यदि अन्यथा तपःकृतानु-

যেখানে ব্রহ্মানন্দ এবং নানাবিধ ভোগ আছে, আর যেখানে পবিত্র সম্পদ্ রহিয়াছে ; আলোকময় বৈরাজনামে সেই লোক, তোমার চিরস্থায়ী হউক ॥১২॥

(ন) শম্বূক। আমার এই প্রভাব, আপনার চরণের অনুগ্রহেই হইয়াছে ; সুতরাং এ বিষয়ে তপস্যা কি করিয়াছে ; অথবা তপস্যা গুরুতর উপকার করিয়াছে।

(१) न तु तपसः फलमिति पाठान्तरम्। (२) तपस इति पाठभेदः।

राम:। किं नाम दण्डकेयम्? (सर्वतोऽवलोक्य) आं (प)

स्निग्धश्यामा: क्वचिदपरतो भीषणाभोगरूक्षा:
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् (१)।
एते तीर्थाश्रमगिरिसरिद्गर्त्तकान्तारमिश्रा: (२)
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागा: ॥१४॥

---

ग्रहजन्या न स्वोक्तिर्येतेत्यर्थ: तदा पर्याध्याया निजराजधान्या: सकाशात् दण्डकायां वने दण्डकारण्ये वो युष्माकं क्व कस्मिन् निमित्ते पुन: द्वितीयवारं हेतुं विनेत्यर्थ: उपगम आगमनं भवेदिति शेष: कथमपि नेत्यर्थ:।

अत्र "विपुलेन सागरशयस्य कुक्षिणे"त्यादिसाहित्यदर्पणोदाहृतवत् एकस्मिन् रामे अन्वेषणाकर्म्मत्वकर्त्तृत्वयोर्विरूपयो: सङ्घटनाद्विषमालङ्कार:, तथा वधोद्देशजनितरामगमने तपोऽनुग्रहजन्यत्वमध्यवसितमिति भेदे अभेदाध्यवसायरूपा अतिशयोक्तिश्चेत्यनयो: संसृष्टि:।

"शरणं गृहरक्षित्रो"रित्यमर:।

शरण्य इति साधावर्थे यप्रत्यय:। दूषन्नकमिति कुत्सायां कप्रत्यय:।

"दण्डकायां वने" इति "अम्बिका कलत्र"मित्यादिवदुभयोरप्यजहल्लिङ्गत्वात् लिङ्ग वैषम्येऽपि विशेष्यविशेषणता। मन्दाक्रान्ता वृत्तम् ॥१३॥

(प) राम इति। आंशब्दो निश्चये, दण्डकैवेयमित्यर्थ:।

"आं ज्ञाननिश्चयस्मृत्यो"रिति मेदिनी।

---

আপনি প্রাণিগণের অধিপতি রক্ষকশ্রেষ্ঠ; সুতরাং সকলের অন্বেষণের যোগ্য হইয়াও, শূদ্র আমাকে অন্বেষণ করতঃ, শত যোজন অতিক্রম করিয়া যে এই স্থানে উপস্থিত হইয়াছেন; ইহা আমার তপস্যারই অনুগ্রহ। তাহা যদি না হইত, তবে অযোধ্যা হইতে দণ্ডকারণ্যে আপনার আগমন হইবে কি জন্য? ॥১৩॥

(প) রাম। এই কি দণ্ডকারণ্য? (সকল দিকে দৃষ্টিপাত করিয়া) ও!

---

(१) झाङ्कृतै:, ध्वाङ्कृतैरिति पाठान्तरद्वयम्। (२) गर्भकान्तारमिश्रा इति पाठान्तरम्।

शम्बूकः । दण्डकेवेयम्, अत्र किल निवसता देवेन—(फ)

स्निग्धेति । क्वचित् कस्मिंश्चिद्विभागे स्निग्धाः नवपत्रपल्लवशालित्वात् तैलाक्ता इव, श्यामा श्यामलाश्च, तथा अपरतः अन्यस्मिन् विभागे भीषणो य आभोगः परिपूर्णता विस्तीर्णतेति यावत् तेन रुक्षाः कर्कशाः, स्थाने स्थाने पदे पदे निर्झराणां पार्वत्यप्रस्रवणानां झाङ्कतैः झामितिशब्दैः मुखराः शब्दायमानाः ककुभो दिशो येषु ते, तीर्थानि मुनिगणसेवितजलानि, आश्रमाः मुनीनां तपोवनानि, गिरयः पर्वताः, सरितो नद्यः, गर्त्ताः विलानि, कान्ताराः दुर्गमाः पन्थानः तैर्मिश्रा युक्ताः परिचिताः पूर्वं ज्ञाताः भुवः स्थानानि येषु ते, एते सम्मुखवर्त्तिनः दण्डकारण्यभागाः दण्डकारण्यस्य प्रदेशाः संदृश्यन्ते अवलोक्यन्ते ।

अत्र स्वभावोक्तिरलङ्कारः । भयानको रसः ।

"आभोगः परिपूर्णता ।" "दिशस्तु ककुभः काष्ठाः ।" "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ।" "महारण्ये दुर्गपथे कान्तारः पुंनपुंसक"मिति चामरः ।

इक्ष्वाकुराजपुत्रो दण्डनामा शुक्राचार्य्यकन्याम् अरजानाम्नीं बलेन धर्षितवान्, शुक्राचार्य्यस्तच्छ्रुत्वा "अद्यावधि सप्ताहमध्ये तव राज्यं स्थावरजङ्गमात्मकं सर्वमेव नाशं प्राप्स्यति, त्वञ्च मरिष्यसी"ति शप्त्वा तन्निकटवर्त्तिनो जनानवोचत्—"सत्वरं यूयमस्मात् राज्यादपसृत्य तिष्ठते"ति। ततश्च दण्डराज्यं अरण्यतया परिणतम्, जनाश्च तस्माद्देशादपसृत्य स्थिताः तेन दण्डराज्यं दण्डकारण्यम्, तेषां जनानां निवासस्थानञ्च जनस्थानमित्युच्यते इति रामायणवार्त्तानुसन्धेया ।

मन्दाक्रान्ता वृत्तम् ॥१४॥

(फ) शम्बूक इति । देवेन भवतेत्यर्थः ।

সেই দণ্ডকারণ্যের অংশগুলিই ত এই দেখিতেছি, কোন দিকে স্থানগুলি স্নিগ্ধ ও শ্যামবর্ণ, অপর দিকে ভয়ঙ্কর বিস্তীর্ণতাবশতঃ রূক্ষ, স্থানে স্থানে পার্ব্বত্য প্রস্রবণের 'ঝাং ঝাং' শব্দে দিক্‌সকল মুখরিত, কোন কোন স্থান মুনিসেবিত জল, মুনিগণের আশ্রম, পর্ব্বত, নদী, গর্ত্ত ও মহারণ্যমিশ্রিত এবং ইহার ভূভাগ আমার পূর্ব্বপরিচিত ॥১৪॥

चतुर्द्दशसहस्राणि रक्षसां भीमकर्म्मणाम्।
त्रयश्च दूषणखरत्रिमूर्द्धानो रणे हताः (१) ॥१५॥

येन सिद्धक्षेत्रेऽस्मिन् जनस्थाने मादृशानामपि भीरुजानपदानामकुतोभयः (२) सञ्चारो जातः (ब)।

रामः। न केवलं दण्डकेयम्, (३) जनस्थानमपि ?। (भ)

शम्बूकः। वाढ़म्, एतानि सर्वभूतलोमहर्षणान्युन्मत्त-

---

चतुरिति। भीमं भयङ्करं कर्म्म हिंसादिकं येषां तेषां रक्षसां राक्षसानां चतुर्द्दशसहस्राणि तथा तेषां नेता दूषणः खरः त्रिमूर्द्धा त्रिशिराः एते त्रयश्च रणे हताः व्यापादिताः। त्रयो मूर्द्धानो यस्येति विग्रहे "द्वित्रिभ्यां मूर्द्धन्" इति राजादित्वात् अत्प्रत्ययेन "त्रिमूर्द्ध" इत्येवं प्रयोगः स्यात्। तथा च भट्टी—"रघुतनयमुपाययौ त्रिमूर्द्ध" इति। अतएवात्र च्युतसंस्कारतादोषः, स च "त्रिमूर्द्धाः समरे हताः" इति पाठेन समाधेयः।

पथ्यावक्त्रं वृत्तम् ॥१५॥

(ब) येनेति। येन दूषणखरादिराक्षसवधेन। सिद्धानाम् अणिमादिसिद्धानां क्षेत्रे स्थाने। न विद्यते कुतोऽपि भयं यस्मिन् सः अकुतोभयः, सञ्चारो गमनागमनम्।

(भ) राम इति। अत्रापिशब्दः प्रश्ने। सीतासमेतपर्य्यटनस्थानदर्शनेन गभीरविषादोक्तिरियं रामस्य।

(फ) শম্বূক। ইহা দণ্ডকারণ্যই। আপনি এই বনে থাকিয়া, ভয়ঙ্কর কার্য্যকারী চতুর্দ্দশ সহস্র রাক্ষস এবং খর, দূষণ ও ত্রিশিরা এই তিন জনকে নিহত করিয়াছিলেন ॥১৫॥

(ব) যাহাতে, এই সিদ্ধক্ষেত্র জনস্থানে আমাদের মত ভীরু দেশবাসীদিগেরও অকুতোভয়ে বিচরণ হইতেছে।

(ভ) রাম। ইহা কেবল দণ্ডকারণ্য নহে, জনস্থানও ?

---

(१) निपातिता इति क्वापि पाठः। (२) भीरुजनानामिति पाठभेदः। (३) न केवलं दण्डका, किन्तु न केवलं दण्डकेव, न केवलं दण्डकारण्यमिति पाठान्तरम्।

चण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्य्यन्तानि दीर्घारण्यानि दक्षिणां दिशमभिवर्त्तन्ते। तथाहि—(म)

निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत् स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते ॥१६॥

---

(म) शम्बूक इति। बाढं सत्यम्, दण्डकैवेयं जनस्थानञ्चेदमिति स्वीकरोमीत्यर्थः "भृशप्रतिज्ञयोर्बाढ"मिति द्वान्तनानार्थे अमरः "प्रतिज्ञा अङ्गीकार" इति तट्टीका च। सर्वेषां भूतानां प्राणिनां लोमहर्षणानि भयेन रोमाञ्चजनकानि, तथा उन्मत्तानि क्षिप्तप्रायाणि चण्डानि अत्यन्तक्रुद्धानि च यानि श्वापदकुलानि व्याघ्रादिहिंस्रजन्तुगणाः तैः सङ्कुलानि व्याप्तानि गिरिगह्वराणि पर्वतगुहा येषु तानि, जनस्थानं पर्य्यन्तः सीमा येषां तानि। अभिलक्षीकृत्य वर्त्तन्ते दक्षिणदिग्लम्बमानानीत्यर्थः।

निष्कूजेति। क्वचित् कस्मिंश्चिद्भागे निष्कूजाः हिंस्रसञ्चारात् पक्ष्यादीनामपि शब्दरहिताः, अतएव स्तिमिताः निश्चलाः, तथा क्वचिदपि भागे प्रोच्चण्डाः भयङ्कराः सत्त्वानां जन्तूनां स्वनाः शब्दा यासु ताः, क्वचिच्च स्वेच्छया न तु केनाप्युपद्रवेण क्लान्ततयेत्यर्थः सुप्ता निद्रिता ये गभीरभोगा विशालशरीरा भुजगाः सर्पाः तेषां श्वासेन निश्वासवायुना प्रदीप्तोऽग्निर्यासु ताः, प्रदराणां विदीर्णभूमिगर्त्तानाम् उदरेषु मध्येषु विलसत् प्रकाशमानं स्वल्पम् अम्भो जलं यासां ताः सीमानः भागविशेषाः वर्त्तन्ते इति शेषः। यासु सीमसु तृष्यद्भिः पिपासुभिः प्रतिसूर्य्यकैः कृकलासैः अजगराणां सुमहत्सर्पाणाम् अयं दृश्यमानः स्वेदद्रवः घर्म्मजलं पीयते। अतएव लोमहर्षणमिदं वनमिति भावः।

अत्र स्वभावोक्तिरलङ्कारः। गभीरशब्दस्य निम्नार्थे शक्तत्वात् अत्र तु विशालार्थे

(ম) শম্বূক। হাঁ; সকল প্রাণীরই লোমহর্ষণ জনস্থানপ্রান্তবর্ত্তী এই দীর্ঘ বনশ্রেণী, দক্ষিণ দিকে গিয়াছে; ইহার ভিতরের পর্ব্বতগুহাগুলি, উন্মত্ত অত্যন্ত ক্রুদ্ধস্বভাব হিংস্রজন্তুগণে পরিপূর্ণ। যেহেতু—

राम:। पश्यामि च जनस्थानं भूतपूर्वखरालयम्।
प्रत्यक्षानिव (१) वृत्तान्तान् पूर्वाननुभवामि च ॥१७॥

---

लक्षणया प्रयोगात् तस्याश्च लक्षणाया रूढिप्रयोजनाभावात् नेयार्थत्वदोष:, स च विश्रान्त-भोगेति पाठेन समाधेय:। निष्कूजस्तिमिता इत्यनेन हिंस्रजन्तुसञ्चारी व्यज्यत इति वस्तुना वस्तुध्वनि:।

"चण्डस्त्वत्यन्तकोपन:।" "द्रव्यासु व्यवसायेषु सत्त्वमस्त्री तु जन्तुषु।" "भोग: सुखे स्त्र्यादिभृतावहेश्च फणकाययो:।" "दरोऽस्त्रियां भये श्वभ्रे" इति चामर:। "प्रतिसूर्य्यक: कृकलास:।" "अजगर: स्वन सव्यालवृहत्सर्प:" इति च शब्दकल्पद्रुम:।

शार्द्दूलविक्रीडितं वृत्तम् ॥१६॥

पश्यामीति। भूतपूर्वं: खरस्य तदाख्यराक्षसस्य आलयो निवासो यस्मिन् तत् तथोक्तं जनस्थानं पश्यामि च पूर्वानतीतान् वृत्तान्तान् खरदूषणादिभि: सह युद्धादिघटनावली-विषयं प्रत्यक्षानिव अनुभवामि च। दर्शनसमय एव अतीतघटनावलीनां प्रत्यक्षवदनुभव इत्यर्थ:।

अत्र पश्यामि अनुभवामीति क्रियासमुच्चयोऽयमलङ्कार:, तथा अतीतघटनानां प्रत्यक्षाय-माणत्वात् भाविकालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन सङ्कर:। तथा च साहित्यदर्पण:—

"अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यत:।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥"

केचित्तु प्रत्यक्षत्वोत्प्रेक्षा इति वदन्ति।

ইহার কোন দিকের স্থানগুলি, নীরব ও নিস্পন্দ, কোন দিকে জন্তুগণের ভয়ঙ্কর শব্দ হইতেছে, কোন স্থানে ইচ্ছানুসারে নিদ্রিত বিশাল দেহ সর্পগণের নিশ্বাসে অগ্নি জ্বলিতেছে এবং প্রান্তভাগের বিদীর্ণ ভূগর্ত্তের ভিতরে অল্প জল রহিয়াছে; যে প্রান্তভাগে তৃষ্ণার্ত্ত কৃকলাসগণ, বৃহৎ সর্পের ঘর্ম্মজল পান করিতেছে ॥১৬॥

(१) प्रत्यक्षमिवेति पाठान्तरम्।

(सर्वतोऽवलोक्य) सर्वथा प्रियारामा हि वैदेह्यासीत्, एतानि तानि नाम कान्ताराणि, किमतः परं भयानकं स्यात् ?। (य)

(सास्रम्) त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इति हारमतैवासौ (१) स्नेहस्तस्याः स तादृशः॥१८॥

पूर्वं भूत इति भूतपूर्वः "पष्ठान्ताद्भूतपूर्वाभिधेये कण्यर्थे"ति ज्ञापकात् भूतशब्दस्य पूर्वनिपातः॥१७॥

(य) सर्वेति। सर्वतः समन्ततः सर्वासु दिक्षु इत्यर्थः "समन्ततस्तु। परितः सर्वतो विष्वगित्यपी त्यमरः। अवारामपदेन वनम त्रमभिप्रेतं तेन प्रियं प्रीतिकर आरामो वनं यस्याः सा। हिशब्दोऽवधारणे। एतानि दृश्यमानानि, तानि येषु पूर्वं सीतया सह पर्य्यटितं तानीत्यर्थः, कान्ताराणि महारण्यानि। अव एकाकिनो मम वनदर्शनात् परं किं वस्तु भयानकं दारुणदुःखकरत्वेन भयङ्करं स्यात् अपि तु किमपि नेत्यर्थः। येषु वनेषु सीतया सह महामोदेन भ्रमणं कृतवान् अद्य तेष्वेव वनेषु सीतां विना केवलमहं भ्रमामीति महादुःखकरमेतदिति भावः।

त्वयेति। त्वया रामेण सह मधुना पुष्परसेन गन्ध इति मधुगन्धः स एषामस्तीति मधुगन्धीनि तेषु, प्रस्फुटितनानाकुसुमशालिष्वित्यर्थः वनेषु निवत्स्यामि स्थास्यामि, न तु त्वां विना राजधान्यामपि स्थातुमिच्छामीति भावः। इति एवम् उक्तेति शेषः, असौ सीता अरमत आनन्दं प्रकाशितवती। हा इति शोकसूचकमव्ययम्। स तस्य सीतायाः स्नेहः

---

রাম। যেখানে পূর্ব্বে খরের (রাক্ষসের) বাড়ী ছিল, সেই জনস্থান দেখিতেছি এবং পূর্ব্বের বৃত্তান্তগুলিকে যেন প্রত্যক্ষভাবে অনুভবও করিতেছি॥১৭॥

(য) (সকল দিকে দৃষ্টিপাত করিয়া) বনগুলি, সর্ব্বপ্রকারেই সীতার প্রিয় ছিল; এই সেই সকল মহাবন; ইহার পর কি ভয়ঙ্কর হইতে পারে?

(१) इति च रमतैवासौ, इति हा रमते सीता, इतीवारमतीवासौ इति पाठान्तराणि

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥१९॥

स इव सीतायाः स्नेह इव दृश्यत इति तादृश आसीदिति शेषः। सीतास्नेहः सीतास्नेह इवासीदित्यर्थः।

अत्र एकस्यैव स्नेहस्य उपमानोपमेयत्वकल्पनात् अनन्वयोऽलङ्कारः। "उपमानोपमेयत्वमेकस्यैवत्वनन्वयः" इति साहित्यदर्पणात्। तेन तत् स्नेहस्यासाधारणत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥१८॥

अकिञ्चिदिति। अकिञ्चिदपि कुर्वाणः कञ्चिदपि दुःखनाशोपायं न कुर्वाणोऽपीत्यर्थः प्रियो जनः, सौख्यैः अवलोकनालापादिजनिताभिरविच्छिन्नसुखधाराभिरित्यर्थः दुःखानि संसारक्लेशान् अपोहति नाशयति। कथमेतत् सम्भवतीत्याह, हि यस्मात् यो जनो यस्य प्रियः तत् स जन इत्यर्थः तस्य किमपि अनिर्वचनीयम् अमूल्यं वा द्रव्य धनम् अतएव तादृशजनलाभेनैव दुःखनाशः सम्भवति, सीता च ममैवं प्रियजन आसीदिति भावः।

अत्र अप्रस्तुतात् प्रियजनसामान्यात् प्रस्तुतस्य सीतारूपविशेषप्रियजनस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, तथा किञ्चिदकरणेऽपि दुःखनाशोत्पत्तेर्विभावना, सा च सौख्यैरित्युक्तिकृतनिमित्ता, तथा दुःखनाशं प्रति प्रियजनस्य अमूल्यधनत्वं हेतुरिति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, तथा प्रियो जनः किमपि द्रव्यमिति निरङ्गं केवलं रूपकमित्येतेषामङ्गाङ्गित्वेन सङ्करः। तथा कुर्वाण इत्यनेन सम्बन्धयोग्यस्य नञः किञ्चिदित्यनेन योगात् अभवन्मतसम्बन्धदोषः स च "किञ्चिदपि न कुर्वाणः" इति पाठेन समाधेयः।

"द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः।

सुखानां कर्म्माणि (दर्शनादीनि) इति "गुणवचनब्राह्मणादिभ्यः" इत्यादिना ष्यञ् इति सौख्यानि। तदिति "य आधारस्तदधिकरण"मितिवत् द्रव्यमित्यस्य विधेयत्वेन नपुंसकम् ॥१९॥

---

(অশ্রুপাতের সহিত) মধুগন্ধসমন্বিত বনে আপনার সহিত বাস করিব; হায়! এই কথা বলিয়া সীতা আনন্দ অনুভব করিতেন; তাঁহার সেই স্নেহ সেই রকমই ছিল বটে ॥১৮॥

কিছু না করিয়াও, সুখদ্বারাই দুঃখ নাশ করে; কারণ, যে যাহার প্রিয় জন, সে তাহার নিকট কোন অনির্ব্বচনীয় দ্রব্য ॥১৯॥

शम्बूकः । तदलमेभिर्दुरासदैः । अथैतानि मदकलमयूरकण्ठ-कोमलच्छविभिरवकीर्णानि पर्य्यन्तै-(१) रविरलनिविष्ट-नील-बहल-च्छाय-तरुषण्डमण्डितानि असम्भ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि (र)।

(र) शम्बूक इति । भीषणवनदर्शनजनितोऽयं रामस्य विषाद इति भ्रमेण कोमलवन-दर्शनेन तं विषादमपनेतुमाह तदलमित्यादि। दुःखेन आसद्यते चक्षुषा गृह्यत इति दुरासदानि तैरेभिर्वनैरलं विषादभीतिवर्द्धकतया एषां वनानां वर्णनं दर्शनञ्च निष्प्रयोजन-मित्यर्थः। अथेति वाक्यान्तरारम्भे। महानुभावो महाप्रभावो भवान् एतानि मध्यवर्त्तीनि, मदकला अव्यक्तशब्दकारिणो ये मयूराः तेषां कण्ठानामिव कोमला स्निग्धा छविः कान्तिर्येषां तैः पर्य्यन्तैः परिसरैः शेषभागैरिति यावत् अवकीर्णानि विच्छिन्नानि वेष्टितानी-त्यर्थः, तथा अविरलम् अनवकाशं घनमिति यावत् यथा तथा निविष्टाः स्थिता अतएव नीला श्यामला, बहला गाढ़ा च छाया येषां ते तथोक्ता ये तरुणा नवीनास्तरुषण्डा वृक्षसमूहास्तैर्मण्डितानि, तथा असम्भ्रान्तं भयाभावात् अचकितं विविधानां नानाप्रकाराणां मृगाणां हरिणानां यूथं समूहो येषु तानि, तथा प्रशान्तानि सौम्यानि च तानि गम्भीराणि दुरवगाहानि अनन्तानि चेति तानि, मध्यमारण्यकानि मध्यवर्त्तीनि वनानि पश्यतु। शान्तस्निग्धवस्तुदर्शनेन मनसः प्रफुल्लता स्यादिति वक्तुरभिप्रायः।

"मदकलः। अव्यक्तप्रलापी।" "बहलः। दृढे" इति च शब्दकल्पद्रुमः। यद्यपि "कदम्बे षण्डमस्त्रियाम्"इत्यमरेण पद्मादिसमूह एव षण्डशब्दस्य शक्तिरभिहिता, तथापि प्राणिसमूहवाचकसङ्घशब्दस्य "स्फोटो व्यञ्जनसङ्घस्य" इत्यादावप्राणिसमूहेऽपि प्रयोगवत् अजहत्स्वार्थलक्षणया तरुषण्डेत्यत्रापि सामान्यसमूहेऽपि षण्डशब्दस्य प्रयोगः।

(র) শম্বূক। এই দুর্দৃশ্য দর্শনের প্রয়োজন নাই; মহাত্মা এই মনোহর অথচ গম্ভীর (অসীম) মধ্যবর্ত্তী বনগুলিকে দর্শন করুন; মত্ত ও অব্যক্ত শব্দকারী ময়ূরের কণ্ঠের ন্যায় কোমলকান্তিসমন্বিত প্রান্তভাগদ্বারা এই বনগুলি পরিবেষ্টিত এবং ঘনসন্নিবিষ্ট ও নীলবর্ণ প্রচুর ছায়াশালী

(१) पर्वतैरिति क्वापि पाठः।

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥२०॥

अपि च, (ल)

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥२१॥

---

इहेति। इह मध्यमारण्ये समदैः मत्तैः, शकुन्तैः पक्षिभिः, आक्रान्तानाम् उड्डीय आश्रितानां वानीरवीरुधां वेतसलतानां प्रसवैः पुष्पैः सुरभीणि सुगन्धानि, शीतानि स्वभावशीतलानि स्वच्छानि अतीवनिर्म्मलानि तोयानि जलानि यासां तास्तथोक्ताः। तथा फलभराणां फलसमूहानां परिणामेन पक्वतया श्यामाः श्यामवर्णा ये जम्बूनिकुञ्जा घनीभूतजम्बुवृक्षः छादितदेशा इत्यर्थः, तेषु स्खलनेन प्रतिघातेन मुखराणि शब्दायमानानि भूरीणि प्रचुराणि स्रोतांसि प्रवाहा यासां तास्तथोक्ता निर्झरिण्यो नद्यो वहन्ति प्रवहन्ति।

अत्र स्वभावोक्तिरलङ्कारः। मालिनी वृत्तम् ॥२०॥

(ल) अपि चेति। अन्यच्च वक्तव्यमस्तीति शेषः।

दधतीति। अत्र मध्यमारण्ये कुहरभाजां गिरिगह्वरवासिनां भल्लूकयूनां तरुण-

---

বৃক্ষসমূহে পরিশোভিত এবং এই বনসমূহের মধ্যে নানাবিধ জন্তুসমূহ নির্ভয়ে বিচরণ করিতেছে।

এই বনের ভিতরে বহুতর নদী প্রবাহিত হইতেছে, মদমত্ত পক্ষিগণ-কর্তৃক অধিষ্ঠিত বেতসতলার পুষ্পে ঐ নদীগুলির শীতল ও নির্ম্মল জল সুগন্ধি হইতেছে এবং ফলসমূহের পকতাবশতঃ শ্যামবর্ণ জম্বু-(জাম) বনে প্রতিহত হইয়া ঐ নদীগুলির বহুতর স্রোত, শব্দিত হইতেছে ॥২০॥

। रामः। (सबाष्पस्तम्भम्) भद्र! शिवास्ते पन्थानः, देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः (व)।

भल्लूकानाम् अनुरसितेन प्रतिध्वनिना गुरूणि वर्द्धितानीत्यर्थः अम्बूकृतानि सनिष्ठीवशब्दाः थुत्कारशब्दा इति यावत्, थुत्कारस्तु भल्लूकानां स्वभावः स्त्यानं वृद्धिं दधति धारयन्ति थुत्कारशब्दा वृहन्तः श्रूयन्त इत्यर्थः। शल्लकीनां लताविशेषाणां शिशिरः शीतलः कटुः कटुरसः कषायः सुरभिश्च इभैर्हस्तिभिः दलिता मर्द्दिताः अतएव विकीर्णा इतस्ततो विक्षिप्ता ये ग्रन्थयः संयुक्तदेशास्तेषां निष्यन्दस्य निर्यासरसस्य गन्धः स्त्यायति वर्द्धते हस्तिमदगन्धप्रसारादिति भावः।

अत्र अम्बूकृतानां वृद्धिं प्रति अनुरसितगुरुत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

यौवने बलाधिक्यात् ध्वनेर्दीर्घत्वसूचनाय भल्लूकयूनामिति युवशब्दप्रयोगः।

"अम्बूकृतं सनिष्ठीव"मित्यमरः। "कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता" इति हलायुधः। "अष्टकं शल्लकीलतायाम्"मित्यमरकोषटीका। श्लोकद्वयमिदमविकलं महावीरचरिते मालतीमाधवे च दृश्यते। मालिनी वृत्तम्॥२१॥

(व) राम इति। बाष्पस्तम्भेन अश्रुनिरोधेन सहितं सबाष्पस्तम्भम् आहेतिक्रियाविशेषणम्। शम्बूकसमीपे अश्रुपतने अविदितवृत्तान्तकशम्बूकस्य जिज्ञासा स्यात् तत्कथने च धैर्य्यापगमेन लाघवं स्यादिति कवेर्भावः।

पन्थानो गमनमार्गाः शिवा मङ्गलकराः सन्त्विति शेषः। निर्विघ्नं तव गमनमस्त्वित्यर्थः। पुण्येभ्यो लोकेभ्यः पवित्रस्थानेभ्यः ब्रह्मलोकेभ्य इत्यर्थः गन्तुमिति शेषः, देवयानं देवविमानं प्रतिपद्यस्व लभस्व इत्याशीर्वादः। त्वं गन्तुमर्हसीति भङ्ग्यन्तरेण गमनाभ्यनुमोदनम्। "देवयानं देवविमान"मिति शब्दकल्पद्रुमः।

(ल) আরও, এই বনে গুহাস্থিত যুবক ভল্লুকগণের থুৎকারের শব্দ, প্রতিধ্বনিতে বৃহৎ হইয়া, বৃদ্ধি প্রাপ্ত হইতেছে এবং শল্লকীলতার গ্রন্থিদেশ, হস্তিকর্তৃক ভগ্ন হওয়ায় শীতল, কটু এবং ঘ্রাণের তৃপ্তিকর নির্যাসের গন্ধ বৃদ্ধি পাইতেছে॥২১॥

शम्बूकः। यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि। (इति निष्क्रान्तः।) (श)

राम:। एतत्तदेव हि वनं पुनरद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥२२॥

---

(श) शम्बूक इति। पुराणब्रह्मवादिनं प्राचीनं वेदवक्तारं वेदाध्यापकमित्यर्थः अभिवाद्य यावत् प्रणिपत्यैवेत्यर्थः यावच्छब्दोऽत्रावधारणे। शाश्वतं पदं नित्यं स्थानं ब्रह्मलोकम् अनुप्रविशामि गच्छामि। अगस्त्यसदृशमहापुरुषप्रणामस्य महाफलजनकत्वात् समीपवर्त्तित्वेन सुलभं तं प्रणामं कः परित्यजतीति भावः।

अत्र ब्रह्मलोकस्य नित्यत्वं ततः पतनराहित्यरूपं बोध्यम्। तथा च देवीपुराणम्—

"सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम्।
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः॥"

एतदिति। अद्य तदेव एतद्वनं पुनर्दृष्टम्, वनवासकाले प्रथमम् एतत्द्वितीयवारं दृष्टमित्यर्थः। हिशब्दः पादपूरणे। यस्मिन् वने पुरा वनवासकाले चिरमेव बहुकालमेव वसन्तस्तिष्ठन्तो वयं सीतारामलक्ष्मणाः स्वधर्मे स्वयोराश्रमयोः गृहस्थयोर्धर्मे आचारे रताः, वन्यफलमूलादिभोजनवल्कलपरिधानादयो वानप्रस्थधर्माः अतिथिसत्कारादयो गृहस्थ-धर्मास्तेषु आसक्ताः सन्तः आरण्यका वानप्रस्थाश्रमिणः, गृहिणो गृहस्थाः, सांसारिकेषु संसारिभोग्येषु सुखेषु च अङ्गनालिङ्गनमधुरवचनश्रवणानुभवादिषु रसज्ञाः आस्वादानु-भवकारिणश्च अभूम भूतवन्तः स्मः। एकस्याः सीतायाः अभावेन तेषां किमपि सम्प्रति नास्तीति भावः।

(ব) রাম। (অশ্রুনিরোধের সহিত) ভদ্র! তোমার পথ মঙ্গলময় হউক এবং পবিত্র লোকে যাইবার জন্য তুমি দেববিমান লাভ কর।

(শ) শম্বূক। প্রাচীন বেদবক্তা অগস্ত্যমুনিকে অভিবাদন করিয়া সনাতন ব্রহ্মলোকে প্রবেশ করি। (এই বলিয়া চলিয়া গেল।)

अपि च, (ष) एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनील-(१) निचुलानि सरित्तटानि ॥२३॥

अत्र वनवासरूपं कार्य्यं कुर्वतां रामादीनां गृहस्थत्वादिकार्य्यकरणं दैवादिति "गृहिणी सचिवः सखी मिथः" इति साहित्यदर्पणोदाहृतवत् विशेषालङ्कारः। तथा च साहित्यदर्पणः—

"यदाधेयमनाधारमेकञ्चानेकगोचरम् ।
किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा ।
कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ॥"

पादपूरणमात्रप्रयोजनेन हिशब्दप्रयोगात् निरर्थकत्वदोषः, स च "एतत्तदेव विपिनं पुनरद्य दृष्ट"मिति पाठात् समाधेयः ।

वानप्रस्थगृहस्थधर्म्मावुक्तौ गरुडपुराणे । यथा—

"भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्म्मोऽयं वनवासिनः ॥" इत्यादिः ।
"पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह ।
देवतातिथिशिष्टाशी नियतो वेदकर्मसु ॥" इत्यादिः ।

"आस्वादे च रसं प्राहु"रिति शब्दार्णवः ॥२२॥

(ष) अपि चेति । अपि च अन्यच्चेत्यर्थः, ब्रवीमीति शेषः ।

एत इति । विरुवन्तः शब्दायमाना मयूरा येषु ते, एते दृश्यमानाः त एव पूर्वदृष्टा

---

রাম এই সেই বনকেই পুনরায় আজ দেখিলাম ; আমরা পূর্ব্বে যে বনে দীর্ঘকাল বাস করতঃ, স্ব স্ব ধর্ম্মে রত থাকিয়া, বানপ্রস্থাবলম্বী, গৃহস্থ এবং সাংসারিক সমস্ত সুখে রসাভিজ্ঞ ছিলাম ॥২২॥

(१) नीप इति पाठभेदः ।

मेघमालेव यश्चायमारादपि विभाव्यते।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥२४॥

एव गिरयः पर्वताः, तथा मत्ता हर्षहृष्टा हरिणा येषु तानि, तान्येव पूर्वदृष्टान्येव वनस्थलानि। आमञ्जवः अतिमनोहरा वञ्जुला अशोकवृक्षा लताश्च येषु तानि, तथा नीरन्ध्रा निरवकाशा घनाः नीलाः श्यामलाश्च निचुला वेतसा येषु तानि पूर्वदृष्टानि अमूनि दृश्यमानानि सरित्तटानि नदीतीराणि। सर्वत्र सन्तीति क्रिययान्वयः।

अतएवात्र तुल्ययोगितालङ्कारः। न चात्र सन्तीत्यनुक्त्या न्यूनपदत्वदोष इति वाच्यं वामनादिभिरस्तीत्यध्याहारादौ तद्दोषस्यानङ्गीकारात्।

"वकुलो वञ्जुलोऽशोके" इत्यमरः। "वाणीरे कविभेदे स्यान्निचुलः स्थलवेतस" इति शब्दार्णवः।

पूर्वश्लोके अत्र च वसन्ततिलका वृत्तम् ॥२३॥

मेघेति। अयं यः मेघमालेव आरादपि दूरादपि विभाव्यते पर्वतत्वेन बुध्यते। सोऽयं प्रस्रवणो नाम गिरिः पर्वतो विद्यत इति शेषः। यत्र पर्वते गोदावरी नदी अस्तीति शेषः। यस्य पाददेशे प्रवहतीत्यर्थः।

अत्रोपमालङ्कारः। न चात्र मेघमालेति स्त्रीलिङ्गत्वात् "सुधेव धवलश्चन्द्र" इत्यादिवद्भग्नप्रक्रमत्वदोष इति वाच्यं "यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः। यथा "मुखं चन्द्र इवाभाती"ति दर्पणकारोक्तेः सत्त्वात्।

"आराद्दूरसमीपयो"रित्यमरः ॥२४॥

(ঘ) আরও, শব্দায়মান-ময়ূর-সমন্বিত সেই সকল পর্ব্বতই এই; মত্ত হরিণযুক্ত সেই বনভূমিই এই এবং মনোহর অশোকবৃক্ষ ও বহুতর লতাযুক্ত এবং ঘন ও নীলবর্ণ বেতসলতাসমন্বিত সেই সকল নদীতীরই এই।২৩॥

মেঘমালার ন্যায় এই যাহাকে দূর হইতেও পর্ব্বত বলিয়া বুঝা যাইতেছে, এই সেই প্রস্রবণপর্ব্বত, যাহাতে গোদাবরী নদী রহিয়াছে॥২৪॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु।
गोदावर्य्याः पयसि विनतश्यामलानोकहश्री-(१)
रन्तः कूजन् मुखरशकुनो यत्र रम्यो वनान्तः ॥२५॥

आ, तदत्रैव सा पञ्चवटी, यत्रातिचिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः, प्रियायाः प्रियसखी च वासन्ती

---

अस्यैति। अस्यैव प्रस्रवणस्य महति शिखरे विशाले शृङ्गे गृध्रराजस्य पक्षिश्रेष्ठस्य जटायुष इत्यर्थः वास आसीत्, तस्य शृङ्गस्य अधस्तात् निम्नदेशे नीचस्थितेष्वित्यर्थः तेषु पूर्व्वोक्तेषु पर्णोटजेषु पत्रनिर्म्मितकुटीरेषु वयमपि सीतारामलक्ष्मणाः रताः आसक्ताः स्थिता इति यावत्। यत्र निम्नदेशे गोदावर्य्या नद्याः पयसि जले विनतानां फलभारेणावनतानां जलपर्य्यन्तपतितानामित्यर्थः श्यामलानां श्यामवर्णानाम् अनोकहानां वृक्षाणां श्रीः शोभा यस्मिन् स तथोक्तः, तथा मुखराः शब्दायमानाः शकुनाः पक्षिणो यत्र सः, अतएव अन्तर्मध्ये कूजन् शब्दं कुर्व्वन्निव स्थितः, रम्यो मनोहरः वनान्तः वनस्वरूपं वनमिति यावत्, विद्यत इति शेषः।

अत्र प्राणिकर्त्तृकस्य कूजनस्य वनेन कर्त्तुमशक्यत्वात् कूजन्निव यथा वाच्यः तेन भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः।

"गृध्रराजः। जटायुपक्षी"ति शब्दकल्पद्रुमः। "अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः।" "अन्तः स्वरूपे नाशे ना" इति सागरः। मन्दाक्रान्ता वृत्तम् ॥२५॥

---

ইহারই বৃহৎ শৃঙ্গে পক্ষিরাজ জটায়ুর বাস ছিল; তাহার নীচে আমরাও সেই সকল পর্ণশালায় অবস্থিত ছিলাম, যেখানে ফলের ভারে গোদাবরীর জল পর্য্যন্ত অবনত শ্যামবর্ণ বৃক্ষসমূহের শোভা প্রকাশ পাইত এবং যেখানে মনোহর বনপ্রান্তে পক্ষিগণ শব্দ করিত; তাহাতে ঐ বনপ্রান্তই যেন ভিতরে শব্দ করিত বলিয়া বোধ হইত ॥২৫॥

---

(१) विनम इति पाठान्तरम्।

नाम वनदेवता प्रतिवसति, तत् किमिदमापतितमद्य रामस्य (१)? । सम्प्रति हि—(ख)

चिरोद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगात्प्रचलित इव (३) शल्यस्य शकलः ।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्म्मणि पुन-
र्घनीभूतः शोको विकलयति मूर्च्छयति च (४) ॥२६॥

(स) आ इति। आ इति स्मरणसूचकमव्ययम्। अत्रैव देशे। यत्र पञ्चवट्याम् अतिचिरनिवासेन अतिदीर्घकालावस्थानेन। एकत्र दीर्घकालावस्थानेन हि तत्स्थानस्यावस्था सम्यक् परिज्ञाता स्यात् अतएव तत्र विश्रम्भातिप्रसङ्गस्य सम्भव इति भावः विश्रम्भेन फलमूलाद्याहरणार्थं लक्ष्मणेन बहुकालिकं दूरप्रस्थानं कृतम् अन्यं पाश्वागमनासम्भवेन दर्शनासम्भव इति विश्वासेन, ये अतिप्रसङ्गाः स्वच्छन्दप्रेमालापविहारादीनामत्यन्तप्रसक्तयः प्रचुरसम्बन्धा इति यावत् ते विश्रम्भातिप्रसङ्गाः। विविधानां नानाप्रकाराणां विश्रम्भातिप्रसङ्गानां साक्षिणो द्रष्टारः प्रदेशाः स्थानानि सन्तीति शेषः। तत् तस्मात् अद्य रामस्य इदं किम् आपतितम् उपस्थितं सीतया सह पूर्वदृष्टानाम् एतेषाम् अद्य तां विना एकाकिनो मम दर्शनं महादुःखकारणमिति भावः। तत् दुःखं प्रकाशयति सम्प्रति हीत्यादिना। हि तथाहि।

"आ प्रगृह्यं स्मृतौ वाक्ये।" "समौ विश्रम्भविश्वासा"विति चामरः।

चिरोद्वेगेति। चिरं बहुकालस्थायिनम् उद्वेगं हृदयोद्वेलनं मनोयन्त्रणामिति यावत्

(স) ও! তা এইখানেই সেই পঞ্চবটী; যে পঞ্চবটীতে দীর্ঘকাল বাস করায় বিশ্বাসবশতঃ নানাবিধ অতিরিক্ত ঘটনার সাক্ষিস্থানগুলি রহিয়াছে এবং প্রিয়তমা সীতার প্রিয়সখী বাসন্তী নামে বনদেবতা বাস করেন। তা, রামের আজ এ কি কি উপস্থিত হইল? এখন—

(१) रामहतकस्येति क्वापि पाठः। (२) चिराद्वेगारम्भीति पाठान्तरम्।
(३) चलित इव, प्रचल इव इति पाठभेदौ। (४) तत क्वापि पाठः।

तथापि पूर्वसुहृदो भूमिभागान् पश्यामि। (निरूप्य) अहो! अनवस्थितो भूमिसन्निवेशः। तथाहि—(ह)

पुरा यत्र स्रोतः, पुलिनमधुना तत्र सरितां,
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥२७॥

---

आरभते उत्पद्यतीति चिरोद्वेगारम्भी तीव्रः अत्युग्रो विषरसः विषद्रवः प्रसृत इव, तथा शल्यस्य शङ्कोः शकलः खण्डः कुतश्चित् अनिर्वचनीयात् संवेगात् निहित इव हृदये निखात इव, तथा हृन्मर्म्मणि हृदयमध्यदेशे रूढग्रन्थिः उत्पन्नसन्धिः बद्धमूल इति यावत् व्रणः स्फोटकः स्फुटितः विदीर्ण इव, शोकः अतीतसीतास्मृतिः पुनर्घनीभूतः सन्, कालेन विलीनप्रायोऽपि उद्बोधकतत्तत्स्थानदर्शनादिना सान्द्रतां प्राप्तः सन् विकलयति व्याकुलीकरोति सम्मूर्च्छयति मोहं प्रापयति च मामिति शेषः।

अत्र तिसृणां क्रियोत्प्रेक्षाणां मिथो नैरपेक्ष्येण संसृष्टिः तथा विकलयति सम्मूर्च्छयतीत्यनेकक्रिययोः शोक इत्येककर्तृकत्वात् दीपकस्यालङ्कारः।

"गुणे रागे द्रवे रसः।" "वा पुंसि शल्यं शङ्कुर्ना" इति चामरः। शिखरिणी वृत्तम् ॥२६॥

(ह) ननु शोकोद्दीपकत्वादेतेषां दर्शनं न क्रियतामित्याह तथापीति। यद्यपि एतेषां दर्शनं शोकोद्दीपकं तथापीत्यर्थः। पूर्वसुहृदः सुहृद इव पुरा प्रियाचरणकारिण इत्यर्थः। निरूप्य सर्वतो विशेषेणावलोक्य। अहोशब्दः आश्चर्य्ये। भूमिसन्निवेशः अस्य स्थानस्यावस्था अनवस्थितः पूर्वतो वैषम्यं प्राप्तः। वैषम्यं समर्थयति तथाहीति।

বহুকাল যাবৎ অধীরতাজনক তীব্র বিষদ্রব যেন বিস্তৃত হইয়া পড়িতেছে ; শল্যের (পেরেকের) খণ্ড যেন অনির্বচনীয় বেগে হৃদয়ের ভিতরে নিবেশিত হইতেছে ; হৃদয়ের মর্ম্মস্থানে বদ্ধমূল ব্রণ যেন বিদীর্ণ হইতেছে এবং শোক প্রগাঢ় হইয়া, আমাকে বিকল করিয়া তুলিতেছে এবং মূর্চ্ছিত করিবার উপক্রম করিতেছে ॥২৬॥

पुरेति। पुरा सीतया सहावस्थानकाले यत्र सरितां नदीनां स्रोतः प्रवाहः अभूदिति शेषः, अधुना तत्र स्थाने पुलिनं जलादुत्थितं बालुकामयं तटं जातमिति शेषः। तथा क्षितिरुहां वृक्षाणां घनविरलभावः विपर्य्यासं वैपरीत्यं यातः। (यत्र वृक्षा घना आसन् तत्र विरला जाताः, यत्र च विरला आसन् तत्र घना जाता इत्यर्थः।) अतएव बहोः कालात् प्रभूतसमयात् परमिति शेषः दृष्टम् इदं वनम् अपरमिव तद्भिन्नं वनमिव मन्ये अनुभवामि। ननु तदेवेदं वनमिति निश्चये को हेतुरित्याह शैलानां प्रस्रवणादिपर्वतानां निवेशः अवस्थानम् इदं तत् वनमिति बुद्धिं द्रढयति दृढां करोति निश्चयज्ञानं जनयति। तरुनद्यादीनामन्यथाभावेऽपि पूर्वदृष्टशैलानामनन्यथाभावात् 'तदेवैतत्' वनमिति मम निश्चय इति भावः। इदन्त्वावच्छिन्नपक्षकं तद्वनत्वसाध्यकं पूर्वदृष्टतत्तच्छैलदर्शनसाधनकं ममेदमनुमानमस्मात् हेत्वाभासाभावादिति वा भावः।

अत्र अपरवनत्वज्ञानं प्रति पूर्वार्द्धवाक्यद्वयं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा "मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" इति साहित्यदर्पणोदाहृतवत् भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षा, तथा तदलङ्कारकृतविच्छित्तिवशात् तत्तच्छैलदर्शनरूपसाधनात्तद्वनत्वप्रकारकज्ञानरूपसाध्योपपत्त्या अनुमानालङ्कारश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

"तोयोत्थितं तत्पुलिनम्।" "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इत्यमरः।

बहुशब्दो द्विविधः, संख्यावाचकः प्रचुरवाचकश्च, तत्र संख्यावाचकात् नित्यं बहुवचनं स्यात्, प्रचुरवाचकात्तु एकवचनमपि ; तेन बहोरिति प्रयोगः साधुः। न्यायकुसुमाञ्जलावपि "किं बहुना, यं कारवोऽपि विश्वकर्मेत्युपासते" इत्यादावन्यत्रापि एकवचनं दृश्यते।

शिखरिणी वृत्तम् ॥२७॥

(ক) তথাপি, পূর্ব্ববন্ধু স্থানগুলিকে দেখি। (দেখিয়া) ওহে! স্থানের অবস্থার বৈষম্য হইয়া পড়িয়াছে। তাহাই দেখাইতেছি—

পূর্ব্বে যেখানে স্রোত ছিল, এখন সেখানে নদীর চড়া হইয়াছে; বৃক্ষসমূহের ঘনভাব ও বিরলভাব বৈপরীত্য প্রাপ্ত হইয়াছে (পূর্ব্বে গাছগুলি যেখানে ঘন ঘন ছিল, এখন সেখানে ফাঁক ফাঁক হইয়াছে এবং যেখানে ফাঁক ফাঁক ছিল, এখন সেখানে ঘন ঘন হইয়াছে); সুতরাং বহুকালের

हन्त ! परिहरन्तमपि मामितः पञ्चवटीस्नेहो बलादपकर्षतीव। (सकरुणम्) (क)

यस्यां ते दिवसास्तया सह मया नीता यथा (१) स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयते।
एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा, गच्छत्वसम्भाव्य वा ? ॥२८॥

हन्तेति। हन्त खेदे। परिहरन्तमपि परित्यजन्तमपि, पञ्चवटीं विहाय गच्छन्तमपीत्यर्थः। अपकर्षतीव परावर्त्तयतीव इति क्रियोत्प्रेक्षा। स्वैरविहारस्थानत्वात् इमां विहाय गन्तुं नेच्छा भवतीति भावः। सकरुणं सशोकम्।

यस्यामिति। यस्यां पञ्चवट्यां स्वे गृहे यथा, स्वकीयराजधान्यामिव मया तया सीतया सह ते वनवासकालीना दिवसा नीता अतिवाहिताः, तथा दीर्घाभिः घटनानां बाहुल्येन विस्तृताभिः यत्सम्बन्धिकथाभिः यत्पञ्चवटीविषयकालापैरेव न त्वन्यकथोपकथनैरित्यर्थः सततम् आस्थीयते स्थितम् अभीक्ष्णं मया सीतया चेति शेषः। सम्प्रति नाशिता निर्वासनेन विनाशं प्रापिता प्रियतमा सीता येन स तथोक्तः, अतएव पापः पापात्मा एको रामः अद्य तां पञ्चवटीं कथं केन प्रकारेण वा विलोकयतु दारुणशोकेन विदीर्णहृदयत्वादेकस्य मम पञ्चवटीदर्शनमसम्भवमेवेति भावः। तथा असम्भाव्य अवस्थानेन असमादृत्य कथं वा गच्छतु, या किल तदानीमावयोः परमसुखहेतुरासीत् केवलावस्थानेनापि सतां पञ्चवटीमसमादृत्य गमनं नितान्तकृतघ्नताजनकमिति महाव्याकुलोऽस्मि संवृत्त इति भावः।

পর দৃষ্ট এই বনটী যেন অন্য বন বলিয়া মনে করিতেছি ; তবে পর্ব্বতগুলির অবস্থানই এই সেই বন এইরূপ ধারণাকে দৃঢ় করিতেছে ॥২৭॥

(ক) হায় ! পরিত্যাগ করিয়া যাইতে লাগিলেও, পঞ্চবটীর স্নেহই যেন আমাকে এইখানে আকর্ষণ করিয়া রাখিতেছে। (শোকের সহিত)

নিজ গৃহের ন্যায় যে পঞ্চবটীতে আমি সীতার সহিত সেই সকল দিন অতিবাহিত করিয়াছিলাম এবং যে পঞ্চবটীর বিস্তৃত কথা নিয়াই সর্ব্বদা

(१) पुनरिति पाठान्तरम्।

राम:। (सर्वतो विलोक्य सनिर्वेदम्) हा! न काचिदत्र।(ठ)

सीता। भअवदि! तमसे! णिक्कारणपरिच्चाइणो वि एदस्स एदिणा एवंविधेण दंसणेण कीदिसो मे हिअआणुबन्धोत्ति ण आणामि ण आणामि (ड)।

(ड) भगवति! तमसे! निष्कारणपरित्यागिनोऽपि एतस्य एतेन एवंविधेन दर्शनेन कीदृशो मे हृदयानुबन्ध इति न जानामि न जानामि।

(ठ) राम इति। सर्वतः सर्वासु दिक्षु। निर्वेदेन आत्मावमाननया सहेति सनिर्वेदम्। सीताया अदर्शनेऽपि तदुद्देशेन विलापसम्बोधनादिकरणात् निर्णयानर्हतया आत्मनोऽवमाननेति बोध्यम्। तथा च साहित्यदर्पणः—

"तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना।"

अत्र स्थाने काचित् कापि व्यक्तिर्न मास्तीत्यर्थः। अतएव कुतः सीतेति भावः।

(ड) सीतेति। एतस्य आर्य्यपुत्रस्य रामस्य। एवंविधेन दर्शनेन शोककातरत्व-दर्शनेनेत्यर्थः। हृदयानुबन्धः मनसोऽवस्था। इति न जानामि निर्णेतुं न शक्नोमीत्यर्थः। सामवस्थामनुपदमेव तमसा विवृणोति। न जानामीत्यस्य दैन्ये द्विर्वचनम्।

(ট) সীতা। (শোকবশতঃ অস্পষ্ট উচ্চারণের সহিত) আর্য্যপুত্র! এই ঘটনায় এরূপ উক্তি, অনুপযুক্ত। (অশ্রুপাতের সহিত) যে বজ্রের ন্যায় কঠিন, জন্মান্তরেও যাহার দুর্লভদর্শন অনিশ্চিত এবং যে মন্দভাগ্যা, সেই আমার উদ্দেশে এইরূপ উক্তিকারী আর্য্যপুত্রের উপরে আমি কি নির্দ্দয় হইতে পারি? আমি ইঁহার হৃদয় জানি এবং ইনি আমার হৃদয় জানেন।

(ঠ) রাম। (সকল দিকে দৃষ্টিপাত করিয়া আত্মাবমাননার সহিত) হায়! এখানে কেহই নাই!।

(ড) সীতা। ভগবতি! তমসে! বিনা কারণে পরিত্যাগ করিয়া

तमसा। जानामि वत्से! जानामि (ढ)।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव।
प्रसन्नं सौजन्यादपि तु करुणैर्गाढ़करुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षणे इव ॥१३॥

(ढ) तमसेति। जानामि तव हृदयावस्थामिति शेषः। अवधारणे द्विर्वचनं जानाम्येवेत्यर्थः।

किमिव जानासीत्याह तटस्थमिति। तव हृदयं मनः, नैराश्यात् पुनः संयोग-सम्भावनाया अभावात् तटस्थमुदासीनं संयोगोपायकरणादौ निस्पृहमित्यर्थः, अपि च तथा विप्रियवशात् प्रियस्य विरुद्धो विप्रियः दुर्व्यवहारः तद्वशात् अकारणपरित्यागजनित-विद्वेषनिबन्धनादित्यर्थः कलुषं क्रोधेनाविलं पूर्वमासीदित्यर्थः तथा अस्मिन् दीर्घे अनन्त-कालव्यापिनि वियोगे विच्छेदमध्ये अस्मिन् क्षणे समये झटिति अकस्मात् घटनया मेलनेन उत्तम्भितमिव स्तम्भप्रायम् आश्चर्यवशादितिकर्त्तव्यताज्ञानशून्यमिवेत्यर्थः तथा सौजन्यात् प्रेमप्रकाशकसम्बोधनादिना साधुत्वप्रकाशात् प्रसन्नं सन्तुष्टम्, अपि तु तथा करुणैः विलापा-दिना शोकप्रकाशैः गाढ़ः तीव्रः शोको यस्मिन् तादृशम्, रामस्य शोकार्त्तत्वदर्शनात् तवापि तीव्रशोकातुरं मन इत्यर्थः, तथा प्रेम्णा प्रचुरप्रणयप्रकाशेनेत्यर्थः द्रवीभूतमिव आनन्देन गलितमिव।

अत्र भावाभिमानि वाच्यं क्रियोत्प्रेक्षाद्वयम्, तथा नैराश्यादिकारणेन सह तटस्थत्वादिकार्य्यस्य वर्णनात् हेतुनामालङ्कारश्च अनयोरङ्गाङ्गिभावेन सङ्करः। तथा च चन्द्रालोके—

"हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते।"

उत्तम्भितमिति "उदःस्थास्तम्भो"रिति सम्भे' सलोपः। शिखरिणी वृत्तम् ॥१३॥

---

থাকিলেও, ইঁহার এই ঈদৃশ দর্শনে, আমার মনের অবস্থা যে কিরূপ হইয়াছে, তাহা আমি বুঝিতেছি না, তাহা আমি বুঝিতেছি না।

(ঢ) তমসা। আমি বুঝিতেছি, বৎস! আমি বুঝিতেছি।

राम:। देवि!

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः।

अद्याप्यानन्दयति (१) मां त्वं पुनः क्वासि नन्दिनि! ॥१४॥

सीता। एदे दे अगाधदंसिदसिणिद्धसम्भारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदोवि बहुमदो मे जम्मलाहो (ण)।

(ण) एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्य उल्लापाः, येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः।

प्रसाद इति। स्नेहेन प्रेम्णा आर्द्रः क्लिन्नः अतएव शीतलः ते तव स्पर्शः, मूर्त्तो मूर्त्तिमान् प्रसाद इव अनुग्रह इव अद्यापि स्पर्शघर्षं का कथा स्पर्शध्वंसदर्शनेऽपि माम् आनन्दयति सुखीकरोति, पुनः किन्तु हे नन्दिनि! आनन्दकारिणि! त्वं क्व कुत्रासि? त्वमेतावत्येव मम प्रियतमा, यत्तव स्पर्शासद्भावेऽपि तत्स्मरणादेव आनन्दमनुभवामीति भावः।

अत्र भावाभिमानिनी वाच्या गुणोत्प्रेक्षा, तथा शीतलत्वं प्रति स्नेहार्द्रत्वपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तथा स्पर्शरूपाधाराभावेऽपि आनन्दजननक्रियारूपतदाधेयसद्भावात् विशेषश्च अलङ्कारः, एतेषामङ्गाङ्गिभावेन सङ्करः ॥१४॥

(ण) सीतेति। अगाधम् अनन्तं यथा स्यात्तथा दर्शितः स्नेहसम्भारः प्रणयातिशयो

তোমার মন, নৈরাশ্যবশতঃ উদাসীন; অপ্রিয় আচরণবশতঃ কলুষিত; এই দীর্ঘ বিরহের মধ্যে হঠাৎ সম্মেলন হওয়ায় স্তব্ধের মত; সৌজন্যবশতঃ প্রসন্ন; আবার শোকদর্শনে প্রগাঢ় শোকাক্রান্ত এবং এই ক্ষণে প্রেমবশতঃ যেন দ্রবীভূত হইয়া পড়িয়াছে ॥১৩॥

রাম। দেবি! স্নেহবশতঃ আর্দ্র ও শীতল তোমার স্পর্শ, মূর্ত্তিমান অনুগ্রহের ন্যায়, এখনও আমাকে আনন্দিত করিতেছে; আর হে আনন্দকারিণি! তুমি কোথায় আছ? ॥১৪॥

(१) अद्याप्येवार्द्रयति इति पाठान्तरम्।

राम:। अथवा कुत: प्रियतमा, नूनं सङ्कल्पाभ्यास-पाटवोपादान (१) एष रामस्य भ्रम: (त)।

नेपथ्ये। प्रमाद: प्रमाद:। ["सीतादेव्या: स्वकरकलितै"-रित्यर्द्धं पठ्यते]। (थ)

येस्ते तथोक्ता:, आनन्दनिष्यन्दिन: सुखस्राविण: सुखवर्द्धका इत्यर्थ: उल्लापा उच्चैर्विलापा:। येषाम् उल्लापानां प्रत्ययेन विश्वासेन, सदैव एते उल्लापा: श्रुतिसुखकरा भविष्यन्तीति विश्वासेनेत्यर्थ: निष्कारणपरित्याग एव शल्यं शङ्कु: तज्जातमस्येति स तथोक्त: जन्मलाभ: बहुमत: श्लाघ्यतया मन्यत इत्यर्थ:। एते आर्य्यपुत्रस्य उल्लापा ईदृशा मे प्रिया:, यदेषां निकटे अकारणपरित्यागदु:खं तुच्छं मन्यत इति भाव:।

(त) राम इति। महारण्ये निर्वासनेन हताया: सीताया अत्रागमनसम्भावना नास्त्येवेति विवेकोदयादाह अथवेति। सङ्कल्प: 'सीता अत्रास्ति एवञ्च ब्रवीति' इत्यादि-मनोवृत्ति:, तस्य अभ्यासेन पौन:पुन्येन यत् पाटवं नैपुण्यम्, 'सीता अत्रास्ति एवञ्च ब्रवीति' इत्यादिधारणाया: सर्वदाकरणपटुत्वमित्यर्थ: तदेव उपादानं कारणं यस्य स तथोक्त:। भ्रमो भ्रान्तिरिति नूनं निश्चय:। सर्वदैव सीतायाश्चिन्तया प्रायेण सर्वत्र तां पश्यामीति भ्रमो जायत इति सरलार्थ:।

(थ) नेपथ्य इति। प्रमादशब्दस्यार्थ: पूर्वमेव निरूपित:। पठ्यते वासन्तीति शेष:। एवं परत्रापि बोध्यम्।

(ণ) সীতা। অসীম স্নেহসূচক ও আনন্দবর্ষী এই সেই আর্য্যপুত্রের উচ্চ বিলাপ আমি শুনিলাম; অকারণ পরিত্যাগনিবন্ধন শল্যবিদ্ধসদৃশ হইলেও, আমার জন্মলাভকে আমি, যে উচ্চ বিলাপের বিশ্বাসবশতঃ শ্লাঘ্য বলিয়া মনে করি।

(ত) রাম। অথবা, কোথায় প্রিয়তমা? নিশ্চয়ই সর্ব্বদা ভাবনার অভ্যাসজনিত ইহা রামের ভ্রম।

(१) पाटवोत्पाद इति पाठभेद:।

रामः। [सकरुणौत्सुक्यम्] किं तस्य ?

पुनर्नेपथ्ये। ["बध्वा सार्द्ध"मित्युत्तरार्द्धं पठ्यते।]

सीता। को दाणिं णिउज्जिस्सदि [१] (द)।

रामः। क्वासौ दुरात्मा, यः प्रियायाः पुत्रकं वधूद्वितीय-मभिभवति। [इत्युत्तिष्ठति] [ध]

---

(द) क इदानीं नियोक्ष्यते।

(द) सीतेति। इदानीं सहायशून्यावस्थानसमये, कः जनः नियोक्ष्यते मत्पुत्रककरिकरभकसाहाय्यार्थं प्रेष्यते मयेति शेषः। तस्य साहाय्यार्थं कमपि प्रेरयितुं न शक्नोमि महादुःखमेतदिति भावः।

(ध) राम इति। क्व वर्त्तत इति शेषः। वधूर्भार्य्या काचित् हस्तिनी, द्वितीया द्वयोः संख्ययोः पूरणी सहचारिणीति यावत् यस्य तं बध्वा सह विहरन्तमित्यर्थः अभिभवति आक्रामति। तमहं गत्वा व्यापादयामीति भावः। उत्तिष्ठति साहाय्यकरणाय गन्तुमित्यर्थः।

अत्र "द्वितीया सहधर्म्मिणी"त्यमरकोषात् वधूद्वितीयेत्येकार्थशब्दद्वयमाशङ्क्य आपाततः पुनरुक्तत्वप्रतीतिः परञ्च द्वितीयशब्दनिश्चयेन तस्य द्वित्वसंख्यापूरणार्थत्वावगमात् पुनरुक्त-वदाभासोऽलङ्कारः।

(থ) নেপথ্যে। প্রমাদ প্রমাদ। ("সীতাদেব্যাঃ" ইত্যাদি শ্লোকার্দ্ধ পাঠ করিল।)

রাম। (শোক ও উৎকণ্ঠার সহিত) তাহার কি ?

পুনরায় নেপথ্যে। ("বধ্বা সার্দ্ধং" ইত্যাদি পরার্দ্ধ পাঠ করিল।)

(দ) সীতা। এখন কাহাকে নিযুক্ত করি ?

(ধ) রাম। ঐ দুরাত্মা কোথায় ? যে, বধূর সহিত প্রিয়তমার পুত্রকে আক্রমণ করিতেছে। (ইহা বলিয়া উঠিলেন।)

---

(১) অহিউজ্জিস্সদি ইতি পাঠান্তরম্। অভিযোক্ষ্যতি ইতি তদনুবাদঃ।

[प्रविश्य सम्भ्रान्ता] वासन्ती। कथं देवो रघुनन्दनः [न]।

सीता। कहं पिअसही मे वासन्ती [प]।

वासन्ती। जयति जयति देवः।

रामः। [निरूप्य] कथं देव्याः प्रियसखी वासन्ती [फ]।

वासन्ती। देव! त्वर्य्यतां त्वर्य्यतां, इतो जटायुगिरिशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु देव्याः पुत्रकं देवः [ब]।

(प) कथं प्रियसखी मे वासन्ती।

(न) प्रविश्येति। सम्भ्रान्ता आक्रान्तसीतापुत्रक-करिकरभस्य रक्षकाभावात् अस्थिरचित्ता। कथमिति निर्णयाश्चर्य्यसूचकमव्ययम्।

(ब) वासन्तीति। त्वर्य्यतां त्वरा क्रियतां सत्वरं गम्यतामित्यर्थः। सम्भ्रमे द्विर्वचनम्। सत्वरं गत्वा मया किं कर्त्तव्यमित्याह इत इति। इतः स्थानात्। जटायोर्गिरिशिखरं जटायुना अध्युषितपूर्वं पर्वतशृङ्गमित्यर्थः तस्य दक्षिणेन दक्षिणदिग्वर्त्तिना सीतायास्तीर्थं जलावतारो घट्ट इति यावत् तेन, येन घट्टेन सीता जलादिमानेतुं गोदावरीं गतवती तेन घट्टेनेत्यर्थः। अवतीर्य्य प्रविश्य। देव्याः पुत्रकं सीतायाः कृतकपुत्रं तं करिशावकं सम्भावयतु साहाय्यकरणेन प्रीणयतु, देवो राजा भवान्।

"जटायुश्च जटायुषा" इति द्विरूपकोषः। "तीर्थं जलावतारे योनौ च" इत्यजयः।

(ন) বাসন্তী। (ব্যস্ত অবস্থায় প্রবেশ করিয়া) মহারাজ রামচন্দ্র যে!।

(প) সীতা। আমার প্রিয়সখী বাসন্তী যে!।

বাসন্তী। মহারাজের জয় হউক, মহারাজের জয় হউক।

(ফ) রাম। (নিরূপণ করিয়া) সীতাদেবীর প্রিয়সখী বাসন্তী যে!।

(ব) বাসন্তী। মহারাজ! তাড়াতাড়ি করুন তাড়াতাড়ি করুন। এখান হইতে জটায়ুগিরিশৃঙ্গের দক্ষিণ সীতাতীর্থদ্বারা গোদাবরীতে অবতীর্ণ হইয়া, মহারাজ সীতাদেবীর পুত্রকে রক্ষা করুন।

सीता। हा ताद! जटाऊ! सुणं तुए विणा जणट्ठाणं [भ]।

रामः। अहह! हृदयमर्म्मच्छिदः खल्वमी कथोद्घाताः [म]।

वासन्ती। इत इतो देवः [य]।

सीता। भअवदि! सच्चअं एव्व वणदेवदावि मं ण पेक्खदि? [र]

---

(भ) हा तात! जटायो! शून्यं त्वया विना जनस्थानम्।

(र) भगवति! सत्यकमेव वनदेवतापि मां न प्रेक्षते?।

---

(भ) सीतेति। श्वशुरमित्रत्वेन जटायुषः तात इति सीतया सम्बोधनं कृतम्। शून्यं शून्यमिव।

(म) राम इति। कथानां जटायुगिरिशिखर-सीतातीर्थ-गोदावरी-देवीपुत्रकपदानाम् उद्घाताः उच्चारणानि, हृदयमर्म्मच्छिदः तत्तत्पूर्ववृत्तान्तस्मारकत्वेन शोकोदयजननात् हृदयविदारका इत्यर्थः।

(य) वासन्तीति। देवो भवान्, इत इतः अस्मादस्मात् स्थानात् आगच्छत्विति शेषः।

(र) सीतेति। समीपवर्त्ती रामः, समागता वनदेवता वासन्ती च कथमप्यालापाकरणात् आत्मानं न पश्यतीति प्रत्यक्षीकृत्य आश्चर्य्यान्विता सीता तमसां पृच्छति भगवतीति। सत्यकमिति स्वार्थे कः।

(ভ) সীতা। হা পিতঃ! জটায়ু! আপনি ভিন্ন জনস্থান শূন্য হইয়াছে।

(ম) রাম। অহহ! এই বাক্যপ্রয়োগগুলি হৃদয়ের মর্ম্মস্থান ছেদ করিতেছে।

(য) বাসন্তী। মহারাজ এই এই স্থান দিয়া আসুন।

(র) সীতা। ভগবতি! সত্যই কি বনদেবতাও আমাকে দেখিতে পান না।

तमसा। अयि वत्से! सर्वदेवताभ्यः प्रकृष्टमैश्वर्यं भागीरथी-देव्याः तत् किमाशङ्कसे [ल]।

सीता। तदो अणुसरह्म। [इति परिक्रामतः]। [व]

रामः। [परिक्रम्य] भगवति! गोदावरि! नमस्ते।

---

(व) ततोऽनुसरावः।

(ल) तमसेति। भागीरथीदेव्या गङ्गाया ऐश्वर्यम् अणिमादिशक्तिः सर्वदेवताभ्यः प्रकृष्टं प्रबलम्, तत् तस्मात् किं कथम् आशङ्कसे अन्यो द्रक्ष्यतीत्याशङ्कां करोषीत्यर्थः। उत्कृष्टैश्वर्य्यशालिन्या गङ्गाया वरप्रभावेण निकृष्टैश्वर्य्यशालिनी वनदेवता त्वां द्रष्टुं न शक्नुयादिति त्वं यथेच्छं विचरितुमर्हसीति भावः।

ऐश्वर्यञ्च—"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।

ईशित्वञ्च वशित्वञ्च तथा कामावशायिता॥"

"अणिमा अणुभावः, यतः शिलामपि प्रविशति। लघिमा लघुभावः यतः सूर्य्यमरीचीनालम्ब्य सूर्य्यलोकं याति। महिमा महतो भावः यतो महान् भवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम्। प्राकाम्यमिच्छानभिघातः यतो भूमावुन्मज्जति निमज्जति यथोदके वशित्वं भूतभौतिकं वशीभवत्यवश्यम्। ईशित्वं भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे। यत्र कामावसायित्वं सत्यसङ्कल्पता, यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति।" इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः। तत्र कामावसायितारूपैश्वर्य्येण वरप्रदानादिकमिति बोध्यम्।

(व) सीतेति। ततस्तस्मात् निःसंशयादृश्यत्वात् अनुसरावः पश्चात् गच्छावः, आवाम् आर्य्यपुत्रवासन्त्याविति शेषः। परिक्रामतः सीतातमसे इति शेषः।

---

(ল) তমসা। অয়ি বৎসে! গঙ্গাদেবীর ঐশ্বর্য্য (প্রভাব), সকল দেবতা হইতেই অধিক; তা আশঙ্কা করিতেছ কেন।

(ব) সীতা। তবে (উঁহাদের) অনুসরণ করি। (ইহা বলিয়া উভয়ে পদক্ষেপ করিতে লাগিলেন।)

वासन्ती। (निरूप्य) देव! देव! मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण (श)।

रामः। विजयतामायुष्मान्।

सीता। अम्महे! ईदिशो एसो संवुत्तो (ष)।

रामः। देवि! दिष्ट्या वर्द्धसे (स)।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु! लवलीपल्लवः कर्णपूरात् (१)।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः॥१५॥

---

(ष) अहो! ईदृश एष संवृत्तः।

(श) वासन्तीति। निरूप्य निश्चयेनावलोक्य। देव देवेति हर्षे द्विरुक्तिः। मोदस्व आनन्दितो भव। सीतायाः कृतकपुत्रेण करिशावकेन उद्दामदन्तिपराजयकरणादिति भावः।

(ष) सीतेति। अहो आश्चर्य्यम्। एष कृतकपुत्रो मे करिशावकः, ईदृशः महाबलः संवृत्तः जातः, अतीवसुखकारणमेतदिति भावः।

(स) राम इति। दिष्ट्या भाग्येन वर्द्धसे वृद्धिं प्राप्तासि सम्पद्युक्तासीत्यर्थः। अप्रत्यक्षामपि सीतामुद्दिश्य रामस्योक्तिरियम्।

---

राम। (পদক্ষেপ করিয়া) ভগবতি! গোদাবরি! আপনাকে নমস্কার।

(শ) বাসন্তী। (নিরূপণ করিয়া) মহারাজ! মহারাজ! বিজয়ী বধূসহচর সীতাদেবীর পুত্রদ্বারা আপনি আনন্দিত হউন।

রাম। আয়ুষ্মান্ বিজয়ী হউক।

(ষ) সীতা। ওমা! এ, এইরূপ হইয়াছে!।

(স) রাম। দেবি! ভাগ্যবশতঃ তুমি উন্নতিশালিনী হইয়াছ।

---

(१)—कर्णमूलादिति पाठान्तरम्।

सीता। अविउत्तो दाणिं अम्मं दीहाउ इमाए सोम्म-दंसणाए होदु (ह)।

(ह) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु।

उक्तिं प्रति हेतुमाह येनेति। शोभना सुन्दरी तनुर्यस्याः तत्सम्बोधनम्। उद्गच्छन्तौ उत्तिष्ठन्तौ विसकिसलयवत् मृणालाग्रभागवत् स्निग्धौ कोमलौ दन्ताङ्कुरौ यस्य तेन तथोक्तेन येन करिशावकेन ते तव कर्णपूरात् कर्णालङ्कारात् कर्णाभरणमध्यादित्यर्थः लवल्याः वृक्षविशेषस्य (लोयाड़ि, लोयाइल इति प्रसिद्धस्य) पल्लवः व्याकृष्टः शुण्डया आकृष्य नीतः। शैशवीयकोमलशरीरस्वभाव आसीदिति भावः। अयं दृश्यमानः स तव पुत्रः करिशावकः मदमुचां दानजलस्राविणां महाबलवतामिति भावः। वारणानां हस्तिनां विजेता जात इति शेषः। अतएव तरुणे वयसि यौवने काले यत् कल्याणं महाबलवत्त्वेन शत्रुनिराकरणात् मङ्गलं स्यात् प्राणिनामिति शेषः तस्य कल्याणस्य भाजनं पात्रं जातः महाबलवान् भूत इत्यर्थः।

अत्र प्रथमचरणे लुप्तोपमा, तथा चतुर्थचरणार्थं प्रति तृतीयचरणवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च अनयोरङ्गाङ्गिभावेन सङ्करः।

सुतनु इति "स्त्रियां मूर्त्तिस्तनुस्तनू"रित्यमरोक्तदीर्घान्ततनूशब्दस्य सम्बुद्धौ ह्रस्वः। "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्ये"ति काशिकाप्रामाण्यात् जात इत्यत्र पुंस्त्वम्। आख्यातस्य प्रधानक्रियाया इति तदर्थः।

मन्दाक्रान्ता वृत्तम् ॥१५॥

(ह) सीतेति। अयं दीर्घायुः दीर्घकालजीवी मम पुत्रकः अनया दृश्यमानया सौम्यदर्शनया प्रियदर्शनया स्वभार्य्यया करिण्येत्यर्थः अवियुक्तः अविच्छिन्नः चिरमेकत्राव-

হে সুন্দরি! মৃণালাগ্রের ন্যায় দুইটী দাঁতের অঙ্কুর উঠিতেছিল এই অবস্থায় যে হস্তিশাবকটী, তোমার কর্ণালঙ্কার হইতে লোয়াইলের পল্লব আকর্ষণ করিয়া লইত; এই তোমর সেই পুত্র, মদস্রাবী হস্তিগণের বিজেতা হইয়া, যৌবন বয়সে লোকের যে মঙ্গল হইয়া থাকে, সেই মঙ্গলের পাত্র হইয়াছে॥১৫॥

रामः। सखि! वासन्ति! पश्य पश्य, कान्तानुवृत्ति-चातुर्य्यमप्यनुशिक्षितं वत्सेन (क्ष)।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः (१)
पुष्यत्पुष्करवासितस्य (२) पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम्॥१६॥

स्थित इति यावत्। दम्पत्योर्विरहजन्यं परस्परदुःखं जगति सर्वदुःखेभ्यो दारुणमिति स्वयमनिशमनुभवन्ती सीता, तत् दुःखं यथा पुत्रस्थानीययोः करिकरिण्योर्न स्यात् तथाभिसन्धाय आशीर्वादान्तरमकृत्वा चिरसंयोगाशीर्वादं कृतवतीति बोध्यम्।

(क्ष) राम इति। कान्ताया भार्य्याया अनुवृत्तौ अनुनये सन्तोषोपयोगीति तात्पर्य्यं यत् चातुर्य्यं नैपुण्यं तत् वत्सेन करिशावकेन अनुशिक्षितं शिक्षाया लब्धम्। एतेन सीताया अभावेन तदनुवृत्तिकरणासामर्थ्यात् रामस्य मनसि दारुणं दुःखमिति व्यज्यते।

पश्य पश्येति विस्मये द्विर्वचनम्।

कथमेतज्ज्ञायत इत्याह लीलेति। यत् यस्मात् स्नेहात् प्रणयवशात् लीलया अवहेलया अनायासेनेति यावत् उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालस्तम्बाः तेषां कवलच्छेदेषु ग्रासार्थखण्डेषु करिणीमुखवर्त्तिष्वित्यर्थः, पुष्यद्भिः प्रस्फुटितैः पुष्करैः पद्मैः तैषां वासितस्य सुगन्धीकृतस्य पयसो जलस्य गण्डूषाणां मुखपूरणानां संक्रान्तयः सञ्चाराः सम्पादिताः कृताः करिणीमुखवर्त्तिषु मृणालकवलेषु निजमुखपूरितं जलं वेगेन विक्षिप्तमित्यर्थः। तथा शीकरिणा जलविन्दुशालिना करेण शुण्डादण्डेन सेकः करिण्या

(ह) সীতা। এখন এই দীর্ঘায়ু (হস্তিশাবক), এই সৌম্যদর্শনা হস্তিনীর সহিত (চিরকাল) অবিচ্ছিন্ন হউক।

(ক্ষ) রাম। সখি! বাসন্তি! দেখুন দেখুন, বৎস (হস্তিশাবক), প্রিয়তমার অনুবৃত্তি করিবার নৈপুণ্যও শিখিয়াছে।

(१) सम्पादिता इति पाठान्तरम्। (२) पुष्यत्पुष्कर इति पाठभेदः।

सीता। भअवदि! तमसे! अअं दाव ईदिसो जादो, दे उण ण आणामि कुसलवा एत्तिकेण कालेण कीदिसा विअ होन्ति (क)।

---

(क) भगवति! तमसे! अयं तावदीदृशो जातः, तौ पुनर्न जानामि कुशलवौ एतावता कालेन कीदृशाविव भवतः।

---

गात्रोपरि सेचनं कामं पर्य्याप्तं यथा स्यात्तथा विहितः कृतः; पुनः ततः परमित्यर्थः विरामे सेकावसाने अनरालम् अवक्रं सरलं नालं यस्य तादृशं यत् नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं छत्रं धृतं शुण्डादण्डेन करिण्या गात्रोपरि गृहीतमित्यर्थः। एभिर्व्यापारैः कान्तानुवृत्तिचातुर्य्यमिषा सुव्यक्तैवेति भावः।

अत्र स्वभावोक्तिरलङ्कारः, तथा नलिनीपत्रातपत्रमिति निरङ्गं केवलं रूपकञ्चेत्यनयो-रङ्गाङ्गिभावेन सङ्करः; तथा छेकानुप्रासवृत्त्यनुप्रासयोश्च संसृष्टिः। "मधु द्विरेफः कुसुमैकपात्रे" इत्यादिवदत्र तिर्य्यग्जातिगतत्वात् शृङ्गाररसाभासः।

"काण्डः स्तम्बे तरुस्कन्धे बाणावसरयोरपि"ति मेदिनी। "गण्डुषः। मुखपूरण"मिति शब्दकल्पद्रुमः। "शीकरोऽम्बुकणाः स्मृताः।" "कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्।" "अरालं कुटिलं वक्र"मिति चामरः।

शार्दूलविक्रीडितं वृत्तम्॥१६॥

(क) सीतेति। अयं कृतकपुत्रः करिशावकः, ईदृशो यौवनोचितवृद्धिबलवान् कीदृशाविव यौवनोचितवृद्धिबलशालिनौ तदशालिनौ वा इति न जानामीत्यर्थः।

अत्र न जानामीति वाक्यस्य तौ पुनरित्यादिवाक्यान्तरे प्रवेशादपि सीतायाः स्नेहोदयेन व्याकुलीभूतत्वात् "दिङ्मातङ्गघटे"त्यादिसाहित्यदर्पणोदाहृतवत् न गर्भितत्वदोषः।

---

যেহেতু, হস্তিনী, অবলীলাক্রমে কতকগুলি মৃণাল তুলিয়া, তাহার খণ্ড সকল, মুখমধ্যে ধারণ করিয়াছে; এদিকে এই হস্তিশাবক প্রস্ফুটিত পদ্মদ্বারা সুবাসিত নিজমুখস্থিত জল, ঐ হস্তিনীর মুখস্থিত মৃণালখণ্ডগুলির উপরে পর্য্যাপ্তরূপে সঞ্চারিত করিতেছে এবং তাহার পর, (হস্তিনীর গাত্রের উপরে) সরল নালসমন্বিত পদ্মপত্রের ছত্র ধারণ করিয়াছে॥১৬॥

तमसा। याद्दशोऽयं ताद्दशौ तावपि (ख)।

सीता। ईद्दिसो अहं मन्दभाइणो, जाए ण केवलं णिरन्तरं अज्जउत्तविरहो पुत्तविरहोवि (ग)।

तमसा। भवितव्यतेयमीद्दशी (घ)।

सीता। किंवा मए पसूदाए, जेण तादिसं पि मम पुत्तकाणं ईसिविरलकोमलदसणुज्जलकवोलं अणुवद्धमुद्ध-

(ग) ईद्दशी अहं मन्दभागिनी, यस्या न केवलं निरन्तरमार्य्यपुत्रविरहः पुत्र-विरहोऽपि।

(ङ) किंवा मया प्रसूतया, येन ताद्दशमपि मम पुत्रकयोः ईषद्विरलकोमलधवल-

(ख) तमसेति। अयं करिशावकः याद्दशो यौवनोचितशरीरपुष्टिबलशाली जातः तावपि कुशलवौ ताद्दशौ शरीरपुष्टिबलशालिनौ जाताविव्यर्थः। कालेन वृद्धिबलयोः समानन्यायादिति भावः।

(ग) सीतेति। विरहो वियोगः। पतिपुत्रयोर्बहुकालविरहादेव अहं मन्द-भागिनीति भावः।

(घ) तमसेति। इयं त्वया अनुभूयमाना ईद्दशी पतिपुत्रयोर्विरहकारिणी भवि-तव्यता भाग्यम्। दुरद्दष्टेनैव तवायं पतिपुत्राभ्यां विरहः कृतः न तु केनचिन्मनुष्येणेति न शोचनीय इति भावः।

"भवितव्यता। भाग्य"मिति शब्दकल्पद्रुमः।

(क) সীতা। ভগবতি! তমসে! এ, এই রকম হইয়াছে; জানি না, এতকালে সেই কুশ ও লব কি রকম হইল।

(খ) তমসা। এ, যেরূপ হইয়াছে; তাহারাও সেইরূপই হইয়াছে।

(গ) সীতা। আমি এমনই মন্দভাগিনী, যাহার সর্ব্বদা কেবল স্বামীর বিরহ নহে, পুত্রের বিরহও।

(ঘ) তমসা। দৈবই এইরূপ।

काअलि-विहसिदं णिवद्धकाअसिहण्डअं अमलसुहपुण्डरीअ-जुअलं ण परिचुम्बिदं अज्जउत्तेण (ङ)।

तमसा। अस्तु देवताप्रसादात् (च)।

---

दशनोज्ज्वलकपोलम् अनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीक-युगलं न परिचुम्बितमार्य्यपुत्त्रेण।

---

(ङ) सीतेति। प्रसूतया प्रसवकारिण्या, कर्त्तरि क्तः। मम पुत्रयोः प्रसवो निष्फल इत्यर्थः। येन हेतुना, ईषद्विरलाः नातिसंश्लिष्टाः कोमलाः मृदुलाः नवीनत्वादनतिकठिना इत्यर्थः धवलाः श्वेतवर्णाः ये दशना दन्तास्तैः तत्प्रभाभिरित्यर्थः। उज्ज्वलौ चिक्कणौ कपोलौ गण्डौ यस्य तत्तथोक्तम्, तथा अनुबद्धे अनुसृते कृते इत्यर्थः काकली अस्पष्टमधुरः शब्दः विहसितं मधुरहास्यञ्च ते येन तत् तथोक्तम्, तथा निबद्धौ धृतौ काकशिखण्डकौ काकपक्षौ (जुल्पी इति प्रसिद्धौ) येन तत् तथोक्तम्, अमलमुखपुण्डरीकयोः निष्कलङ्कमुखपद्मयोर्युगलं द्वयम् आर्य्यपुत्त्रेण पत्या रामेण न परिचुम्बितम्। पत्युः स्नेहेन लालनादिना च सन्तानप्रसवः सफल इवानुभूयते, मम पुत्रयोस्तु तदभावात् प्रसवो निष्फल इव प्रतिभातीति भावः।

"रदना दशना दन्ताः।" "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे" इति चामरः। "शिखण्डकः। (पुं) काकपक्षः। जुल्पी इति भाषा।" इति शब्दकल्पद्रुमः।

(च) तमसेति। देवतानां प्रसादादनुग्रहात्, अस्तु रामेण तव पुत्रयोर्मुखपद्मद्वयं चुम्बितं भवतु इत्याशीर्वादः।

---

(ঙ) সীতা। আমি প্রসব করিয়াই বা কি করিলাম; যেহেতু, আর্য্যপুত্র আমার পুত্রদ্বয়ের সেইরূপ নির্ম্মল মুখপদ্ম দুইখানিকে চুম্বন করিলেন না, অল্প অল্প বিচ্ছিন্ন, কোমল ও শুভ্রবর্ণ দন্তসমূহের প্রভায় যাহার গণ্ডযুগল উজ্জ্বল, যাহাতে মনোহর অস্পষ্ট মধুর স্বর ও ঈষৎ হাস্য সর্ব্বদাই রহিয়াছে এবং যাহা জুল্পী ধারণ করিতেছে।

(চ) তমসা। দেবতার অনুগ্রহে তাহাই হউক।

सीता। भअवदि! तमसे! एदिणा अवच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी, ताणं अ पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी ह्मि संवुत्ता (छ)।

तमसा। किमत्रोच्यते, प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य। परञ्चैतदन्योन्यसंश्लेषणं पित्रोः (ज)।

---

(छ) भगवति! तमसे! एतेन अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी, तयोश्च पितुः सन्निधानेन क्षणमात्रं संसारिणी अस्मि संवृत्ता।

---

(छ) सीतेति। एतेन इदानीन्तनेन, अपत्ययोः पुत्रयोः संस्मरणेन चिन्तया उच्छ्वसितौ दुग्धागमेन स्फीतौ प्रस्नुतौ दुग्धं स्रवन्तौ स्तनौ यस्याः सा तथोक्ता, तयोरपत्ययोः पितुरार्य्यपुत्रस्य रामस्य। क्षणमात्रम् एतत्समयमात्रं संसारिणी गृहस्था। पतिपत्नी-पुत्राणां यथासम्भवम् एकत्रावस्थानं हि गार्हस्थ्यं तदत्र मे प्रायेण जातमिति भावः। सीताया गभीरविषादाक्षेपोक्तिरियम्।

"न पतन्ति वंशो येन जातेन तदपत्य"मिति कलापटीकायां दुर्गः।

(ज) तमसेति। सीतया 'अपत्यसंस्मरणेने'त्यनेन पुत्रस्नेहस्य द्योतनात् तत् समर्थ-यितुमाह किमिति। अत्र अपत्यस्नेहविषये किमुच्यते मयेति शेषः, किं वक्तव्यमस्तीत्यर्थः। प्रसवः अपत्यं खलु निश्चितं स्नेहस्य वात्सल्यस्य, यः प्रकर्षः उत्कर्षः आधिक्यमिति यावत् तस्य पर्य्यन्तः शेषसीमा; पुत्रस्नेहादधिकः स्नेहो जगति नास्तीत्यर्थः। एतन्मतस्य सर्व-वादिसिद्धत्वात् एतत्समर्थनाय किमपि वक्तव्यं नास्तीति भावः। परञ्च अन्यच्च ब्रवीमीत्यर्थः, किन्तदित्याह, एतत् एष प्रसवः पित्रोः मातापित्रोः अन्योन्यं सन्निध्यते परस्परं स्नेहेन योज्यते इत्यन्योन्यसंश्लेषणम् अपत्यं स्नेहबन्धनेन पित्रोर्गाढयोजकमित्यर्थः।

---

(छ) সীতা। ভগবতি! তমসে! এই সন্তানস্মরণে আমার স্তনযুগল স্ফীত হইয়াছে ও দুগ্ধ ক্ষরণ করিতেছে এবং তাহাদের পিতাও নিকটে রহিয়াছেন; ইহাতে আমি একটু কালের জন্য সংসারিণী হইয়াছি।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥१७॥

उक्तार्थमेव विशेषेणाह अन्तरिति। दम्पत्योः पतिपत्न्योः अन्तःकरणतत्त्वस्य मनःपदार्थस्य स्नेहसंश्रयात् परस्परं प्रति-परस्परप्रणयसम्बन्धात् अपत्यमिति सन्तानरूपः अयमेकः अद्वितीयः सर्वोत्तम आनन्दग्रन्थिः सुखमयग्रन्थिः बध्यते विधात्रेति शेषः। (दम्पत्योरनपत्यदशायाम् उभयोर्मन उभयत्रैव तिष्ठति, अपत्ये जाते तु तस्य रक्षणावेक्षणादिसकलतत्त्वावधानाय समानमेव तस्मिन्नपत्ये स्थितं सत् मीलितं भवति,) तदपत्यञ्च सर्वदैवानन्दजनकमिति यथा पृथक् स्थानस्थं किमपि वस्तुद्वयम् एकत्र संयोज्य केनचित् सूत्रेण बध्यते तथा मातापित्रोर्मनः सन्तानेन संयोज्य बध्यत इति वा सरलार्थः।

अत्र अपत्ये आनन्दग्रन्थित्वारोपस्य प्रकृतस्नेहोत्कर्षप्रतिपादनोपयोगितया तुल्याधिकरणः परिणामालङ्कारः।

दम्पत्योर्दुश्चरित्रत्वादिना परस्परस्नेहसम्बन्धाभावे जातमप्यपत्यं तयोर्मनःसंयोजकं न भवतीति प्रदर्शनाय 'स्नेहसंश्रया'दित्युक्तम्।

पद्येत्यादि गद्यस्थमेतत्पदं पद्यस्थमेकपदम् अयंपदञ्च "य आधारस्तदधिकरण"मितिवत् प्रक्रंस्यमानलिङ्गम्।

जाया च पतिश्चेति द्वन्द्वे पृषोदरादित्वात् जायाशब्दस्य दमादेशः। अपत्यमितीत्यत्र इतिशब्दः "दशरथ इत्युदाहृतः" इत्यादिवत् स्वरूपाविर्भावकः।

"अन्तःकरणम्। मनः" इति शब्दकल्पद्रुमः। किन्तु अस्य कार्य्यभेदात् त्रैविध्यमाह सांख्यकारिका—

"अन्तःकरणं त्रिविधं दशधा वाह्यं त्रयस्य विषयाख्यम्।
साम्प्रतकालं वाह्यं त्रिकालमाभ्यन्तरकरणम्॥"

"अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरण"मिति सांख्यतत्त्वकौमुदी। वेदान्तिनस्तु चातुर्विध्यमाहुः। यथा—

(ज) তমসা। এ বিষয়ে কি বলিব; সন্তান, বাৎসল্যের উৎকর্ষের চরম সীমা; আর ইহা, পিতা ও মাতার পরস্পর সংযোজক।

वासन्ती। इतोऽपि देवः पश्यतु (ञ)।

अतरुणमदताण्डवोत्सवान्ते
स्वयमचिरोद्गतमुग्धलोलवर्हः (१)।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥१८॥

---

"मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया अमी॥" इति वेदान्तकारिका।

"तत्त्वम्। वस्तु" इति शब्दकल्पद्रुमः।

तमसाया अपि प्रभावातिशयादभिप्रेतजनं विना अन्यो वाक्यं न शृणोतीति बोध्यम् ॥१७॥

(ञ) वासन्तीति। देवो रामः। इतोऽपि अस्यामपि दिशि।

अतरुणेति। स्वयमात्मनैव न तु कस्यचित् चेष्टयेत्यर्थः अचिरोद्गतं यौवनारम्भात् नवोत्पन्नं मुग्धं सुन्दरं लोलं चञ्चलञ्च वर्हं पुच्छं यस्य स तथोक्तः, तथा उत्पन्ना शिखा चूडा यस्य स उच्छिखः, अतएव मणेर्मुकुटं यस्य सः, मणिमयमुकुटधारीव अथवा उच्छिखः उद्गतप्रभापटलः मणिमुकुटः मणिमयकिरीट इव प्रतीयमान इत्यर्थः वध्वा भार्य्यायाः सखा सहचरः, एष दृश्यमानः, स सीतया पोषितपूर्वः शिखण्डी मयूरः अतरुणमदेन अनल्पहर्षेण यस्ताण्डवोत्सवः नृत्योत्सवः तस्य अन्ते अवसाने नदति शब्दायते। मधुरस्वभावोऽयं वर्णितः।

अत्र वाच्या भावाभिमानिनी उत्प्रेक्षालङ्कारः द्वितीयार्थे तूपमालङ्कारः। तथा तरुणशब्दस्य युवके रूढ़त्वादव तु रूढ़िप्रयोजनाभावेऽपि लक्षणया अल्पार्थप्रतिपादनात् नेयार्थत्वदोषः, स च सुबहुलेति पाठेन समाधेयः।

---

বিধাতা, পতি ও পত্নীর হৃদয়ের পরস্পর প্রণয়সম্বন্ধবশতঃ সন্তানরূপ এই একমাত্র আনন্দগ্রন্থি বন্ধন করিয়া থাকেন ॥১৭॥

(ঞ) বাসন্তী। মহারাজ এদিকেও দর্শন করুন।

---

(१) अनुदिवसमवर्द्धयत् प्रिया ते यमचिरनिर्गतमुग्धलोलवर्हम्। इति पाठान्तरम्।

सीता। (सकौतुकास्रम्) एसो सो, एसो सो (ञ)।

रामः। वत्स! मोदस्व, वयमद्य वर्त्तामहे (ट)।

सीता। एव्वं भोदु (ठ)।

रामः। भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रू ताण्डवैर्मण्डयन्त्या।

(ञ) एषः सः, एष सः।

(ट) एवं भवतु।

"ताण्डवं नटनं नाट्यम्।" "पिच्छबर्हं नपुंसके।" इति चामरः। "शिखण्डी मयूरः" इति शब्दकल्पद्रुमः।

पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि च न जौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥१८॥

(ञ) सीतेति। एष दृश्यमानः, स मया पोषितपूर्वो मयूरः। हर्षे द्विर्वचनम्।

(ट) राम इति। मोदस्व आमोदं कुरु। केनेत्याह वयमिति। वर्त्तामहे विद्यमानाः स्मः। स्निग्धजनसन्निधानसमय एव आमोदप्रकाशस्य प्रकृतोऽवसर इति भावः।

(ठ) सीतेति। एवं मयूरस्यामोदप्रकाश इत्यर्थः।

भ्रमिष्विति। भ्रमिषु घूर्णनेषु चक्राकारेण मयूरस्य भ्रमणेषु सत्स्वित्यर्थः कृता पुटयोः

---

মনোহর ও চঞ্চল পুচ্ছদেশ, আপনা হইতে শীঘ্রই যাহার উৎপন্ন হইয়াছে এবং উত্থিত প্রভাশালী মণিময় মুকুটের ন্যায় যাহাকে দেখা যায়, এই সেই ভার্য্যাসমন্বিত ময়ূর, অত্যন্ত আনন্দে নৃত্যোৎসবের পর রব করিতেছে ॥১৮॥

(ঞ) সীতা। (কৌতুক ও অশ্রুপাতের সহিত) এই সেই, এই সেই।

(ট) রাম। বৎস! আমোদ কর; আজ আমরা রহিয়াছি॥

(ঠ) সীতা। এইরূপ হউক।

करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥१८॥

हन्त! तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते (ङ)।

नेत्रावरणचर्म्मणोरन्तर्मध्ये मण्डलाहत्तिः वर्त्तुलाकारेण भ्रमणं येन तत् तथोक्तम्, चक्षुः स्वकीयं (सीतायाः) नेत्रं प्रचलिते चञ्चले चतुरे इङ्गितादिकरणनिपुणे ये भ्रुवौ तयोस्ताण्डवैः नृत्यैः कम्पनैरिति यावत् मण्डयन्त्या भूषयन्त्या परिभ्रमणसमये मयूरी यस्यां यस्यां दिशि याति तस्यां तस्यां दिशि नयनं पातयन्त्यैत्यर्थः मुग्धया सुन्दर्य्या सीतया करौ पाणी किसलये पल्लवे इव तयोस्तालैः नृत्यगीतयोरंशविशेषव्यवच्छेदसूचकैः उभयपाणितलसवेगसंघर्षजनितशब्दैरित्यर्थः सुतं पुत्रमिव नर्त्यमानं कारितनृत्यं त्वां वत्सलेन स्नेहवता मनसा अहं स्मरामि। सीतायाः कृतकपुत्रत्वं ममापि पुत्र इति वात्सल्येन तव तन्नृत्यस्मरणमिदानीं मम जायत इति भावः।

अत्र लुप्तोपमोपमयोरङ्गाङ्गिभावेन सङ्करः। राघवानन्दमहापात्रमते स्मरणालङ्कारोऽपि। मालिनी वृत्तम् ॥१८॥

(ङ) हन्तेति। हन्त हर्षे। तिर्य्यञ्चोऽपि मनुष्येतरप्राणिनोऽपि परिचयं विशेषेण ज्ञानम् अनुरुध्यन्त अनुसृत्य वर्त्तन्ते इत्यर्थः। मयूरोऽयं पक्षिजातिरपि सन् यदस्माकं पूर्वपरिचयानुसारेण इदानीमपि व्यवहरति तन्महदेवाश्चर्य्यमिति भावः।

---

রাম। মনোহরা জনকনন্দিনী, করপল্লবের তালে তালে তোমাকে নৃত্য করাইতেন; তোমার ভ্রমণের সময় তাঁহারও নয়নপুটের ভিতরে তারা দুইটী, মণ্ডলক্রমে ঘুরিতে থাকিত এবং তিনি চঞ্চল ভ্রূযুগলের নৃত্যদ্বারা ঐ চক্ষুকে ভূষিত করিতেন; স্নেহশালী চিত্তদ্বারা সেই অবস্থায় তোমাকে আমি পুত্রের ন্যায় স্মরণ করি ॥১৮॥

(ঙ) ভাল, তির্য্যক্জাতিরাও (পশুপক্ষিগণও) পরিচয়ের অনুসরণ করে।

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्द्धितो य आसीत्।

सीता। (निरूप्य सास्रम्) सुट्ठु पच्चभिआणिदं अज्जउत्तेण। (ढ)

रामः। स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥२०॥

(ढ) सुष्ठु प्रत्यभिज्ञातमार्य्यपुत्रेण।

परिचयानुसारिणं व्यवहारस्य देशान्तरमाह कतिपयेति। प्रियतमया सीतया कतिपयानां क्रियतां कुसुमानाम् उद्गमः उत्पत्तिर्यस्मिन् स तथोक्तः नातिवृद्ध इत्यर्थः यः कदम्बः तदाख्यवृक्षः परिवर्द्धितः आलवालजलसेचन-मूलपरिष्कारकरणादिना वृद्धिं प्रापितः आसीत्। एष दृश्यमानः देव्या गिरिमयूरः सीतायाः कृतकपुत्रः पार्वत्यमयूरः स्मरति तं कदम्बमिति शेषः। कथं स्मरतीति ज्ञायत इत्याह यतो यस्माद्धेतोः अत्र कदम्बवृक्षे स्वजने बान्धवे इव प्रमोदमेति आनन्दमनुभवति। एकया सीतया एतौ मयूरकदम्बवृक्ष-परिपालितौ अतएवैतौ परस्परं भ्रातराविव तदानीमास्ताम् अतएवेदानीमपि एष मयूरः तत्परिचयवशेन अस्मिन् कदम्बवृक्षे वसन्नानन्दमनुभवतीति कथमन्यथा इदानीमपि एष मयूरः स्थानान्तरमपहाय बाहुल्येनास्मिन् कदम्बवृक्षे वसतीति भावः।

अत्रोपमालङ्कारः।

पुष्पिताग्रा वृत्तम् ॥२०॥

কতিপয় পুষ্পোদ্ভব হইলে যে কদম্ববৃক্ষটী, প্রিয়তম সীতাকর্ত্তৃক পরিবর্দ্ধিত হইয়াছিল।

(ঢ) সীতা। (নিরূপণ করিয়া অশ্রুপাতের সহিত) আর্য্যপুত্র, ঠিক্ জানিয়াছেন।

রাম। সীতাদেবীর এই পার্ব্বত্যময়ূরটী, সেই কদম্ববৃক্ষকে (এখনও) স্মরণ করে; যেহেতু বন্ধুজনের ন্যায় ইহাতে (কদম্ববৃক্ষে বসিয়া) আনন্দ অনুভব করে ॥২০॥

वासन्ती। अत्र तावदासनपरिग्रहं करोतु देवः (ण)।

एतत्तदेव कदलीवनमध्यवर्त्ति
कान्तासखस्य शयनीयशिलातलं ते।
अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता, ततो हरिणकैर्न विमुच्यते स्म ॥२१॥

(ढ) सीतेति। निरूप्य स एवायं कदम्ब इति दृष्टिपातेन निश्चित्य। तत्कालीन-सुखस्मरणेन शोकोदयात् सास्रमित्युक्तम्। सुष्ठु सम्यक्, प्रत्यभिज्ञानं स एवायमिति कृत्वा निश्चितमित्यर्थः। स एवायं कदम्ब इति सत्यमेवेति भावः।

(ण) वासन्तीति। तावत्पदमवधारणे, अत्रैवेत्यर्थः। देवो भवान् रामः।

एतदिति। कदलीवनमध्यवर्त्ति, एतत् दृश्यमानं तदेव पूर्वंव्यवहृतमेव कान्ता-सखस्य प्रियसहचारिणः सीतया सहितस्येत्यर्थः ते तव शयनीयशिलातलं शय्याभूतः पाषाणः विद्यत इति शेषः। यद्यस्मात् सीता अत्र शिलातले स्थिता सती एभ्यो हरिणकेभ्यः बहुशो बहुवारं तृणं भक्षणाय घासमदात् अर्पितवती, ततः तस्मात् कारणात् हरिणकैः न विमुच्यते स्म एतत् शिलातलं न परित्यक्तम्, अद्यापि तादृशतृणलाभलोभेनात्रैव वसन्तीति भावः।

"सखा। सहायः" इति शब्दकल्पद्रुमः।

कान्तायाः सखेति कान्तासखः "राजाहःसखिभ्यष्टच्"इति टच्। शीङ्ोऽस्मिन्निति शयनीयं "कृत्यल्युटो बहुलम्"इत्यधिकरणे ल्युट्। हरिणकैरित्यनुकम्पायां कप्रत्ययः।

वसन्ततिलका वृत्तम् ॥२१॥

---

(ণ) বাসন্তী। মহারাজ এইখানে আসন গ্রহণ করুন।

কদলীবনের মধ্যবর্ত্তী এই সেই আপনার ভার্য্যাসমন্বিত অবস্থার শয়নীয় শিলাতল। সীতা এইখানে থাকিয়া, যেহেতু বহুবার ইহাদিগকে তৃণ দিয়াছিলেন, সেই হেতু এই হরিণগণ ইহা পরিত্যাগ করে নাই ॥২১॥

राम:। इदं तावदशक्यमेव द्रष्टुम्। (इत्यन्यतो रुदन्नुप-विशति (त)।

सीता। सहि! वासन्दि! किं तुए किदं अज्जउत्तस्स मम अ एदं दंसअन्तीए। हद्धी! हद्धी! सो ज्जेव अज्जउत्तो, तं ज्जेव पञ्चवटीवणं, सा ज्जेव वासन्दी, ते ज्जेव विविहविस्सम्भ-साक्खिणो गोदावरीकाणणुद्देसा, ते ज्जेव जादणिव्विसेसा मिअपक्खिपादवा, सा ज्जेव चाहं, मम उण मन्दभाइणीए दीसन्तं वि सव्वं ज्जेव एदं णत्थि, ता ईदिसो जीअलोअस्स परिवत्तो (थ)।

---

(थ) सखि! वासन्ति! किं त्वया कृतम् आर्य्यपुत्रस्य मम च एतद्दर्शयन्त्या। हा धिक्! हा धिक्! स एवार्य्यपुत्रः, तदेव पञ्चवटीवनम्, सैव वासन्ती, त एव विविध-विस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषाः मृगपक्षिपादपाः, सैव चाहं मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्वमेतत् नास्ति, तदीदृशो जीवलोकस्य परिवर्त्तः।

---

(त) राम इति। तावद्वाक्यालङ्कारे। इदं शिलातलं द्रष्टुम् अशक्यमेव मयेति शेषः; अस्य शिलातलस्य सीताया सह तत्कालकृतसकलव्यवहाराणां स्मारकत्वेन दारुण-शोककारणत्वादिति भावः। अन्यतः अन्यस्मिन् स्थाने।

(थ) सीतेति। किं त्वया कृतं का अवस्था कृता, एतत् शिलातलं दर्शयन्त्या त्वया आवयोर्महाशोकार्त्तत्वमेव कृतमित्यर्थः अत्र कृततत्तद्व्यापारस्मरणादिति भावः। विविधविस्रम्भसाक्षिणः नानाप्रकारविश्वस्तशयनविहारादिव्यापाराणां द्रष्टारः गोदावरीकाननो-द्देशाः गोदावरीनदीतीरस्थवनप्रदेशाः, जातनिर्विशेषा पुत्रतुल्याः मृगपक्षिपादपाः पशुपक्षि-वृक्षाः। दृश्यमानमपि चक्षुषः प्रत्यक्षीभूतमपि, एतत् सर्वं पञ्चवटीवनादिकं नास्ति न विद्यत इव इति प्रतीयत इत्यर्थः। एतत् सर्वं पञ्चवटीवनादिकं पूर्ववत् अधुना

---

(ত) রাম। ইহা দেখিতে পারিতেছি না বটে। (এই বলিয়া রোদন করতঃ অন্য স্থানে বসিলেন।)

वासन्ती। सखि! सीते! कथं न पश्यसि रामस्यावस्थाम्? (द)

कुवलयदलस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवं नवमेव यः।
विकलकरणः पाण्डुच्छायः (१) शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशां प्रियः॥२२॥

---

सुखजनकत्वाभावात् मम पक्षे सदपि असत्कल्पमेवेति भावः। इति श्रीवन्ती सीता स्वयमेवात्मानं सान्त्वयति वदिति। तस्मात् दत्तप्रमोदानामपि आर्य्यपुत्रदर्शनादीनामिदानीं सुखजनकत्वाभावादित्यर्थः। ईदृशो मत्सदृशः जीवलोकस्य प्राणिजगतः परिवर्त्तः कालक्रमेण सुखिनो दुःखं दुःखिनश्च सुखमित्येवंरूपेण विपर्य्यास इत्यर्थः। इति निश्चीयते मयेति शेषः। ततो नानुतापः कर्त्तव्य इति भावः।

अत्र सुखसाधनीभूतानां पञ्चवटीवनादिनामिदानीं सुखानुत्पादनात् एतन्नास्तीत्यन्यगत्यापि विशेषोक्तिरलङ्कारः, तथा नास्तीत्यत्र प्रतीयमानोत्प्रेक्षा, तथा तदीदृश इत्यत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च।

(द) वासन्तीति। सीतोद्देशेन वासन्त्या उक्तिरियं न तु तां प्रत्यक्षीकृत्येति बोध्यं भागीरथीवरप्रभावात् सीताया अदृश्यत्वात् वाक्याश्रवणाच्चेत्युक्तमेव। यदि रामावस्थां दृष्टवती तदा अवश्यमेवागत्य परिसान्त्वयेरिति सखीत्याद्युक्तावभिप्रायः।

---

(थ) सीতা। সখি! বাসন্তি! তুমি আর্য্যপুত্রকে ও আমাকে ইহা দেখাইয়া কি কার্য্য করিলে! হায়! হায়! সেই আর্য্যপুত্র; সেই পঞ্চবটীবন; সেই বাসন্তী; নানাবিধ বিশ্বস্ত ঘটনার সাক্ষী সেই গোদাবরী-তীরস্থ বনভূমি; সেই পুত্রনির্ব্বিশেষ পশু, পক্ষী ও বৃক্ষ সকল এবং সেই আমি; কিন্তু সমস্তই দৃষ্টিগোচর হইতে থাকিলেও, মন্দভাগিনী আমার ইহা কিছুই নাই। তা, এইরূপই জীবলোকের পরিবর্ত্তন।

---

(१) पाण्डुःशोऽयं इति पाठभेदः।

সীতা। পেক্খামি সহি! পেক্খামি (ধ)।

(ধ) প্রেক্ষে সখি! প্রেক্ষে।

রামাবস্থাং বিবৃণোতি কুবলয়েতি। সততমপি সর্ব্বদাপি তে তব স্বেচ্ছয়া স্বকীয়-দর্শনাকাঙ্ক্ষামাত্রেণ দৃশ্যো দর্শনযোগ্যঃ, ন তু কদাচিৎ কেনচিৎ কার্য্যব্যপদেশেন দৃশ্য ইত্যর্থঃ যো রামঃ কুবলয়দলস্নিগ্ধৈঃ উৎপলপত্রবৎ চিক্কণৈঃ অঙ্গৈঃ হস্তাদ্যবয়বৈঃ নবং নবমিব অননুভূতপূর্ব্বমেব। ন তু দ্রব্যান্তরবৎ সর্ব্বদৈকরূপং নয়নোৎসবং নেত্রয়োরানন্দং দদৌ জনয়ামাসেত্যর্থঃ। স রাম ইদানীং শুচা তব বিয়োগশোকেন বিকলকরণঃ দুর্ব্বলেন্দ্রিয়ঃ পাণ্ডুচ্ছায়ঃ শ্বেতপ্রায়কান্তিঃ, তথা পরিদুর্ব্বলঃ নিতান্তবলহীনদেহঃ কথমপি মহাকষ্টেনেত্যর্থঃ সোঽয়ং রাম ইত্যুন্নেতব্যঃ অনুমাতব্যঃ অনুমানবিষয়ঃ জাত ইতি শেষঃ; তথাপি শোককার্শ্যাদিবিশিষ্টোঽপি দৃশাং চক্ষুষাং প্রিয়ঃ প্রীতিকরঃ। রাম এতাদৃঙ্মধুরমূর্ত্তির্যৎ বিবর্ণকৃশদেহোঽপি দ্রষ্টুর্নয়নস্যাপ্যায়য়তি ইতি ভাবঃ।

অত্র নবনবপ্রকারদর্শনরূপকারণাভাবেঽপি নবনবোৎসবরূপকার্য্যোৎপত্তের্বিভাবনালঙ্কারঃ, লুপ্তোপমা চেত্যনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

"কৃষ্ণঃ পুষ্যাত্বতুলমহিমে"তি ছন্দোমঞ্জরীসমুদাহৃতবদত্রাপি কথমপি স ইত্যুন্নেতব্য ইত্যত্র ন যতিভঙ্গদোষঃ।

"করণং সাধকতমং ক্ষেত্রগাত্রেন্দ্রিয়েষ্বপী"ত্যমরঃ।

হরিণী বৃত্তম্ ॥২২॥

(দ) বাসন্তী। সখি! সীতে! তুমি রামের অবস্থা দেখিতেছ না কেন?

যিনি, সর্ব্বদাই তোমার ইচ্ছানুসারে দর্শনের যোগ্য থাকিয়া, নীলোৎপলদলের ন্যায় স্নিগ্ধ অঙ্গদ্বারা, নূতন নূতন নয়নানন্দ দান করিতেন; এখন শোকে তাঁহার ইন্দ্রিয় সকল বিকল হইয়া গিয়াছে, দেহের কান্তি শ্বেতবর্ণ হইয়াছে এবং নিজে অত্যন্ত দুর্ব্বল হইয়া গিয়াছেন। ইহাতে কোন রকমে তিনি বলিয়া অনুমান করা যায়; তথাপি উনি নয়নের প্রীতিকর ॥২২॥

तमसा। पुत्रि! पश्यन्ती प्रियं भूयाः (न)।

सीता। हा दैव्व! एसो मए विणा अहं वि एदेण विणा त्ति सिविणेवि केण सम्भाविदं आसी। ता मुहुत्तअं वि जम्मान्तरादो विअ अणुलद्धदंसणा वाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तं। (इति पश्यति)। (प)

---

(प) हा दैव! एष मया विना अहमपि एतेन विनेति स्वप्नेऽपि केन सम्भावित-मासीत्। तन्मुहूर्त्तकमपि जन्मान्तरादिव अनुलब्धदर्शना वाष्पसलिलान्तरेषु प्रेक्षे तावत् वत्सलमार्य्यपुत्रम्।

---

(ध) सीतेति। प्रेक्षे प्रेक्षे इत्यवधारणे द्विर्वचनं प्रेक्ष एवेत्यर्थः। इहापि किं कर्त्तव्यं मयेति भावः।

(न) तमसेति। पुत्रि! तनये! कन्यास्वरूपे! इति यावत्। प्रियं पतिं राममिति यावत्। पश्यन्ती भूयाः पुनरपि समागमेन चिरमेव पतिं पश्येत्याशीर्वादः।

(प) सीतेति। एष आर्य्यपुत्रो मया विना तिष्ठेत्, अहमपि एतेन आर्य्यपुत्रेण विना तिष्ठामीत्यर्थः इति केन जनेन स्वप्नेऽपि सम्भावितं चिन्तितमासीत् अपि तु केनापि नेत्यर्थः। आवयोर्विरहः सर्वथैवासम्भव आसीदिति भावः। तत्तस्मात् विरहेण चिरदर्शना-भावादित्यर्थः मुहूर्त्तकमपि अत्यल्पकालमपि बहुसमयं यावत् दर्शनासम्भवादित्यपेरर्थः, जन्मान्तरादिव अन्यस्मात् जन्मन इव अनुलब्धं प्राप्तं दर्शनं रामदर्शनं यया सा अहं वाष्पसलिलान्तरेषु अश्रुजलस्य पतनोद्गमयोरवकाशेषु। वत्सलं मां प्रति स्नेहशालिनम्। इदानीमार्य्यपुत्रदर्शनमावश्यकमेव महासुखकरत्वादिति भावः।

---

(ধ) সীতা। দেখিতেছি সখি! দেখিতেছি।

(ন) তমসা। তনয়ে! প্রিয়তমকে চিরকাল দেখিতে থাক।

(প) সীতা। হা বিধাতঃ! ইনি আমাকে ছাড়িয়া থাকিবেন, আমিও ইঁহাকে ছাড়িয়া থাকিব; ইহা স্বপ্নেও কে মনে করিয়াছিল। তা, একটু কালের জন্য জন্মান্তর হইতেই যেন দর্শন পাইয়া, অশ্রুজলের পতন ও

तमसा। (सस्नेहास्रं परिष्वज्य) सीते !

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥२३॥

---

विलुलितेति। तत्कालीनमिलनजनित आनन्दः दीर्घकालविरहजनितश्च शोकः तौ प्रभवौ हेतू यस्य तं तथोक्तम् अतिपूरैः अतिस्थूलधाराभिः विलुलितं विगलितं बाष्पम् अश्रुजलम् अवसृजन्ती परित्यजन्ती, तृष्णया अत्यन्तदर्शनेच्छया उत्ताना स्फीता दीर्घा च सा, तथा स्नेहनिष्यन्दिनी प्रणयातिशयव्यञ्जिकेति यावत्; धवला कज्जललेपाभावेन नितान्तनिर्म्मलत्वेन च श्वेतकान्तिः अतएव बहलमुग्धा स्थिरमनोहरा अत्युत्सुन्दरीति यावत् अतएव दुग्धकुल्या कृत्रिमा दुग्धनदीव प्रकाशमाना ते तव दृष्टिः चक्षुः हृदयेशं प्राणनाथं रामं स्नपयति अभिषिञ्चति, निर्निमेषा अविरतमेव सर्वाङ्गं पश्यतीत्यर्थः।

अत्र कार्य्येण दृष्टौ, पुरुषस्य स्नानं कारयन्त्याः कस्याश्चित् स्त्रियाः व्यवहारसमारोपात् समासोक्तिरलङ्कारः, तथा दुग्धकुल्येवेत्यत्र उपमा, सादृश्यन्तु उभयोः श्वेतांशे, पदार्थहेतुकं काव्यलिङ्गञ्च एतेषामङ्गाङ्गिभावेन सङ्करः। तथा स्नप स्नेहेति मुग्धादुग्धेति च व्यञ्जनसङ्घस्य सकृत्साम्यात् छेकानुप्रासश्च तेन सह संसृष्टिः।

"बहलः।—दृढ़े"ति शब्दकल्पद्रुमः। "कुल्याल्पा कृत्रिमा सरि"दित्यमरः।

प्रभवत्यस्मादिति प्रभवः अपादाने अल्।

मालिनी वृत्तम् ॥२३॥

---

উত্থানের অন্তরালে, বৎসলহৃদয় আর্য্যপুত্রকে দেখি। (এই বলিয়া দেখিতে লাগিলেন।)

তমসা। (স্নেহ ও অশ্রুপাতের সহিত আলিঙ্গন করিয়া) সীতে!।

শ্বেতবর্ণ ও অত্যন্ত সুন্দর তোমার দৃষ্টি; আনন্দ ও শোক হইতে উৎপন্ন এবং প্রবল ধারায় বিগলিত অশ্রু বর্ষণ করিতেছে; দর্শনের অভিলাষে

वासन्ती। ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।
कलमविरलं रत्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥२४॥

ददत्विति। मधुश्च्युतः मधु श्च्योतन्ति क्षरन्तीति मधुश्च्युतः मधुस्राविणः तरवो वृक्षाः पुष्पैः फलैश्च अर्घ्यं ददतु रामायेति शेषः। स्फुटितानां विकसितानां कमलानां पद्मानाम् आमोदप्रायः सुगन्धबाहुल्यं येषु ते तथोक्ताः वनानिलाः वनवायवः प्रवान्तु प्रवहन्तु रामशरीरसेवनायेत्यर्थः। रतये सुरताय उत्कण्ठा औत्सुक्यं येषां ते, तदानीं पक्षिणामतीवस्वरमाधुर्य्यं स्यादिति बोध्यं। शकुन्तयः पक्षिणः अविरलम् अनवरतं कलं मधुरास्फुटं यथा स्यात्तथा क्वणन्तु शब्दायन्तां श्रुतिसुखजननायेत्यर्थः। कथमयमादेश इत्याह यतोऽयं देवो रामः स्वयम् आत्मना न तु प्रतिनिधिनेत्यर्थः पुनर्द्वितीयवारम् इदं वनमागतः। एतत् सर्वं रामस्य सम्मानाभ्यर्थनार्थमिति भावः।

अत्र अर्घ्यदानादीन् प्रति चतुर्थचरणगतवाक्यार्थरामागमनस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। यथा कश्चित् राजा स्वकीयराजधान्यामन्यस्मिन् राजनि समागते तत्सम्मानाभ्यर्थनार्थम् अर्घ्यादिपूजाद्रव्यचामरव्यजनवातवैतालिकस्तुतिपाठादिशति, तद्वदियमपि वनाधिदेवता वासन्ती स्वाधिकृतवने समुपस्थितस्य रामस्य सम्मानाभ्यर्थनार्थम् अर्घ्यदानाय तरून्, व्यजनाय वनानिलान्, श्रुतिसुखाय च विहङ्गमादिदेशेति वस्तु व्यज्यत इति शब्दशक्तिमूलो वस्तुध्वनिः।

"आमोदः सोऽतिनिर्हारी।" "प्रायो भूम्न्यन्तगमने।" "ध्वनौ तु मधुरास्फुटे कलः।" "शकुन्ति-पक्षि-शकुनि शकुन्त-शकुन-द्विजा" इति चामरः।

हरिणी वृत्तम् ॥२४॥

অত্যন্ত দীর্ঘ হইয়া পড়িয়াছে এবং স্নেহ ক্ষরণ করিতেছে, এই অবস্থায় তোমার ঐ দৃষ্টি, ক্ষুদ্র দুগ্ধনদীর ন্যায় হৃদয়েশ্বরকে স্নান করাইতেছে ॥২৩॥

বাসন্তী। মধুস্রাবী বৃক্ষসকল, পুষ্প ও ফলদ্বারা অর্ঘ্য দান করুক; প্রস্ফুটিত-পদ্ম-সৌরভ-পূর্ণ বনবায়ু বহিত হউক এবং অনুরাগে উৎকণ্ঠিত

रामः। एहि सखि! वासन्ति! नन्वितः स्थीयताम् (फ)।

वासन्ती। (उपविश्य सास्रम्) महाराज! अपि कुशलं कुमारलक्ष्मणस्य? (ब)

रामः। (अश्रुतिमभिनीय)। (भ)

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत्।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥२५॥

---

(फ) राम इति। अनुनये ननुशब्दः। इतः अस्मिन् स्थाने। अङ्गुलीनिर्द्देश-पुरःसरेयमुक्तिः।

(ब) वासन्तीति। अपिशब्दः प्रश्ने। रामस्य दृश्यमानत्वात् सीतायाश्च निर्वासन-श्रवणेन मरणनिश्चयात् परिचितानां सीतारामलक्ष्मणानां मध्ये केवलमनुपस्थितस्य लक्ष्मण-स्यैव कुशलप्रश्नः कृत इति बोध्यम्।

(भ) राम इति। अश्रुतिम् उक्तवासन्तीवाक्यश्रवणाभावं प्रगाढ़चिन्ताभिनयेनेत्यर्थः।

करेति। मैथिली सीता करकमलेन पाणिपद्मेन वितीर्णैः दत्तैः अम्बुनीवारशष्पैः जलनीवारधान्य-( तीनिधान्य इति हिन्दीभाषा, उड़ीधान्य इति वङ्गभाषा ) बालतृणैः यान् तरुशकुनिकुरङ्गान् वृक्षपक्षिहरिणान् जलैर्वृक्षान्, नीवारैः पक्षिणः, बालतृणैर्हरिणानित्यर्थः अपुष्यत् पालितवती। तेषु तरुशकुनिकुरङ्गेषु दृष्टेषु मयेत्यर्थः सत्सु प्रस्तरस्य पाषाणस्य उद्भेदे विदारणे योग्यः समर्थः द्रव इव वज्रादिवेग इव मम हृदयस्य मनसः कोऽपि

---

পক্ষিগণ, নিরন্তর মধুর ও অস্পষ্ট রব করুক। কারণ, মহারাজ রামচন্দ্র স্বয়ং এই বনে পুনরায় আগমন করিয়াছেন ॥২৪॥

(ফ) রাম। সখি! বাসন্তি! আইস, এইস্থানে অবস্থান কর।

(ব) বাসন্তী। (উপবেশন করিয়া অশ্রুপাতের সহিত) মহারাজ! কুমার লক্ষ্মণের মঙ্গল ত?

वासन्ती। महाराज! ननु पृच्छामि, अपि कुशलं कुमारलक्ष्मणस्य? (म)

रामः। (स्वगतम्) अये महाराजेति निष्प्रणयमामन्त्रणपदम्, सौमित्रिमात्रे च वाष्पस्खलिताक्षरः कुशलप्रश्नः, तथा मन्ये विदितसीतावृत्तान्तेयमिति। (प्रकाशम्) आं, कुशलं कुमारस्य। (इति रोदिति)। (य)

---

अनिर्वचनीयः विकारः शोकजनितविक्रतिर्भवति। सीतया परिपोषितान् तरुविहङ्गकुरङ्गान् क्रमशो दृष्ट्वा सीताशोकातुरो रामः तस्याश्चिन्तया वासन्तीवाक्यं न श्रुतवानिति बोध्यम्।

अत्र यथासंख्योपमालङ्कारयोरङ्गाङ्गिभावेन सङ्करः।

"तृणधान्यानि नीवाराः।" "शष्पं बालतृण"मिति चामरः। द्रवः। वेग" इति शब्दकल्पद्रुमः।

मालिनी वृत्तम् ॥२५॥

(म) वासन्तीति। पूर्वमुक्तं वाक्यं रामेण न श्रुतमित्यालोच्य 'ननु पृच्छामि' इत्युच्चारणेन रामं सावधानीकृत्य पुनः पृच्छति अपीति।

(य) राम इति। अत्र अये इति विषादसूचकमात्मसम्बोधनम्। महाराजेति महाराजेत्यानुपूर्वीकं निष्प्रणयं स्नेहासूचकम् आमन्त्रणपदं सम्बोधनशब्दः। महाराजेति साधारणप्रयोक्तव्यशब्दे सखिशब्दादिवत् प्रणयवत्सम्बन्धविशेषद्योतनाभावात् प्रणयाभाव

---

(ভ) রাম। (শ্রবণের অভাব অভিনয় করিয়া) সীতাদেবী, করকমলপ্রদত্ত জল, উড়ীধান ও ঘাসদ্বারা, যে সকল বৃক্ষ, পক্ষী ও হরিণদিগকে পোষণ করিয়া গিয়াছেন; সেই গুলি দেখার পর, পাষাণ-বিদারণ করিতে সমর্থ বজ্রাদির বেগের ন্যায়, আমার মনের অনির্বচনীয় একপ্রকার বিকার উপস্থিত হইতেছে ॥২৫॥

(ম) বাসন্তী। মহারাজ! আমি জিজ্ঞাসা করিতেছি—কুমার লক্ষ্মণের মঙ্গল ত?

বাসন্তী। অয়ি দেব! কিমিতি দারুণো দারুণঃ খল্বসি? (র)

সীতা। সহি! বাসন্দি! কিং তুমং সি এব্বং বাদিণী, পিআরহো ক্খু সব্বস্স অজ্জউত্তো, বিসেসদো মম পিঅসহীএ (ল)।

---

(ল) সখি! বাসন্তি! কিং ত্বমসি এবংবাদিনী, প্রিয়ার্হঃ খলু সর্ব্বস্যার্য্যপুত্রঃ, বিশেষতো মম প্রিয়সখ্যাঃ।

---

ইতি ভাবঃ। সৌমিত্রিমাত্রে কেবললক্ষ্মণে কেবললক্ষ্মণবিষয় ইত্যর্থঃ। বাষ্পেণ বাষ্পাবরুদ্ধ-কণ্ঠতয়েত্যর্থঃ। স্খলিতানি অস্পষ্টোচ্চারিতানি অক্ষরাণি বর্ণা যস্মিন্ স তথোক্তঃ কুশল-প্রশ্নঃ মঙ্গলজিজ্ঞাসা। তথা তেন হেতুনা ইয়ং বাসন্তী, বিদিতোঽবগতঃ সীতায়া বৃত্তান্তো নির্ব্বাসনেন মরণং যয়া সা ইতি মন্যে নিশ্চিনোমি। প্রাণবৎ প্রিয়সখ্যাঃ সীতায়া নির্ব্বাসনেন অতীববিরুদ্ধাচরণাৎ সীতাঘটিতোঽনয়া সহ মম প্রণয়ো নষ্টঃ, অতএব নিষ্প্রণয়সা-মন্ত্রণপদম্, সীতায়া মরণনিশ্চয়েন শোকাতুরতয়া কেবললক্ষ্মণবিষয়ে বাষ্পস্খলিতা-ক্ষরকুশলপ্রশ্নকরণমিত্যবগম্যতে তেন চ বিদিতসীতাবৃত্তান্তা বাসন্তীতি নিশ্চয়ঃ, অন্যথা সীতায়া অপি কুশলং পৃচ্ছেদিতি ভাবঃ। আমিতি স্বীকারার্থমব্যয়ম্। আমিতি সংস্কৃতাব্যয়শব্দস্য 'হাঁ' ইতি বঙ্গভাষাপ্রসিদ্ধঃ প্রকৃতানুরূপঃ শব্দঃ।

(র) বাসন্তীতি। দারুণো দারুণঃ অতিভয়ঙ্করঃ অতিশয়ার্থে দ্বির্ব্বচনম্।

(ল) সীতেতি। এবংবাদিনী আর্য্যপুত্রং প্রতি রূক্ষভাষিণী কিং কথমসি,

---

(ষ) রাম। (স্বগত) "মহারাজ" ইত্যাকার প্রণয়বিহীন সম্বোধনপদ এবং কেবল লক্ষ্মণের বিষয়ে মঙ্গলপ্রশ্ন; তাহাতে আবার অশ্রুভারে অস্পষ্টো-চ্চারিত অক্ষর; তাহাতে আমি মনে করি, এই বাসন্তী, সীতার বৃত্তান্ত জানিয়াছেন। (প্রকাশ্যে) হাঁ, কুমার লক্ষ্মণের মঙ্গল। (এই বলিয়া রোদন করিতে লাগিলেন।)

(র) বাসন্তী। অয়ি মহারাজ! আপনি এমন দারুণ হইলেন কেন?

वासन्ती। त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव, शान्तमथवा किमिहोत्तरेण ॥२६॥

(इति मूर्च्छति)

---

नैतदुचितमिति भावः। कथमित्याह प्रियार्हः प्रियवाक्येनालापयोग्यः। मम प्रियसख्याः विशेषतः प्रियार्ह इत्यर्थः। तेन नैवं ब्रूहीति भावः।

रामस्यातिदारुणत्वं प्रति हेतुमाह त्वमिति। त्वं मे मम जीवितं जीवनमसि तद्वत् प्रियतमत्वादिति भावः, तथा त्वं मे द्वितीयं हृदयम् असि ममालोच्यसर्वविषयाणामेवावगमादिति भावः, तथा त्वं मे नयनयोश्चक्षुषोः कौमुदी ज्योत्स्ना असि तद्वदानन्दजनकत्वादिति भावः, तथा त्वं मे अङ्गे वक्षःप्रभृत्यवयवे अमृतं सुधा असि तद्वत् स्निग्धत्वस्य स्पर्शसुखस्य च जनकत्वादिति भावः। इत्यादिभिः एवंभूतैरन्यैश्च प्रियशतैः प्रियाणां प्रियवचनानां न तु प्रियाचरणानामिति भावः, शतैर्बाहुल्यैः मुग्धां सरलबुद्धिशालिनीं सा यदि तीक्ष्णबुद्धिशालिन्यभविष्यत् तदा तां प्रति ईदृशं दुर्व्यवहारं कर्त्तुं कदापि न भवानशक्ष्यत्, येन सा प्राक् तदवगम्य प्रतिकारोपायमवलम्बेतेति भावः। अनुरुध्य सन्तोष्य तामेव नितान्तविश्वासकारिणीं त्वदेकतानचित्तामित्यर्थः न तु विरुद्धाचरणेन विप्रियामित्येवशब्दार्थः निर्वासितवानिति शेषः। ईदृशनिर्दयहृदयस्य अस्य कार्य्ययुक्तायुक्तत्वप्रदर्शनेन दयोत्पादनाभिप्रायः "पाषाणे नास्ति कर्द्दम" इति न्यायेन निष्फल एवेति विवेच्याह अथवेति। अथवा किंवा शान्तं विरतं मम वाक्यमत्रैव समाप्तं भवत्वित्यर्थः। कथमित्याह किमिति। इह तव सन्निधाने उत्तरेण एतत् परवर्त्तिना वाक्येन किं फलम् अपि तु किमपि नास्तीत्यर्थः। अतीतघटनायाः पुनर्निवर्त्तनासम्भवात् सीतानिर्वासनकार्य्यस्य युक्तायुक्तत्वप्रदर्शनवाक्यमिदानीं निष्फलमेवेति भावः।

---

(ল) সীতা। সখি! বাসন্তি! তুমি এইরূপ রূক্ষভাষিণী হইলে কেন? আমার আর্য্যপুত্র, সকলেরই প্রিয় ব্যবহারের যোগ্য; বিশেষতঃ আমার সখীর।

राम:। स्थाने खलु वाक्यनिवृत्तिर्मोहश्च। सखि! समाश्वसिहि समाश्वसिहि (व)।

वासन्ती। (समाश्वस्य) तत्किमिदमकार्य्यमनुष्ठितं देवेन? (श)

अत्र "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इत्यादिवत् समासाभावेऽपि त्वं जीवितमित्यत्र, त्वं कौमुदीनयनयोरित्यत्र, अमृतं त्वमङ्गे इत्यत्र च निरङ्गं केवलरूपकत्रयम्, तथा "मुखं द्वितीयश्चन्द्र" इत्यादिवत् त्वमसि मे हृदयं द्वितीयमित्यत्र एकस्य द्वितीयहृदयासम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्ति:, तथा तामेव इत्यत: परवर्त्तिनो वक्तुमिष्टस्य निर्वासितवानिति वाक्यांशस्य रामनिष्ठुरत्वप्रतिपत्तये निषेधाभासादाक्षेपालङ्कार: अर्थापत्तिश्चेत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्कर:। किन्तु चारुतरतरुण्या: कान्तत्वादि: कश्चिद्दोष इव प्रचुरालङ्कारभावादिभिरलङ्कृताया अस्या: कवितायाः पुन: पुनस्त्वंपदोपादानात् अनवीकृतत्वदोष: सहृदयानामुद्वेगं जनयति; स च "त्वं जीवितं भवसि वा हृदयं द्वितीयं ज्योत्स्ना च मे नयनयोरमृतं तथाऽङ्गे।" इति पाठेन समाधेय:। एतत्पाठे वाशब्द: समुच्चये।

वसन्ततिलका वृत्तम् ॥२६॥

(व) राम इति। वाक्यनिवृत्ति: वासन्त्या वाक्यरोध:, मोहो मूर्च्छा च स्थाने खलु युज्यत एवेत्यर्थ: दारुणशोकोदयादिति भाव:।

"युक्ते द्वे साम्प्रतं स्थाने" इत्यमर:।

---

বাসন্তী। তুমি আমার জীবন, তুমি আমার দ্বিতীয় হৃদয়, তুমি আমার নয়নযুগলের জ্যোৎস্না এবং তুমি আমার অঙ্গে অমৃত; ইত্যাদি শত শত প্রিয়োক্তিদ্বারা সরলাকে (সরলবুদ্ধি সীতাকে) সন্তুষ্ট করিয়া, তাহাকেই— অথবা থাক; আপনার নিকটে ইহার পর বলিয়া আর ফল কি? ॥২৬॥

(এই বলিয়া মূর্চ্ছিত হইল।)

(ব) রাম। ইহার বাক্যরোধ ও মূর্চ্ছা, সঙ্গত বটে। সখি! বাসন্তি! আশ্বস্ত হও, আশ্বস্ত হও।

सीता। सहि! वासन्दि! विरम विरम (ष)।

रामः। लोको न मृष्यतीति (स)।

वासन्ती। तत् कस्य हेतोः (ह)।

रामः। स एव जानाति, किमपि (च)।

तमसा। उचितस्तदुपालम्भः (क)।

---

(ष) सखि! वासन्ति! विरम विरम।

---

(श) वासन्तीति। तत्किमित्येकमव्ययं प्रश्नबोधकम्। अकार्य्यम् अप्रशस्तकार्य्यं सीतानिर्वासनरूपं निन्दितकार्य्यमित्यर्थः। अनुष्ठितं कृतम्।

(ष) सीतेति। विरम कठोरवाक्यकथनादिति शेषः। अवधारणे द्विर्वचनम्।

(स) राम इति। लोको राज्यवासी जनः न मृष्यति सीताया गृहावस्थानं न सहते प्रजाभिर्न सीताया गृहावस्थानमभिप्रेतम् इति हेतोस्तस्या निर्वासनरूपमकार्य्य-मनुष्ठितमित्यर्थः। एतेन प्रजावर्गं प्रति रामस्य महान् विरागो व्यज्यते।

(ह) वासन्तीति। तत् अमर्षणम्, कस्य हेतोः, केन हेतुना सीताया गृहावस्थानं प्रजावर्गस्यानभिप्रेतमित्यर्थः। षष्ठी हेतुप्रयोगे।

(च) राम इति। स एव लोक एव प्रजावर्ग एवेत्यर्थः। किमपि सीताया गृहावस्थानं प्रत्यसहिष्णुतायाः अनिर्वचनीयकारणमित्यर्थः। येन कारणेन सीताया गृहावस्थानं प्रजानामनभिप्रेतं तत् कारणं मया अन्यैर्वा बुद्धिमद्भिर्जनैर्न ज्ञायते अतएव तत् तुच्छं कारणमिति भावः।

---

(শ) বাসন্তী। (আশ্বস্ত হইয়া) তা, মহারাজ এই অকার্য্যের অনুষ্ঠান করিলেন কেন?

(ষ) সীতা। সখি! বাসন্তি! বিরত হও, বিরত হও।

(স) রাম। লোকে সহ্য করে না, এই জন্য।

(হ) বাসন্তী। তা, কি জন্য (সহ্য করে না?)

(চ) রাম। সেই লোকই কিছু জানে।

वासन्ती। अयि कठोर! यशः किल ते प्रियं
किमयशो ननु घोरमतः परम्।
किमभवद्विपिने हरिणीदृशः
कथय नाथ! कथं बत मन्यसे ॥२७॥

(क) तमसेति। तस्य लोकस्य उपालम्भः दुर्वाक्यं दुर्ज्जना यूयं अतएव परमपतिव्रताया दोषमाविष्कुरुथे'ति कटुवाक्यमित्यर्थः उचितः न्याय्य आसीदिति शेषः। न तु दुर्ज्जनानामकारणाकिञ्चित्करनिन्दावादेन सीताया निर्वासनमुचितमभूदिति भावः।

"उपालम्भः। दुर्वाक्य"मिति शब्दकल्पद्रुमः।

अयीति। अयि कठोर! निर्द्दयहृदय! ते तव यशः किल यश एव लोककृतगुणानुवाद एवेत्यर्थः, प्रियं प्रीतिकरम्, न तु पोष्यवर्गपरिपालनादिकं कथमन्यथा प्रधानपोष्यां प्रियभार्य्यां निर्वासितवानिति भावः। नन्वित्यनुनये। अतः प्रियतमभार्य्याया अकारणनिर्वासनोत्पन्नादयशसः परं प्रधानं घोरं भयङ्करम् अयशः निन्दा किम् अस्ति अपि तु किमपि नेत्यर्थः। नन्वयशसः कारणं किमित्याह हे नाथ! हे वसुधाधिप! हरिण्या दृशौ चक्षुषी इव दृशौ यस्याः तस्याश्चञ्चललोचनायाः सीताया विपिने वने किमभवत् का दशा अभवत्, तत्र विषये कथं मन्यसे किं चिन्तयसि त्वं चिन्तया किमवधारितवानित्यर्थः तत् कथय ब्रूहि। बत खेदे। असहायायाः सीताया निर्वासनेन मरणमेव निश्चित्य जगति सर्व्व एव त्वां निन्दिष्यन्तीति भावः।

अत्र यशोऽयशसोर्विरूपयोः सङ्घटनया विषमालङ्कारः, तथा हरिणीदृश इति लुप्तोपमा चेत्यनयोर्निरपेक्ष्येण स्थितेः संसृष्टिः।

अयश इति असुरशब्दादिवत् विरोधार्थे नञ्। तथा चोक्तम्—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥"

द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥२७॥

(क) তমসা। তাহাদের তিরস্কার করা উচিত ছিল।

বাসন্তী। হে নিষ্ঠুর! যশই আপনার প্রিয়; কিন্তু ইহার পর ভয়ঙ্কর

सीता। तुमं ज्जेव सहि! वासन्दि! दारुणा कठोरा अ जा एव्वं विलपन्ती पदीवेसि (ख)।

तमसा। प्रणय एवेदं व्याहरति शोकश्च (ग)।

राम:। सखि! किमत्र मन्तव्यम् (घ)।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।

---

(ख) त्वमेव सखि! वासन्ति! दारुणा कठोरा च, या एवं विलपन्ती प्रदीपयसि।

---

(ख) सीतेति। प्रदीपयसि आर्य्यपुत्रस्य मम च शोकाग्निमिति शेषः। दारुणा शोकोद्दीपनेन दुःखजनकत्वात्, कठोरा शोकातुरत्वदर्शनेनापि निर्द्दयत्वादिति भावः।

(ग) तमसेति। प्रणयः त्वां प्रति वासन्त्याः स्नेहः, शोकः मरणनिश्चयजनिता तद्विषयिका अतीतस्मृतिः इदं रामं प्रति निन्दावाक्यं व्याहरति ब्रवीति, न तु स्वारसिकीच्छया वासन्ती ब्रवीतीत्येवशब्दार्थः। एकान्तप्रणयिनी जनस्य महाविपत्तिदर्शनेन शोकवह्निना जनः अवाच्यमपि वदति, अतएवात्र वासन्त्या दोषो नास्तीति भावः।

अत्र प्रणयाशङ्कयोर्व्याहारासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः।

(घ) राम इति। अत्र सीताया अवस्थाविषये किं मन्तव्यं किं चिन्तनीयमस्ति अपि तु किमपि नेत्यर्थः। सर्व्वमेव मया निर्द्धारितमिति भावः।

किं निर्द्धारितमित्याह त्रस्तेति। त्रस्तो भीतः एकहायनः एकवत्सरवयस्कः यः

অযশ আর কি হইতে পারে? হে মহারাজ! হরিণলোচনা সীতার, বনে কি দশা হইল, তাহাতে আপনি কি মনে করেন; তাহা বলুন ॥২৭॥

(খ) সীতা। সখি! বাসন্তি! তুমিই দারুণ নিষ্ঠুর; যে তুমি এইরূপ বিলাপ করিতে থাকিয়া (আমাদের শোকানল আরও) উদ্দীপিত করিতেছ।

(গ) তমসা। স্নেহই ইহা বলিতেছে এবং শোকও।

(ঘ) রাম। সখি! এ বিষয়ে মনে করিবার কি আছে?

ज्योत्स्नामयी च मृदुबालमृणालकल्पा (१)
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥२८॥

सीता। अज्जउत्त! धरामि एषा धरामि (ङ)।

(ङ) आर्य्यपुत्र! ध्रिये एषा ध्रिये।

कुरङ्गी हरिणशस्येव विलोले विशेषचञ्चले दृष्टी चक्षुषी यस्याः सा तथोक्ता तस्याः। हरिणस्य स्वभावचञ्चलमपि चक्षुः बाल्यकाले कुतश्चित् भयोत्पत्तौ अतिचञ्चलं भवति तत्तुल्यमतिचञ्चलं सीतायाश्चक्षुरिति द्योतनार्थं वत्सपदं हायनपदञ्च प्रयुक्तम्। परिस्फुरितस्य पूर्णतया सर्वदैव स्पन्दितस्य गर्भस्य भरेण भारेण अलसायाः मन्थरायाः प्रायेण चलितुमशक्तायाः इत्यर्थः तस्याः सीतायाः ज्योत्स्नामयी कौमुदीव श्वेतसुखस्पर्शा, मृदु कोमलं यत् बालमृणालं नवोत्पन्नमृणालं तत्कल्पा तत्तुल्यकोमलेत्यर्थः अङ्गं लतिकेव कृशा सा अङ्गलतिका क्रव्याद्भिः मांसभोजिभिः व्याघ्रादिहिंस्रजन्तुभिः नियतं निश्चितं विलुप्ता भक्षणेन नष्टा। इति मया निर्द्धारितमिति भावः।

अत्र चतसृणां लुप्तोपमानामङ्गाङ्गिभावेन सङ्करालङ्कारः, तथा मृदुबालमृणालेत्यत्र 'ल' इत्यस्य सकृत्साम्यात् वृत्त्यनुप्रासश्च। तथा मृदुबालमृणालकल्पा इत्यतः परं पठितुमुचितस्य चकारस्य प्राक्पाठात् अक्रमतादोषः, स च मृदुलबालमृणालवच्च इति पाठेन समाधेयः।

"क्रव्यात्। मांसाशिनि त्रि" इति शब्दकल्पद्रुमः।

वसन्ततिलका वृत्तम् ॥२८॥

(ङ) सीतेति। एषा अहं सीता, ध्रिये अवतिष्ठे ; इयमहमवस्थिता, न मृतेति

---

ত্রস্ত এবং একবর্ষবয়স্ক হরিণের ন্যায় চঞ্চলনয়না এবং পরিস্পন্দিত গর্ভের ভারে অলসা সেই সীতাদেবীর জ্যোৎস্নাসদৃশী এবং কোমল ও নূতন মৃণালের ন্যায় অঙ্গলতিকা, মাংসভোজী প্রাণিকর্তৃক নিশ্চয়ই বিনষ্ট হইয়াছে ॥২৮॥

(ঙ) সীতা। আর্য্যপুত্র! আছি, এই আমি আছি।

---

(१) मृदुमुग्ध इति पाठान्तरम्।

राम:। हा प्रिये! जानकि! क्वासि? (च)

सीता। हद्दी! हद्दी! अज्जउत्तोवि प्पमुत्तकण्ठं रोद्ददि (१) (छ)।

तमसा। वत्से! साम्प्रतिकमेवैतत्, कर्त्तव्यानि दुःखितै-र्दुःखनिर्वापणानि। यतः—(ज)

---

(छ) हा धिक्! हा धिक्! आर्य्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति।

---

भावः। रामं शोककातरमवलोकमानाया विषण्णोच्छ्वसितव्याकुलभावापन्नायाः सीताया उक्तिरियम्।

(च) राम इति। क्वासि कुत्र गतासीत्यर्थः। उच्चैःस्वरं रोदनमिदम्।

(छ) सीतेति। प्रमुक्तः अनिरुद्धः यथाप्रसारं निर्गत इत्यर्थः कण्ठो ध्वनिर्यस्मिन् कर्म्मणि तद्यथा तथा प्रमुक्तकण्ठम् उच्चैःस्वरमित्यर्थः। तरलस्वभावे जने का कथा, नितान्तगाम्भीर्य्यधैर्य्यसम्पन्नोऽपि आर्य्यपुत्रो यत् प्रमुक्तकण्ठं रोदिति, तदस्य भीषणः शोकवेगो जात इत्यत्र न संशय इति भावः।

"कण्ठः। ध्वनि"रिति शब्दकल्पद्रुमः।

(ज) तमसेति। एतत् प्रमुक्तकण्ठं रोदनं साम्प्रतिकमेव युक्तमेव रामस्येति शेषः। कथमित्याह, दुःखितैः जनैर्दुःखानि निर्वाप्यन्ते विनाश्यन्ते एभिरिति दुःख-निर्वापणानि दुःखविनाशोपाया इत्यर्थः, कर्त्तव्यानि अवश्यं विधेयानि। रोदनञ्च शोक-दुःखलाघवोपाय इति भावः। रोदनस्य शोकदुःखलाघवकारणत्वं दृष्टान्तेन दृढ़ीकृत्य समर्थयति यत इति। यतो यस्माद्धेतोः। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

---

(চ) রাম। হা প্রিয়ে! সীতে! তুমি কোথায় আছ?

(ছ) সীতা। হায়! হায়! আর্য্যপুত্রও মুক্তকণ্ঠে রোদন করিতে লাগিলেন!।

---

(१) रुणो इति पाठभेदः।

पूरोत्पीड़े तड़ागस्य परीवाहः प्रतिक्रिया।
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते ॥२৮॥
विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः (भ)।

---

पूरोत्पीड़ इति। तड़ागस्य जलाशयविशेषस्य पूरेण दृष्टिवर्द्धितजलसमूहेन उत्पीड़े सति अत्यन्तपीड़ायां तीरभङ्गादिना महानिष्टसम्भावनायां सत्यामित्यर्थः परीवाहः प्रणाली-खननादिना जलनिःसारणं प्रतिक्रिया प्रतीकारः तीरभङ्गाद्यनिष्टनिवारणोपाय इत्यर्थः शोकक्षोभे सति शोकेन उद्वेलितावस्थायां प्रलापैरेव नानाविधानर्थकोक्तिपूर्वकरोदनैरेवेत्यर्थः न त्वन्यैरुपायैरित्येवशब्दार्थः हृदयं मनः धार्य्यते रक्ष्यते स्थिरीक्रियत इत्यर्थः। यथा जलाशयस्य जलवृद्धौ सत्यां तन्निःसारणेन तस्य रक्षा, तथा शोकक्षोभे सति रोदनेन वाष्प-निःसरणात् मनसः स्थिरता इत्यर्थः। तस्मात् सीताशोकार्त्तस्य रामस्य प्रमुक्तकण्ठं रोदनं युक्तमेवेति भावः।

अतएव प्रतिबिम्बनादत्र दृष्टान्तालङ्कारः। कूपादीनां जलवृद्धावपि क्षुद्रत्वेन तादृश-गुरुतरानिष्टसम्भावनाभावात् बहुज्जलाशयस्यैव तड़ागादेः तीरभङ्गेन गुरुतरानिष्टसम्भावना स्यात् तन्निवारणार्थमेव परीवाह इति दर्शयितुं तड़ागपदमुपात्तं तेन न अविशेषे विशेषाख्यदोष इति दिक्।

तड़ागमाह मत्स्यवर्द्धमानधृतं वशिष्ठवचनम्—

"चतुर्दिक्षु पञ्चचत्वारिंशद्धस्तान्यूनतायां सहस्रद्वितयहस्तान्यूनत्वेन तड़ागः" ॥२৮॥

(भ) विशेषत इति। बहुतरप्रकारं विविधं कष्टं यत्र सः, जीवलोकः संसारः। अतोऽपि रामस्य प्रमुक्तकण्ठं रोदनमुचितमिति भावः।

---

(ভ) তমসা। বৎসে! ইহা সঙ্গতই বটে; কারণ, দুঃখিতেরা দুঃখ দূর করিবে ত। যেহেতু—

জলরাশি বৃদ্ধি পাইয়া, জলাশয়ের অনিষ্ট আরম্ভ করিলে, তাহার জল-নিঃসারণই প্রতীকার এবং শোকের উদ্বেলন আরম্ভ হইলে, বিলাপদ্বারাই হৃদয়কে ধারণ করা হয় ॥২৯॥

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्म्मः क्लमयति (१)।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छासो ननु लाभो हि रुदितम् ॥३०॥

रामसम्बन्धे जीवलोकस्य बहुतरप्रकारकष्टत्वं प्रतिपादयति इदमिति। अभियुक्तेन मनसा सततसावधानेन चेतसा अन्यथा नानाविशृङ्खला स्यादिति भावः। इदं विश्वं जगत् विधिवत् यथाविधानं शास्त्रविधानानुसारेणेति यावत् पाल्यं रक्षणीयम्। इदं राज्यरक्षणमेकं कष्टमिति भावः। तथा घर्म्म आतपः कुसुममिव प्रियाशोकः सीताविरहशोकः जीवं जीवनं क्लमयति अवसादयति। इदं ततोऽपि महत् कष्टमिति भावः। ननु विलापेन तच्छोकलाघवं क्रियतामित्याह स्वयमिति। स्वयमात्मनैव त्यागं सीताया निर्वासनं कृत्वा रामेण विलपनेन विलापेन विनोदः शोकापनोदनं सीताशोकलाघवकरणमिति यावत् असुलभः आयासलभ्यः कष्टसाध्य इत्यर्थः। त्यागस्य स्वकृतिसाध्यत्वेन यदि त्यागं नाकरिष्यत् तर्हि शोक एव नाभविष्यत्, अथ त्यागः कृतः, इदानीं तदर्थे विलापः निजापरिणामदर्शित्वप्रकाशेन लोकसमाजे परिहासायैव स्यादिति। इदन्तु ततोऽपि महत्कष्टमिति भावः। निर्ज्जनस्थाने तु विलापः सम्भवत्येव इति ज्ञापनाय 'न भवे'दित्यनुक्त्वा असुलभ इत्युक्तम्। तत्तस्मादत्र शोकप्रकाशावसराभावादित्यर्थः। अत्र अस्मिन् समये अस्माकं समीपे इत्यर्थः उच्छ्वासः शोकप्रकाशः शोकप्रकाशरूपमित्यर्थः रुदितं रोदनं लाभो हि लाभ एव भवति रामस्येति शेषः। अपिशब्दः सम्भावनायाम् इत्यहं सम्भावयामीत्यर्थः। नन्विति सीतासम्बोधने। उपहासभयेन लोकसमाजे विलापासम्भवादत्र कृतो विलापो रामेण लाभ इव विवेच्यत इति सम्भावयामीति भावः।

अत्र कष्टकार्य्यं प्रति बहुकारणानामुक्तत्वात् समुच्चयालङ्कारः, तथा द्वितीयचरणे उपमा,

(অ) বিশেষতঃ, জীবলোকে রামভদ্রের নানাবিধ কষ্ট উপস্থিত হইয়াছে।

(१) क्लापयतीति पाठान्तरम्।

রামঃ। কষ্টং ভোঃ! কষ্টম্ (অ)।

দলতি হৃদয়ং গাঢ়োদ্বেগো দ্বিধা ন তু ভিদ্যতে
বহতি বিকলঃ কায়ো মোহং ন মুঞ্চতি চেতনাম্।
জ্বলয়তি তনূমন্তর্দাহঃ করোতি ন ভস্মসাৎ
প্রহরতি বিধির্মর্ম্মচ্ছেদী ন কৃন্ততি জীবিতম্ ॥৩১॥

---

তথা চতুর্থচরণে রোদনে আরোপ্যমাণস্য লাভত্বস্য প্রকৃতশোকাপনোদনোপযোগিতয়া পরিণাম-শ্লেষেণৈতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। অসুলভ ইত্যত্র প্রধানস্য নঞর্থস্য সমাসে গুণীভাবাৎ বিধেয়াবিমর্শদোষঃ, স তু বিলপনবিনোদোঽপি নহি বা ইতি পাঠেন সমাধেয়ঃ।

"ঘর্ম্মঃ। আতপ" ইতি শব্দকল্পদ্রুমঃ।

শিখরিণী বৃত্তম্ ॥৩০॥

(অ) রাম ইতি। কষ্টং দুঃখম্ অতিশয়ে দ্বিরুক্তিঃ। মহৎকষ্টমিদানীমনুভবামীত্যর্থঃ। ভো ইতি বাসন্তীসম্বোধনে।

তদেব মহৎকষ্টং প্রতিপাদয়তি দলতীতি। গাঢ়ো দৃঢ়শ্চিরস্থায়ীতি যাবৎ উদ্বেগঃ সীতাশোকাবেগঃ হৃদয়ং দলতি আমর্দ্দয়তি, তু কিন্তু দ্বিধা ন ভিদ্যতে বিদার্য্যতে দ্বিখণ্ডীক্রিয়তে ইতি যাবৎ ন বিনাশ্যত ইত্যর্থঃ তেনোদ্বেগেনেতি শেষঃ। যদি হৃদয়ং বিদীর্ণমভবিষ্যৎ তদা নেদৃশং দুঃখমভবিষ্যদিতি ভাবঃ। বিকলঃ শোকবিহ্বলঃ কায়ো দেহঃ মোহং মূর্চ্ছাং বহতি ভজতে ক্বাচিৎকমচৈতন্যং ভজত ইত্যর্থঃ, কিন্তু চেতনা চৈতন্যং ন মুঞ্চতি চিরায় ন পরিত্যজতীত্যর্থঃ। তথাত্বেঽপি ঈদৃশদুঃখানুভবো ন স্যাদিতি ভাবঃ। তথা অন্তর্দাহঃ

---

একাগ্রচিত্তে এবং যথাবিধানে এই জগতের পালন করিতে হইবে; তাহাতে, গ্রীষ্ম যেমন পুষ্পকে ম্লান করে, সেইরূপ প্রিয়তমার শোকে, জীবনকে ম্লান (অবসন্ন) করিতেছে। তাহাতে আবার, নিজে ত্যাগ করিয়া, বিলাপের দ্বারা যে একটু শোকাপনোদন করিবেন, তাহাও সুলভ নহে; সুতরাং এখন শোকপ্রকাশকর যে রোদন তাহাই (উঁহার পক্ষে) লাভ ॥৩০॥

(অ) রাম। দারুণ কষ্ট হে! দারুণ কষ্ট।

सीता। एवम् इदं (ट)।

(ट) एवमिदम्।

अन्तःकरणशोकसन्तापः तनूं शरीरं ज्वलयति सन्तापयति किन्तु भस्मसात् भस्मनि सम्पाद्यमानां भस्मीभूतामित्यर्थः न करोति। तथा सत्यपि शोकाग्निरुपशमी भवेदिति भावः। तथा मर्म्मच्छेदी हृदयविदारी विधिः दैवं प्रहरति ताडयति, किन्तु जीवितं जीवनं न कृन्तति न छिनत्ति न विनाशयतीत्यर्थः। एवमपि दुःखनिवारणं स्यादिति भावः। सर्वविधसुखलेशहीनस्य नानाविधदारुणदुःखशोकनिपीडितस्य ममेदानीं मरणमेव सर्वथा श्रेय इति सर्वत्र भावः।

अत्र हृदयामर्द्दनरूपकारणे सत्यपि द्विधाभेदरूपफलाभावात्, मूर्च्छाप्राप्तिरूपहेतौ विद्यमानेऽपि चैतन्यत्यागरूपकार्य्याभावात्, देहज्वलनकारणे वर्त्तमानेऽपि भस्मरूपतत्फलाभावात्, प्रहाररूपकारणे सत्यपि जीवनविनाशरूपफलाभावाच्च चत्वारो विशेषोक्त्यलङ्काराः, तेषाञ्च परस्परनैरपेक्ष्यस्थितेः संसृष्टिः। बहुतरकर्त्तृवाच्यप्रत्ययान्तक्रियामध्ये एकस्याभिद्यत इति कर्म्मवाच्यप्रत्ययान्तक्रियाया निर्द्देशात् प्रक्रमभङ्गदोषः, स च करोति न तु द्विधा इति पाठेन समाधेयः। तुशब्दानुषङ्गात् न न्यूनपदत्वदोष इति भाव्यम्।

"उद्वेगो विरहजन्यदुःख"मिति रसमञ्जरी। "विकलः। विह्वलः" इति शब्दकल्पद्रुमः। "स्त्रियां मूर्त्तिस्तनुस्तनूः।" "विधिर्विधाने दैवे च" इति चामरः।

हरिणी वृत्तम्॥३१॥

(ट) सीतेति। इदं दलतीत्यादिना त्वयोक्तम् एवं सत्यमित्यर्थः। अहमपि त्वयोक्तां सर्वामवस्थामनुभवन्ती सर्वमेव सत्यतया विश्वसिमीति भावः।

---

गाढ় শোকাবেগ, হৃদয়কে দলিত করিতেছে; কিন্তু দুইভাগে বিভক্ত করিতেছে না; বিকল দেহ, মোহ বহন করিতেছে; কিন্তু একেবারে চৈতন্য ত্যাগ করিতেছে না; অন্তরের দাহ দেহকে জ্বালাইতেছে; কিন্তু একেবারে ভস্ম করিয়া ফেলিতেছে না এবং মর্ম্মচ্ছেদী বিধাতা প্রহার করিতেছেন বটে; কিন্তু একেবারে জীবন নষ্ট করিতেছেন না॥৩১॥

(ট) সীতা। ইহা এইরূপই বটে।

रामः। हे भवन्तः! पौरजानपदाः! (ठ)

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न वाप्यनुशोचिता।
चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मां
इदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥३२॥

(ठ) राम इति। उल्लुण्ठनविरागसूचनाय प्रजावर्गं प्रति भवच्छब्दप्रयोगः।

न किलेति। देव्याः सीतायाः गृहे स्थानमवस्थितिः भवतां न अभिमतं भवद्भि-र्नाभिप्रेतम् आसीदिति शेषः। अन्यथा परमपतिव्रतायाश्चरित्रदोषं कथमपि भवन्तो नाविष्कृतवन्त इति भावः। किलेत्यनुनये। ततस्तस्मात् सीतायाः गृहेऽवस्थानस्य युष्माक-मनभिमतत्वात् सा सीता तृणमिव तुच्छशुष्कघासादिरिव शून्ये सहायरहिते वने त्यक्ता निर्वासिता, न वा अनुशोचितापि तदर्थम् अनुतापोऽपि न कृतः मयेति शेषः। सीतार्थ-मनुतापकरणेऽपि चेदहं भवतां विरागभाजनं भवामीति शङ्कयेति भावः। इदानीन्तु चिरपरिचिताः वनवासकाले सीतया सहानुभूतास्ते भावाः पदार्थाः तरुविहङ्गकुरङ्गादयः मां परिद्रवयन्ति सीतास्मृतिजनकतया व्याकुलीकुर्वन्ति, अतएव अशरणैः रक्षकशून्यैः सान्त्वनाकरपदार्थरहितैरस्माभिरिति शेषः इदं रुद्यते इदं रोदनं क्रियते, अद्यापि अस्मिन्नपि समये एवम् अनेन प्रकारेण मम रोदनबाधाया अकरणेनेत्यर्थः प्रसीदत प्रसन्ना भवत यूयमिति शेषः। सीतापरित्यागानन्तरं मम तदनुतापापनोदनाय तदानीं युष्माभिर्न कोऽपि सान्त्वप्रयोगः कृतः, तद्यथा तथा भवतु, किन्तु इदानीं तच्छोकलाघवार्थं किञ्चित् रुद्यते तत्र 'अत्र किं करोषि राजधानीमागत्य राज्यं परिपालये'त्यादिना विघ्नं न कुरुतेति भावः।

अत्रापि सीतात्यागरूपे कारणे सत्यपि अनुतापरूपतत्कार्य्याभावात् विशेषोक्तिरलङ्कारः तृणमिवेत्युपमया सङ्कीर्णः। अशरणैः रुद्यत इति वाक्यमध्ये 'अद्याप्येवं प्रसीदत' इति वाक्यान्तरप्रवेशेऽपि चमत्कारातिशयद्योतनात् "दिङ्मातङ्गघटे"त्यादिवत् न गर्भितत्व-

(ठ) राम। হে মহাত্মা পৌরজানপদগণ!।

तमसा। अतिगम्भीरमापूरणं (१) शोकसागरस्य (ड)।

वासन्ती। देव! अतिक्रान्ते धैर्य्यमवलम्ब्यताम् (ढ)।

दोषः "गर्भितत्वं गुणः क्वापी"ति साहित्यदर्पणोक्तेः। न वा "सुधेव धवलश्चन्द्र" इति साहित्यदर्पणोदाहृतवत् "हंसीव धवलश्चन्द्रः सरांसीवामलं नभ" इति काव्यादर्शोक्तवच्च तृणमिव त्यक्तेत्यत्र उपमागतप्रक्रमभङ्गदोषः, उपमानोपमेययोर्विशेषणस्यैव लिङ्गवचनवैषम्ये तद्दोषाङ्गीकारात्, किन्तु केवलोपमानोपमेययोर्लिङ्गवचनवैषम्ये दोषाभाव एव। तदुक्तं काव्यप्रकाशे—

"लिङ्गसंख्याविभेदेऽपि उपमानोपमेयता।
विभक्तिः पुनरेकैव उपमानोपमेययोः॥"

उपमेयप्राधान्यात् त्यक्तेत्यत्र स्त्रीत्वम्। इदमिति रुद्यत इति क्रियाया विशेषणम्। "भावः। पदार्थः।" इति शब्दकल्पद्रुमः। हरिणी वृत्तम् ॥३२॥

(ड) तमसेति। शोक एव सागरस्तस्य, अतिगम्भीरम् अत्यन्तगभीरम् आपूरणं पूर्णता रामस्येति शेषः। उक्तवचनसमूहेन तथैवाभिव्यक्तेरिति भावः। अत्र निरङ्गं केवलरूपकमलङ्कारः।

(ढ) वासन्तीति। अतिक्रान्ते अतीते सीतानिर्वासनादिविषये धैर्य्यमवलम्ब्यताम् अनुतापमकृत्वेति शेषः। अतीतविषयस्यानुतापेन पुनरावर्त्तनाभावात् केवलं तत्करणेन कष्टमेवेति भावः।

গৃহে সীতাদেবীর অবস্থান করা, আপনাদের অভিমত ছিল না; তাই, শূন্য বনে তৃণের ন্যায় তাঁহাকে ত্যাগ করিয়াছি; কিন্তু তাহার পরে শোকও করি নাই; কিন্তু বর্ত্তমান সময়ে, চিরপরিচিত সেই সেই পদার্থ, আমাকে ব্যাকুল করিয়া তুলিয়াছে; তাই, রক্ষকহীন অবস্থায় এই একটু রোদন করিতেছি; এখনও এইভাবে আপনারা একটু প্রসন্ন হউন ॥৩২॥

(ড) তমসা। শোকসাগরের অতিগভীর পূর্ণতা।

(ঢ) বাসন্তী। মহারাজ! অতীত বিষয়ে ধৈর্য্যাবলম্বন করুন।

---

(१) अवपूरणमिति क्वचित् पाठः।

रामः। सखि! किमुच्यते धैर्य्यमिति (ण)।
देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।
प्रनष्टमिव नामापि (१) न च रामो न जीवति ॥३३॥

(ण) राम इति। धैर्य्यमिति धैर्य्यमवलम्ब्यतामिति वचनम्, किं कथमुच्यते त्वयेति शेषः। मया हि धैर्य्यावलम्बनस्य पराकाष्ठा प्रदर्शितेति भावः।

तदेवोपपादयति देव्या इति। देव्या सीतया शून्यस्य रहितस्य जगतो भुवनस्य अयं द्वादशः द्वादशानां पूरणः परिवत्सरः वत्सरो वर्त्तत इति शेषः। यथा सीता निर्वासिता सती मृता, तदवधि अद्य पर्य्यन्तं द्वादश वत्सरा गता इत्यर्थः; अतएव नामापि रूपचरित्रादिस्मरणस्य का कथा सीतेति नामापि प्रनष्टमिव विलुप्तमिव; सुदीर्घकालातिक्रमवशात् विस्मृत्या केनापि तस्या इदानीं नामापि नोच्चार्य्यत इति भावः। च अथ च रामो न जीवति, इति न, अपि तु जीवत्येव; अतएव दारुणसीताशोकेन मरणावश्यम्भावेऽपि यन्मम जीवनधारणं तदेव धैर्य्यस्य पराकाष्ठेति भावः।

अत्र जीवनधारणरूपकार्य्यद्वारेण प्रस्तुतं प्रतीयमानं धैर्य्यरूपकारणमभिहितमिति पर्य्यायोक्तमलङ्कारः क्रियोत्प्रेक्षया सङ्कीर्य्यते। तथा च साहित्यदर्पणः—"पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते।"

अत्र परिवत्सरपदेन—

"शकाब्दात् पञ्चभिः शेषात् समाद्यादीषु वत्सराः।
संपरीदानुपूर्वाश्च तथोदापूर्वका मताः॥"

इति मलमासतत्त्वधृतविष्णुधर्म्मोत्तरवचनोक्तवत्सरविशेषो न ग्राह्यः, तथात्वे वत्सराधिक्यात् रामायणेन सह विरोधः स्यात्, अतएव वत्सरमात्रपर्य्यायो ग्राह्यः, तथा च जटाधरः—"परिवत्सरो वत्सरः" ॥३३॥

(ণ) রাম। সখি! ধৈর্য্য অবলম্বন করুন একথা কেন বলিতেছ? সীতা শূন্য অবস্থায় জগতের এই দ্বাদশ বৎসর চলিতেছে; তাহাতে

(१) लुप्तं सीतेति नामापि इति पाठान्तरम्।

सीता। मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं (त)।

तमसा। एवं वत्से! (थ)

नैताः प्रियतमा वाचः, स्नेहार्द्राः शोकदारुणाः।
एतास्ता मधुनो धाराश्च्योतन्ति सविषास्त्वयि ॥३४॥

(त) मोहितास्मि आर्य्यपुत्रस्य एतैर्वचनैः।

(त) सीतेति। आत्मानं प्रत्यनुरागबाहुल्यप्रकाशादानन्देन, आर्य्यपुत्रस्य दारुण-शोकश्रवणात् दुःखेन च मोहितास्मीति भावः।

(थ) तमसेति। एवं त्वया यदुक्तं तत्सत्यमिति स्वीकरोमीत्यर्थः।

सीताया मोहितास्मीति वाक्यं समर्थयितुमाह नैता इति। एता रामोक्ता वाचो वाक्यानि प्रियतमा न तवातीवप्रीतिप्रदा न भवन्तीत्यर्थः। कुत इत्याह स्नेहार्द्रा इत्यादि। यतः स्नेहेन आर्द्राः प्रेमप्रकाशकत्वात् सरसाः, शोकदारुणाः शोकप्रकाशकत्वात् अतीव-दुःखदाः इत्यर्थः ताः पूर्वोक्ता रामस्य एता वाचः सविषाः गरलसंयुक्ताः, मधुनः पुष्परसस्य धाराः स्रवाः त्वयि श्च्योतन्ति पतन्ति; अतएव तवानन्देन दुःखेन च उभयथापि मोहो युज्यत एवेति भावः।

अत्र वाक्यार्थहेतुकं काव्यलिङ्गम्, तथा स्नेहार्द्रा अपि शोकदारुणा इति विरोधाभासः, तथा वस्तुतस्तदानीं सीतायां सविषमधुधाराणां पतनाभावात् तत्पतनसम्बन्धोऽसम्भवन् 'यथा सविषा मधुधाराः पतित्वा जनं मोहयन्ति तथा एताः स्नेहार्द्रा शोकदारुणा वाचः सीतां मोहयन्ती'ति विम्बप्रतिविम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारश्च। एषामङ्गाङ्गिभावेन सङ्करः।

---

তাঁহার নামপর্য্যন্তও যেন লুপ্ত হইয়া গিয়াছে; ইহাতেও রাম যে জীবিত নাই, এমন নহে ॥৩৩।

(ত) সীতা। আর্য্যপুত্রের এই সকল বাক্যে আমি একেবারে মোহিত হইতেছি।

(থ) তমসা। এইরূপই বটে। বৎসে!।

रामः। अयि वासन्ति! मया खलु (द)।

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः।
तथैव तीव्रो हृदि शोकशङ्कु-
र्म्मर्म्माणि कृन्तन्नपि किं न सोढ़ः? ॥३५॥

एता रामोक्ता वाचः प्रेमप्रकाशकतया सीतायाः साधारणप्रियास्तु भवन्त्येव, किन्तु शोकदारुणतया बहून् शोकप्रकाशरहितप्रियवाक्यं मध्ये न प्रकृष्टा इति बोधयितुं नैताः प्रिया इत्यनुक्त्वा नैताः प्रियतमा इत्युक्तमिति सुधीभिर्भाव्यम् ॥३४॥

(द) राम इति। खल्विति वाक्यालङ्कारे। मयेति शोकस्य सोढ़ इति क्रियायाः कर्त्तृपदम्।

यथेति। यथा अन्तर्मध्ये हृदय इत्यर्थः तिरश्चीनं तिर्य्यग्भूतं प्रत्युप्तं विद्धम् अलातशल्यं ज्वलितमङ्गाररूपं शल्यं यथा च विषेण सह सविषो दंशः सर्पक्षतम्। सविषपदं विषधरसर्पक्षतपरिग्रहार्थम्। तथैव हृदि, वक्षसि तीव्रो गाढ़ः शोक एव शङ्कुः शल्यं स शोकशङ्कुः मर्म्माणि मध्यदेशान् कृन्तन्नपि स्पर्शमात्रे का कथा छिन्दन्नपि किं न सोढ़ः सह्यः कृतः? अपि तु सोढ एवेत्यर्थः। इतोऽधिकं किमस्ति धैर्य्यमिति भावः।

अत्र श्रौती उपमा, तथा कृन्तन्निति छेदनस्य रूपकसाधकत्वात् उपमायाश्च बाधकत्वात् निरङ्गं केवलरूपकम् अर्थापत्तिश्च, एषामङ्गाङ्गिभावेन सङ्करः।

"अङ्गारोऽलातमुल्मुकम्।" "वा पुंसि शल्यं शङ्कुर्ना" इति चामरः। "अन्तः (व्य)। मध्यमम्।" "दंशः (पुं)। सर्पक्षत"मिति च शब्दकल्पद्रुमः।

तिरश्चीनमिति "विभाषाऽञ्चेरदिक्स्त्रियां"मिति तिर्य्यक्शब्दादञ्चत्यन्तात् प्रतिपादिकात् स्वार्थे खप्रत्ययः। 'तेरचा' इति तिरश्चीनशब्दस्य वङ्गभाषा।

अत्रेन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम ॥३५॥

---

এই সকল বাক্য, তোমার অতিশয় প্রীতিকর হইতেছে না; কারণ, এ গুলি, স্নেহে আর্দ্র হইলেও শোকে নিদারুণ; সুতরাং এ গুলি, বিষমিশ্রিত সেই মধুর ধারা, তোমার প্রতি ক্ষরিত হইতেছে ॥৩৪॥

सीता। एव ह्मि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स (ध)।

रामः। एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मे संस्तुत-बहुतरप्रियदर्शनादुद्दामोऽयमावेगः (१)। तथाहि—(न)

(ध) एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्य्यपुत्रस्य।

(ध) सीतेति। मन्दभागिनी दुर्भगा अहं पुनरपि पुनः पुनरपीत्यर्थं एवम् एवम्भूता आर्य्यपुत्रस्य आयासकारिणी क्लेशदायिनी। मद्विषयकशोकादहमेव तस्य हेतुरिति धिङ्मामिति भावः।

(न) राम इति। एवमनेन प्रकारेण अतिनिष्कम्पं नितान्तनिश्चलं यथा स्यात् तथा स्तम्भितं शोकवेगनिरोधेन स्थिरीकृतम् अन्तःकरणं येन तस्यापि यत्नेन धैर्य्यमवलम्बितवतोऽपीत्यर्थः मे मम अयमावेगः शोकक्षोभः संस्तुतानां परिचितानां बहुतराणां प्रियाणां तरुविहङ्गकुरङ्गादीनां दर्शनेन् उद्दामः महान् जात इति शेषः। उद्दीपकदर्शनात् उद्वेगस्याधिक्यं स्वाभाविकमिति भावः।

"संस्तवः स्यात् परिचय" इत्यमरः। उद्दामः। महानि"ति शब्दकल्पद्रुमः।

---

(द) রাম। বাসন্তি! অন্তরে তির্য্যক্‌ভাবে (তেরচা রকমে) প্রবিষ্ট প্রজ্বলিত লৌহশলাকা এবং বিষযুক্ত দংশন, যেমন বেদনাদায়ক হয়; সেইরূপই তীব্র হৃদয়ের শোকশেল, মর্ম্মপর্য্যন্ত ছিন্ন করিতেছে; তথাপি আমি তাহা কি সহ্য করিতেছি না? ॥৩৫॥

(ধ) সীতা। মন্দভাগা আমি, বার বার আর্য্যপুত্রের এইরূপ ক্লেশদায়িনী হইতেছি।

(ন) রাম। এইরূপে অতিনিশ্চলভাবে অন্তঃকরণকে অবরুদ্ধ করিতেছি, তথাপি বহুতর প্রীতিকর পরিচিত পদার্থের দর্শন করায়, আমার শোকাবেগ, অতিপ্রবল হইয়া উঠিয়াছে। দেখ—

(१) अत्यायमावेग इत्यपि पाठः।

लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मया धीयते तं तमन्तः।
भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः॥३६॥

सीता। एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुक्ख-संक्खोहेण पप्फुरिदणिअदुक्खं विअ आकम्पिदं मे हिअअं (प)।

(प) एतेनार्य्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण प्रस्फुरितनिजदुःखमिवाकम्पितं मे हृदयम्।

लोलोल्लोलेति। लोलात् चञ्चलादपि उल्लोलम् अतिचञ्चलमित्यर्थः तद्यथा तथा क्षुभितस्य उद्वेलितस्य करुणस्य शोकस्य यत् उज्जृम्भणं प्रकाशः तस्य स्तम्भनार्थम् अवरोधाय मया कथमपि अतिकष्टेनेत्यर्थः यो यो यत्नः आधीयते क्रियते, कोऽपि अनिर्वचनीयः चेतोविकारः चित्तस्यास्थिरता अप्रतिहतरयः केनाप्यनिवारितवेगः तोयस्य जलस्य ओघः प्रवाहः सैकतं बालुकामयं सेतुम् आलिमिव तं तं यत्नं भित्त्वा भित्त्वा पुनः पुनः भङ्क्त्वा बलात् प्रसह्य वेगेनेत्यर्थः अन्तर्मनसि प्रसरति विस्तृतो भवति। अतएव मम व्याकुलभावो नापगत इति भावः।

अत्र श्रौती उपमालङ्कारः। तथा प्रथमचरणे ओजःप्रकाशकवर्णानामत्र स्थितस्य करुणरसस्य प्रतिकूलत्वात् प्रतिकूलवर्णत्वदोषः, स च 'उद्वेलन्तं प्रविततमहाशोकवेग' मिरोद्धुमिति पाठेन समाधेयः।

"सेतुरालौ स्त्रियां पुमा"नित्यमरः। मन्दाक्रान्ता वृत्तम्॥३६॥

---

অত্যন্ত চঞ্চলভাবে উদ্বেলিত শোকের প্রকাশকে নিরুদ্ধ করিবার জন্য, আমি কোন প্রকারে যে যে যত্ন করিতেছি, অপ্রতিহতবেগ জলের প্রবাহ, যেমন বালুকাময় সেতুকে ভগ্ন করিয়া প্রসৃত হইতে থাকে; সেইরূপ অনির্ব্বচনীয় চিত্তের বিকার, বলপূর্ব্বক সেই সেই যত্নকে ভেদ করিয়া করিয়া প্রসৃত হইতেছে॥৩৬॥

वासन्ती। (स्वगतम्) कष्टम्, अत्यापन्नो देवस्तदन्यतः क्षिपामि तावत्। (प्रकाशम्) चिरपरिचितानामेतेषां जनस्थान-भागानामवलोकनेनात्मानमानन्दयतु देवः (१) (फ)।

रामः। एवमस्तु। (इत्युत्थाय परिक्रामति) (ब)

(प) सीतेति। एतेन प्रत्यक्षीक्रियमाणेन। दुर्वारोऽनवरोध्यः अतएव दारुणः आरम्भः प्राथमिकसम्बन्धो यस्य तेन, दुःखसंक्षोभेण दुःखोद्वेलनेन प्रस्फुरितं प्रकाशितं निजं स्वकीयं दुःखं यस्मिन् तत् तथोक्तं मे मम हृदयम् आकम्पितमिम। एकविरह-स्थैवोभयोः शोककारणत्वादिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोतप्रेक्षालङ्कारः।

(फ) वासन्तीति। कष्टं हा दुःखमित्यर्थः। देवो रामः अभि सर्वतोभावेन आपन्नः दारुणशोकेन नितान्तदुःखपीड़नात् विपद्ग्रस्तः, ततस्मात्, अन्यतः अन्यस्यां दिशि, क्षिपामि परिचालयामि, रामस्य मनश्चक्षुषी चेति शेषः। तावद्वाक्यालङ्कारे। जनस्थान-भागानां जनस्थानस्यांशविशेषाणाम्। आत्मानं मनः।

"आपन्न आपत्प्राप्तः स्या"दित्यमरः। "आत्मा— मन" इति शब्दकल्पद्रुमः।

(ब) राम इति। एवमस्तु त्वया यदुक्तं तथैव करोमीत्यर्थः। परिक्रामति इतस्ततः पादक्षेपं करोति।

(প) সীতা। আর্য্যপুত্রের এই দুঃখের প্রকাশারম্ভ, অনিবার্য্য ও ভয়ঙ্কর; ইহাতে নিজের দুঃখ প্রকাশিত হওয়ায়, আমার হৃদয় যেন অত্যন্ত কম্পিত হইতেছে।

(ফ) বাসন্তী। (স্বগত) হায় কষ্ট! মহারাজ শোকে অত্যন্ত বিপন্ন হইয়া পড়িয়াছেন; সুতরাং উঁহার চিত্ত ও নয়নকে অন্য দিকে সঞ্চালিত করি। (প্রকাশ্যে) চিরপরিচিত এই সমস্ত জনস্থানের অংশগুলিকে দর্শন করিয়া, মহারাজ চিত্তকে আনন্দিত করুন।

(१) चिरपरिचितानेतान् जनस्थानभागानवलोकयतु देव इति पाठान्तरम्।

सीता। सन्दीवणाश्रो ज्जेव दुक्खस्स पिअसहीविणोदणो-वाआ त्ति मण्णेदि (भ)।

वासन्ती। देव! देव! (म)

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि (१)।
आयान्त्या परिदुर्म्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्य्यादरविन्दकुट्मलनिभो मुग्धः प्रणामाञ्जलिः ॥२६॥

(भ) सन्दीपना एव दुःखस्य प्रियसखीविनोदनोपाया इति मन्यते।

(भ) सीतेति। प्रियसख्या वासन्त्या विनोदनोपाया आनन्दोत्पादनकारणानि जनस्थानस्य प्रदेशविशेषदर्शनादीनीत्यर्थः, दुःखस्य आर्य्यपुत्रस्य मम च दारुणशोककष्टस्य सन्दीपना एव उद्दीपका एव जनका एवेत्यर्थः भविष्यन्तीति शेषः। इति मन्यते मयेत्यर्थः। तत्कालीनसकलघटनास्मारकत्वादिति भावः।

अत्र विनोदनोपायेभ्यस्तद्विरुद्ध दुःखोत्पत्तेर्विषमालङ्कारः।

(म) वासन्तीति। देव देवेति विस्मये द्विरुक्तिः।

अस्मिन्निति। अस्मिन् अङ्गुल्या निर्द्दिष्टे सम्मुखवर्त्तिनि। स्वयोगव्यवस्थापने एव-शब्दः। लतागृहे निकुञ्जे स्थित इति शेषः त्वं तस्याः सीतायाः जलाद्यानेतुं गोदावरीं गतायाः इत्यर्थः मार्गे आगमनपथे दत्ते ईक्षणे चक्षुषी येन स तथोक्तः अभवः आसीः

(ব) রাম। এইরূপই হউক। (ইহা বলিয়া উঠিয়া পাদক্ষেপ করিতে লাগিলেন।)

(ভ) সীতা। প্রিয়সখীর এই শোকাপনোদনের উপায়, প্রত্যুত শোকোদ্দীপকই হইবে; ইহা আমি মনে করি।

(ম) বাসন্তী। মহারাজ! মহারাজ!।

---

(१) सैकते इति पाठभेदः।

सीता। दारुणासि सहि! वासन्ति! दारुणासि, जा एदेहिं हिअअमम्मगूढसल्लसरिसेहिं पुणो पुणो मं मन्दभाइणीं अज्जउत्तं वि दूणावेसि (य)।

(य) दारुणासि सखि! वासन्ति! दारुणासि, या एतैर्हृदयमर्म्मगूढशल्यसदृशैः पुनः पुनर्मां मन्दभागिनीम् आर्य्यपुत्रमपि दावयसि।

सम्भवसमयादतिरिक्तविलम्बेन तदागमनप्रतीक्षया तदागमनपथं दृष्टवानासीरित्यर्थः। सा किन्तु सीता हंसैः कृतं कौतुकं जलविहारादिना कौतूहलं यया तादृशी सती गोदावर्य्यां तस्या रोधसि तीरे चिरम् अभूत् स्थितेति शेषः। हंसानां विविधक्रीडादर्शनकौतुकात् विलम्बितवतीत्यर्थः आयान्त्या गोदावरीतीरादागच्छन्त्या तया सीतया त्वां परिदुर्म्मनायित-मिव विलम्बकरणात् तच्चिन्तया सर्व्वतोभावेन दुःखितचित्तमिव वीक्ष्य दृष्ट्वा कातर्य्यात् त्वत्कोपसम्भावनाजनितभयेन विह्वलत्वात् अपराधं स्वीकृत्येति भावः अरविन्दकुड्मलनिभः पद्मकलिकातुल्यः अतएव मुग्धः सुन्दरः प्रणामाय स्वावनतभावज्ञापनाय अञ्जलिः पाणिद्वय-संयोगः बद्धः विहितः। कृतापराधपरिमार्ज्जनार्थेति भावः।

अत्र आर्थी उपमालङ्कारः परिदुर्म्मनायितमिवेति क्रियोत्प्रेक्षया सङ्कीर्य्यते।

"दुर्म्मना विमना अन्तर्म्मनाः" इत्यमरः।

अदुर्म्मना दुर्म्मना इवाचरति इति दुर्म्मनायितः आचारार्थे क्यिः मनसः सलोपश्च।

शार्द्दूलविक्रीडितं वृत्तम् ॥३७॥

(य) सीतेति। हृदयमर्म्मणि वक्षोमध्ये गूढं गुप्तभावेन निखातं यत् शल्यं शङ्कुस्तत्-

আপনি এই লতাগৃহেই থাকিয়া, সীতার আগমনপথে দৃষ্টিনিক্ষেপ করিয়া রহিয়াছিলেন; কিন্তু তিনি গোদাবরীর তীরে হংসগণদ্বারা কৌতুক করিয়া বহুক্ষণ বিলম্ব করিয়াছিলেন; তাহার পর আসিতে আসিতে, আপনাকে অপ্রসন্নচিত্তের ন্যায় দেখিয়া, কাতরতাবশতঃ পদ্মমুকুলের ন্যায় মনোহর এবং প্রণতিসূচক অঞ্জলি বন্ধন করিয়াছিলেন ॥৩৭॥

राम:। चण्डि! जानकि! इतस्ततो दृश्यस इव, न चानुकम्पसे (र)।

हा हा देवि! स्फुटति हृदयं, स्रंसते (१) देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि ॥३८॥

(इति मूर्च्छति)

सदृशैः एतैः तत्तत्स्थानप्रदर्शनैः तत्तद्घटनास्मृतिकारकवचनैश्चेत्यर्थः। अपिशब्दः समुच्चये आर्य्यपुत्रञ्चेत्यर्थः। दावयसि सन्तापयसि। "टु दु उपतापे" इत्यस्य ण्यन्ते प्रयोगः। सन्तापकारिणी दारुणैवेति भावः।

(र) राम इति। चण्डि! अत्यन्तकुपिते! अनवरतसीताचिन्तावशात् सीतया सह पूर्वानुभूततत्तद्वस्तुदर्शनाच्च "इतस्ततो दृश्यस इवे"ति रामस्य भ्रान्तिः, न तु वास्तवं किञ्चिदपि सीताया दर्शनं जातं भागीरथीवरप्रभावात् सर्वैरेव तस्या अदृश्यत्वादिति बोध्यम्। किन्त्वर्थे चकारः। किन्तु नानुकम्पसे न दयसे साचाद्भूता सती आलापसम्भाषणादिना मां प्रति दयां न करोषीत्यर्थः। साचाद्भूता सती त्वं यदालापादिकं न करोषि तत्र मत्कृतनिर्वासनात् तव कोप एव कारणमिति भावः।

"चण्डस्त्वत्यन्तकोपन" इत्यमरः।

(य) সীতা। দারুণ হইয়াছ, সখি! বাসন্তি! তুমি দারুণ হইয়াছ; যে তুমি, হৃদয়ের মর্ম্মস্থানে প্রোথিত শঙ্কুর (পেরেকের) তুল্য এই সকল নিদর্শনদ্বারা, মন্দভাগিনী আমাকে এবং আর্য্যপুত্রকেও, বার বার সন্তপ্ত করিতেছ।

(র) রাম। কোপনস্বভাবে! সীতে! তুমি চারিদিকেই যেন দৃষ্টিগোচর হইতেছ; অথচ দয়া করিতেছ না।

(१) ध्वंसते इति भिन्नः पाठः।

सीता। हद्दी हद्दी पुणोवि प्पमूढ़ो अज्जउत्तो (ल)।

(ल) हा धिक् हा धिक्! पुनरपि प्रमूढ़ आर्य्यपुत्रः।

हा इति। हा हा देवि! सीते! हृदयं वक्षः स्फुटति विदीर्य्यते, देहबन्धः शरीरस्य सन्धिबन्धनं स्रंसते स्खलति, जगत् भुवनं शून्यं पदार्थरहितम् अथ च अविरला अविश्रान्ता ज्वाला सन्तापो यस्मिन् तत् तथोक्तं मन्ये अनुभवामि, तथा अन्तः मध्ये ज्वलामि अन्तरं दग्धं भवतीत्यर्थः शोकाग्निनेति भावः। विधुरः शोकसन्तापेन दुरवस्थः अन्तरात्मा जीवः सीदन् अवसन्नः सन् अन्धे अन्धङ्करणे गाढ़ इत्यर्थः, तमसि अन्धकारे मज्जतीव लीयत इव, तथा मोहः अज्ञानं विष्वक् समन्तात् सकलपदार्थानित्यर्थः स्थगयति आवृणोति मोहावरणात् किमपि मे न ज्ञानविषयीभवतीत्यर्थः। अतएव मन्दभाग्योऽहं कथं किं करोमि, एकान्तासामर्थ्यात् कमपि प्रतिकारं कर्त्तुं न शक्नोमीति भावः।

अत्र दारुणदुःखरूपकार्य्यं प्रति बहूनां कारणानामुक्तत्वात् समुच्चयोऽलङ्कारः, तथा मन्दभाग्यः किं करोमीति वाक्यार्थं प्रति पूर्ववर्त्तिवाक्यार्थानां हेतुत्वात् काव्यलिङ्गम्, तथा ज्वालाया दुःखविशेषत्वात् मन्यपदप्रयोगाच्च भावाभिमानिनी वाच्या गुणोत्प्रेक्षा च एषामङ्गाङ्गिभावेन सङ्करः।

"विधुरन्तु प्रविश्लेषे।" "सर्वतो विष्वगित्यपी"ति चामरः।

स्फुटविकसन इति विकाशार्थोऽपि स्फुटधातुरत्र धातूनामनेकार्थत्वात् विदारणार्थो मन्तव्यः। मन्दाक्रान्ता वृत्तम् ॥३८॥

(ल) सीतेति। प्रमूढ़ः मूर्च्छामुपगतः।

হায়! হায়! দেবি! হৃদয় বিদীর্ণ হইতেছে, দেহের সন্ধিবন্ধন সকল খুলিয়া যাইতেছে, জগৎটাকে শূন্য এবং অবিশ্রান্তজ্বালাময় মনে করিতেছি, ভিতরে দগ্ধ হইতেছি, বিকল অন্তরাত্মা অবসন্ন হইয়া, প্রগাঢ় অন্ধকারে যেন মগ্ন হইতেছে এবং মূর্চ্ছা সকল দিক্ আবৃত করিতেছে। হায়! মন্দভাগ্য আমি এখন কি করি! ॥৩৮॥

(ইহার পর মূর্চ্ছিত হইলেন।)

(ল) সীতা। হায়! হায়! আর্য্যপুত্র আবারও মূর্চ্ছিত হইলেন।)

বাসন্তী। দেব! সমাশ্বসিহি সমাশ্বসিহি।

সীতা। হা অজ্জউত্ত! মং মন্দভাইণীং উদ্দিসিঅ সঅল-জীঅলোঅ-মঙ্গলাধারস্স দে জম্মলাহস্স বারং বারং সংসইদ-জীবিদদারুণো দসাপরিণামো ত্তি, হা হদম্হি। (ইতি মূর্চ্ছতি) (ব)।

তমসা। বৎসে! সমাশ্বসিহি সমাশ্বসিহি, পুনস্ত্বৎ-পাণিস্পর্শ এব সঞ্জীবনোপায়ো (১) রামভদ্রস্য (শ)।

(ব) হা আর্য্যপুত্র! মাং মন্দভাগিনীমুদ্দিশ্য সকলজীবলোকমঙ্গলাধারস্য তে জন্মলাভস্য বারং বারং সংশয়িতজীবিতদারুণো দশাপরিণাম ইতি, হা হতাস্মি।

---

(ব) সীতেতি। সকলজীবলোকমঙ্গলাধারস্য সততহিতচেষ্টনাৎ নিখিলপ্রাণিনাং শুভঙ্করস্যেত্যর্থঃ জন্মলাভস্য লব্ধজন্মনঃ সতঃ জন্মাবধীত্যর্থঃ বারং বারং পুনঃ পুনঃ সংশয়িতং তিষ্ঠতি যাতি বেতি সন্দেহমাপন্নং জীবিতং জীবনং যস্মাৎ স তথোক্তঃ অতএব দারুণঃ, তয়োঃ কর্ম্মধারয়ঃ; দশাপরিণামঃ অবস্থাপরিবর্ত্তনম্ ইতি হেতোঃ হতাস্মি বিম্বনাশেন প্রতিবিম্বনাশবৎ দৈবেন প্রাণেশ্বরনাশাৎ নাশিতাস্মীত্যর্থঃ।

ঘটয়োঃ সংযোগ ইত্যত্র সংযুক্তৌ ঘটাবিতি প্রতীতিবৎ জন্মলাভস্যেত্যত্র লব্ধজন্মন ইতি প্রতীতিঃ "কৃদভিহিতো ভাবো দ্রব্যবৎ প্রকাশতে" ইতি ন্যায়াৎ।

---

বাসন্তী। মহারাজ! আশ্বস্ত হউন, আশ্বস্ত হউন।

(ব) সীতা। হা আর্য্যপুত্র! আপনি সমস্ত জীবলোকের মঙ্গলের আধার; তথাপি মন্দভাগিনী আমাকে উদ্দেশ্য করিয়া আপনার জীবন, জন্মাবধি বার বার সংশয়াপন্ন হইতেছে; অতএব অবস্থার পরিণাম এখন দারুণ হইয়া দাঁড়াইয়াছে; হায়! ইহাতে আমি মরিয়াছি। (এই বলিয়া মূর্চ্ছিত হইলেন।)

(শ) তমসা। বৎসে! আশ্বস্ত হও, আশ্বস্ত হও, আবারও তোমার হস্ত-স্পর্শই, রামভদ্রের চৈতন্য সম্পাদনের উপায়।

---

(১) জীবনোপায় ইতি পাঠান্তরম্।

वासन्ती। कथमद्यापि नोच्छ्वसिति, हा प्रियसखि! सीते! क्वासि, सम्भावयात्मनो जीवितेश्वरम् (ष)।

सीता। (ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति) (स)

वासन्ती। दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः (ह)।

राम:। आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् ॥३८॥

---

(श) तमसेति। सञ्जीवनोपायः चैतन्यसम्पादनोपायः।

(ष) वासन्तीति। अद्यापि अस्मिन्नपि क्षणे कथं न उच्छ्वसिति न चैतन्यमापद्यते। सखेदोक्तिरियम्। आत्मनः स्वस्याः जीवितेश्वरं प्राणनाथं रामं सम्भावय चेतय।

(स) सीतेति। रामात् पूर्वं समाश्वस्येति बोध्यम्। ससम्भ्रमं सत्वरं स्पृशति रामस्येति शेषः।

(ह) वासन्तीति। दिष्ट्या भाग्येन, प्रत्यापन्ना प्रत्युपस्थिता चेतना संज्ञा यस्य सः। विशेषचेष्टां विनापि यत् रामस्य चैतन्यमुपस्थितं तदस्माकं भाग्यमेव हेतुरिति भावः।

आलिम्पन्निति। संस्पर्शः कश्चिदनिर्वचनीय इति भावः, अमृतमयैः पीयूषतुल्यैः प्रलेपैः लेपनैः अन्तर्वा मध्यवर्त्तिनश्च शरीरधातून् अस्थिमज्जादीन् बहिरपि वा बहिर्वर्त्तिनश्च शरीरधातून् रक्तमांसादीन् आलिम्पन्निव सम्यग्लिप्तान् कुर्वन्निव जीवयन् संज्ञां प्रापयन्

(ষ) বাসন্তী। হায়! এখন ও চৈতন্যলাভ করিলেন না! হা প্রিয়সখি! সীতে! তুমি কোথায় আছ; নিজের প্রাণেশ্বরকে জীবিত কর।

(স) সীতা। (ব্যস্ততার সহিত নিকটে যাইয়া রামচন্দ্রের হৃদয়ে ও ললাটে স্পর্শ করিতে লাগিলেন।)

(হ) বাসন্তী। ভাগ্যবশতঃ রামচন্দ্র চৈতন্যলাভ করিয়াছেন।

(आनन्दनिमीलिताच्च एव) सखि! वासन्ति! दिष्ट्या वर्द्धसे (ञ)।

वासन्ती। देव! कथमिव?

रामः। सखि! किमन्यत्, पुनः प्राप्ता जानकी [क]।

वासन्ती। अयि देव! क्व सा?

आनन्दात् सुखोत्पादनात् अकस्मात् तत्क्षणात् पुनरपि अपरविधम् अन्यप्रकारं मोहम् अज्ञानं तनोति करोति।

अत्र अपरविधमोहकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः आलिम्पन्निवेति क्रियोत्प्रेक्षया सङ्कीर्य्यते।

वाशब्दः अपि वाशब्दश्च समुच्चये।

सप्तशरीरधातवः। यथा सुश्रुतः—"रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः।"

प्रहर्षिणी वृत्तम् ॥३९॥

(ञ) आनन्देति। आनन्देन निमीलिताक्ष एव मुद्रितनयन एव न तु वासन्त्या समालापार्थम् उन्मीलितनयन इत्येवशब्दार्थः। अत्यन्तसुखानुभवसमये नयनमुद्रणं प्रायेण स्वाभाविकमिति द्रष्टव्यम्। दिष्ट्या भाग्येन। कस्यचित् मङ्गलविशेषस्य प्राप्तौ 'दिष्ट्या वर्द्धसे' इत्युक्तिः प्रायेण नाटकादौ दृश्यते।

(क) राम इति। किमन्यत् अन्यत् किं ब्रवीमीत्यर्थः।

রাম। আবারও, সেই সংস্পর্শ, হঠাৎ আমাকে চৈতন্যসম্পন্ন করিয়া, শরীরের ভিতরের ও বাহিরের সমস্ত ধাতুকে, অমৃতময় প্রলেপদ্বারাই যেন লিপ্ত করতঃ, আনন্দে অন্য প্রকার মোহ জন্মাইতেছে ॥৩৯॥

(ঞ) (আনন্দবশতঃ মুদ্রিতনয়ন অবস্থাতেই) সখি! বাসন্তি! ভাগ্যবশতঃ বৃদ্ধি পাইয়াছ।

বাসন্তী। মহারাজ! কি রকম?

(ক) রাম। সখি! আর কি, পুনরায় সীতাকে পাইয়াছি।

বাসন্তী। মহারাজ! কোথায় তিনি?

राम:। (स्पर्शसुखमभिनीय) पश्य, नन्वियं पुरत एव (ख)।

वासन्ती। अयि देव! किमिति मर्म्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं मां दहसि (ग)।

सीता। ओसरिदुमिच्छामि, एसो उण चिरसम्भाव-सोम्म-सीअलेण अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं झत्ति हरन्तेण (१) वज्जलेवोवणद्धो विअ सिहन्तणीसहविवज्जत्थो वेवदि अवसो विअ मे हत्थो (घ)।

(घ) अपसर्त्तुमिच्छामि एष पुनश्चिरसद्भावसौम्यशीतलेनार्य्यपुत्रस्पर्शेन दीर्घदारुणमपि सन्तापं झटिति हरता वज्रलेपोपनद्ध इव स्विद्यन्निःसहविपर्य्यस्तो वेपते अवश इव मे हस्तः।

(ख) राम इति। नन्विति वासन्तीसम्बोधने। इयं प्राप्ता जानकी पुरत एव अग्रत एव, न तु दूरे इत्येवशब्दार्थः। वर्त्तत इति शेषः।

(ग) वासन्तीति। मर्म्मच्छेदेन हृदयान्तस्तलाघातेन दारुणैः, एभिः 'पुनः प्राप्ता जानकी'त्यादिभिः प्रलापैः वास्तविकसीताभावादनर्थकवचनैः प्रियसख्याः सीताया दुःखेन विरहकष्टेन दग्धामपि सन्तप्तामपि मन्दभागिनीं मां किमिति कथं पुनर्द्दहसि वस्तुतः सीता नास्त्येव तथापि सा पुरतो वर्त्तत इति श्रवणात् तद्विरहदुःखं द्विगुणीभूयाभिवर्द्धत इति भावः।

(घ) सीतेति। अपसर्त्तुं दूरं गन्तुम्। चिरसद्भावेन चिरानुरागेण सौम्यः सुन्दरः

(খ) রাম। (স্পর্শসুখ অভিনয় করিয়া) দেখ, এই যে সম্মুখেই রহিয়াছেন।

(গ) বাসন্তী। মহারাজ! আমি একেই প্রিয়সখীর শোকানলে দগ্ধ ও মন্দভাগিনী; তা, আপনি আবার মর্ম্মচ্ছেদনিবন্ধন দারুণ এই সকল প্রলাপদ্বারা কেন আমাকে দগ্ধ করিতেছেন।

(१) सीअलवन्तेण इति क्वचित् पाठः।

রামঃ। সখি! কুতঃ প্রলাপঃ (ঙ)।

গৃহীতো যঃ পূর্ব্বং পরিণয়বিধৌ কঙ্কণধর-
শ্চিরং স্বৈচ্ছাস্পর্শৈরমৃতশিশিরৈর্যঃ পরিচিতঃ।

---

শীতলস্য তেন। দীর্ঘঃ বহুকালীয়ঃ অতএব দারুণস্তম্। ঝটিতি শীঘ্রং স্পর্শেনৈব এবেত্যর্থঃ হরতা নাশয়তা। বজ্রলেপেন বজ্রবৎ কঠিনলেপেন উপনদ্ধঃ বদ্ধ ইব দৃঢ়সংযুক্ত এবেত্যর্থঃ কথমন্যথা উত্তোলয়িতুং ন শক্যত ইতি ভাবঃ। স্বিদ্যন্ সাত্ত্বিকভাবোদ্রেকাত্ ঘর্ম্মাক্তঃ সন্ নিঃসহম্ অবশং যথা স্যাত্তথা বিপর্য্যস্তঃ রামগাত্রোপরি পতিতঃ অতএব অবশ ইব জড ইব মে মম হস্তঃ বেপতে কম্পতে। স্বগতবদুক্তিরিয়ম্।

(ঙ) রাম ইতি। কুতঃ কস্মাদ্ধেতোঃ প্রলাপা 'পুনঃ প্রাপ্তা জানকী'ত্যাদি বাক্যানি অনর্থকানি ভবেয়ুঃ অপি তু কুতোঽপি নেত্যর্থঃ। সত্যমেব পুনঃ প্রাপ্তা জানকীতি ভাবঃ।

সম্যগনুভবপ্রমাণেন তত্সত্যত্বং প্রতিপাদয়তি গৃহীত ইতি। পূ॰ পূর্ব্বকালে পরিণয়-বিধৌ বিবাহকরণকালে কঙ্কণং বিবাহকালধারণীয়সূত্রং ধরতীতি কঙ্কণধরঃ যঃ পাণিঃ রামস্য গৃহীতঃ ধৃতঃ, ময়া রামেণ ময়া সীতয়া চেতি শেষঃ। বিবাহকালে বরেণ বধ্বাঃ পাণিগ্রহণস্য শাস্ত্রীয়ত্বাদিতি ভাবঃ। তত্র রামেণ সীতায়াঃ পাণিরেব গৃহীতঃ, সীতয়া তু রামস্য পাণৌ গৃহীতেঽপি রামগ্রহণং জাতম্ অবয়বেঽপ্যবয়বিনো বৃত্তিত্বস্বীকারাদিতি ন শ্লেষভঙ্গঃ। তথা যঃ পাণিঃ রামস্য অমৃতশিশিরৈঃ পীযূষতুল্যশীতলৈঃ স্বৈচ্ছয়া নিজেচ্ছা-

---

(ঘ) সীতা। আমি সরিয়া যাইতে ইচ্ছা করি; কারণ, আর্য্যপুত্রের এই সংস্পর্শ, চিরানুরাগনিবন্ধন মনোহর ও শীতল; আমার সন্তাপ, দীর্ঘকালব্যাপী ও ভয়ঙ্কর হইলেও, ঐ সংস্পর্শ হঠাৎ তাহা নষ্ট করিয়াছে এবং ঐ সংস্পর্শবশতই আমার অবশ হস্ত, আর্য্যপুত্রের অঙ্গের সহিত যেন বজ্রলেপদ্বারা সংযোজিত হইয়াছে এবং হস্ত হইতে ঘর্ম্ম নিঃসৃত হইতেছে, আর তাহা, আর্য্যপুত্রের দেহের উপরে অবশভাবে পতিত হইয়া কম্পিত হইতেছে।

(ঙ) রাম। সখি! প্রলাপ কোথায়?

सीता। अज्जउत्त! सो ज्जेव दाणिं सि तुमं (च)।

राम:। स एवायं तस्यास्तुहिनकरकौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥४०॥

(इति गृह्णाति) (छ)।

---

(च) आर्य्यपुत्र! स एवेदानीमसि त्वम्।

---

मात्रेणैव न तु केनचिदपरकारणेनेत्यर्थः ये स्पर्शास्तैः चिरं परिचितः 'सीतायाः पाणिरयम् आर्य्यपुत्रस्याय'मित्येवम्प्रकारेण विशेषेणावगतः।

(च) सीतेति। उक्तश्लोकार्द्धेन निजपाणि-रामचन्द्रयोरुभयोरेवावगमात्तत्र राम-रूपमर्थमादाय सीता स्वगतवदब्रवीति आर्य्यपुत्रेति। इदानीम् इदानीमपीत्यर्थः त्वं स एवासि तिष्ठसि, त्वयि न किञ्चिद्वैषम्यं लक्ष्यत इत्यर्थः। पूर्वं यथा मां प्रति तवालौकिक-दयानुरागादय आसन् इदानीमपि तथैव विद्यन्ते, मम तु दुरदृष्टवशादेव नानाविधा दुरवस्था जातेति भावः।

रामस्तु पूर्वार्द्धेन स्वाभिप्रेतं सीतापाणिरूपमेवार्थमादाय स्ववाक्यमुपसंहरति स एवायमिति। मया तुहिनानां हिमानां करकाणां वर्षोपलानाञ्च यदौपम्यम् अतिशीतल-त्वेन सादृश्यं तेन सुभगः सुन्दरः सुस्पृश्य इत्यर्थः, तथा ललितं कोमलं यत् लवल्याः वृक्षविशेषस्य (नोयाडि इति लोयाल इति च प्रसिद्धस्य) कन्दलं नवाङ्कुरः तन्निभस्तत्तुल्यः शीतल इत्यर्थः, अयं स एव तस्याः सीतायाः पाणिः करः लब्धो गृहीतः। सर्वथा पूर्ववदनुभूयमानत्वात् नात्यत्र संशय इति भावः।

अत्र पूर्वार्द्धे स्वाभाविकैकार्थकशब्दैः सीतापाणि-रामरूपानेकार्थाभिधानात् अर्थ-श्लेषालङ्कारः तिस्रो लुप्तोपमाश्च, एतेषामङ्गाङ्गिभावेन सङ्करः।

"कन्दर्पा—हलसूत्रम्।" "कन्दलम्। नवाङ्कुरः" इति च शब्दकल्पद्रुमः। "तुषारस्तुहिनं हिमम्," "वर्षोपलस्तु करका" इति चामरः।

पूर्वमिति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया।

"गृह्णामि ते सौभगत्वाय हस्त"मित्यादिमन्त्रलिङ्गात् वरस्य वध्वाः पाणिग्रहणं कर्त्तव्य-मयाभिहितम्। शिखरिणी वृत्तम् ॥४०॥

सीता। हद्धी हद्धी! अज्जउत्तप्फंसमोहिदाए पमादो क्खु मे संवुत्तो (ज)।

रामः। सखि! वासन्ति! आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि, तत्त्वं तावदेनां धारय (झ)।

---

(ज) हा धिक्! हा धिक्! आर्य्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः।

---

(छ) इतीति। गृह्णाति रामः सीताया हस्तमिति शेषः।

(ज) सीतेति। आर्य्यपुत्रस्य स्पर्शेन मोहितायाः कर्त्तव्याकर्त्तव्यज्ञानशून्यायाः सात्त्विकभावोद्रेकेण लब्धाया इत्यर्थः, प्रमादः अनवधानता संवृत्तः जातः। अंसावधान-तयैवाहं हस्तं नापसारितवती, कथमन्यथा आर्य्यपुत्रो धर्त्तुं शक्नुयादिति भावः।

अत्र प्रमादं प्रति मोहितत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(झ) राम इति। आनन्देन निमीलितानि मुद्रितानि स्वस्वकार्य्यकरणे असमर्थानीति यावत् इन्द्रियाणि हस्तपदादीनि यस्य सः, अतएव साध्वसेन हस्तमाकृष्य सीता चेदपसरतीति भयेन परवान् पराधीनोऽस्मि हस्तेन गाढं धारयितुं चक्षुषा वा सम्यङ् निर्द्देष्टुं न शक्नोमीत्यर्थः। तत्तस्मात्। एनां मया शिथिलभावेन धृतां सीतां धारय।

---

পূর্ব্বে বিবাহের সময়ে, কঙ্কণধারী যাহাকে গ্রহণ করিয়াছিলাম এবং অমৃতের ন্যায় শীতল ইচ্ছাকৃত সংস্পর্শদ্বারা যে পরিচিত ছিল।

(চ) সীতা। আর্য্যপুত্র! সেই আপনিই এখনও আছেন?

রাম। হিম ও বর্ষোপলের (শিলের) সাদৃশ্যনিবন্ধন মনোহর এবং কোমল লবলীর (নোয়াড়ির, লোয়াইলের) নবাঙ্কুরের তুল্য, তাহার সেই হাতখানিই আমি পাইয়াছি ॥৪০॥

(ছ) (এই বলিয়া, সীতার হাত ধরিলেন।)

(জ) সীতা। হায়! হায়! আর্য্যপুত্রের স্পর্শে আমি মোহিত হইয়া পড়িয়াছি; তাই আমার অনবধানতা হইয়াছে।

(ঝ) রাম। সখি! বাসন্তি! আনন্দে মুদ্রিতনেত্র অবস্থায় আমি পরাধীন (অবশ) হইয়া পড়িয়াছি; তা, তুমি ইহাকে ধর।

वासन्ती। कष्टम्, उन्माद एव (ञ)।

सीता। (ससम्भ्रममाक्षिप्यापसर्पति) (ट)।

रामः। हा धिक् प्रमादः, हा धिक् प्रमादः (ठ)।

करपल्लवः स तस्याः सहसैव जड़ाज्जड़ः परिभ्रष्टः।
परिकम्पिणः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥४१॥

---

(ञ) वासन्तीति। उन्माद एव रामस्य मतिभ्रंश एव जातम्, एतदेव कष्टं सीताशोकादपि गुरुतरं दुःखमित्यर्थः। कथमन्यथा अविद्यमानायामपि सीतायां तत्-प्रत्यक्षमिवायं करोतीति भावः।

(ट) सीतेति। ससम्भ्रमं सत्वरम्, आक्षिप्य रामधृतं स्वकरमाकृष्य अपसर्पति दूरमिति शेषः।

(ठ) राम इति। प्रमादोऽनवधानता ममेत्यर्थः।

कार्य्यप्रदर्शनेन कारणीभूतं प्रमादं समर्थयति करेति। सर्वत्रैव सात्त्विकभावो-दयादिति हेतुर्बोध्यः। जडः अलस उत्तोलयितुमशक्यप्राय इत्यर्थः, प्रकम्पी कम्पमानः स्विद्यन् घर्म्माक्तः तस्याः सीताया स गृहीतपूर्वः करपल्लवः, जड़ादलसात् गाढ़ं धारयितु-मसमर्थादित्यर्थः परिकम्पिणः कम्पमानात् स्विद्यतः घर्म्माक्तात् मम करात् सहसैव तत्-क्षणादेव मम गाढ़धारणाभिप्रायोत्पत्तिक्षण एवेत्यर्थः परिभ्रष्टः स्खलितः। यदि सावधान-तयाहं गाढ़ं धारयितुमशक्ष्यं तदा न तस्याः करः परिभ्रष्टोऽभविष्यत्, अतएव मम प्रमाद एव जात इति भावः।

अत्र परिभ्रंशं प्रति जड़त्वं परिकम्पित्वं स्विद्यत्त्वञ्च हेतुरिति पदार्थहेतुकं काव्य-लिङ्गमलङ्कारः करपल्लव इति लुप्तोपमया सङ्कीर्णः। परस्परस्पर्शेन सीतारामयो-रुभयोरपि, सात्त्विकभावो जात इति वस्तुध्वनिः। तथा च साहित्यदर्पणः—

---

(ঞ) বাসন্তী। হায় কি কষ্ট! উন্মাদ অবস্থাই বটে।

(ট) সীতা। (ব্যস্ততার সহিত হস্ত আকর্ষণ করিয়া সরিয়া গেলেন।)

(ঠ) রাম। হায়! অনবধানতা, হায়! অনবধানতা।

सीता। हद्दी हद्दी! अज्जवि अणावत्थिदत्थिमिदमूढ़-घूस्सन्तणअणो ण पज्जवत्थावेदि अत्ताणअं (ड)।

तमसा। (सस्नेहहासकौतुकं निर्वर्ण्य) (ढ)।

(ड) हा धिक्! हा धिक्! अद्यापि अनवस्थितस्तिमितमूढ़घूर्णमाननयनो न पर्य्यवस्थापयत्यात्मानम्।

"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
ववर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः॥"

मात्रासंवलितेयमार्य्याजातिः, तथा चोक्तं श्रुतबोधे—

"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या॥" इति॥४१॥

(ड) सीतेति। अनवस्थिते सहसा हस्तपरिभ्रंशेन व्याकुलतया अस्थिरे, स्तिमिते अनुभूतस्पर्शसुखस्मरणेन निश्चले कस्यचित् वस्तुनः स्मरणकाले नयनं निश्चलं भवतीति स्वभावः, मूढ़े कस्यां दिशि सीता द्रष्टव्येति निश्चयाभावात् अप्रतिभे, घूर्णमाने सीताया निरूपणार्थम् इतस्ततो भ्रमती च नयने यस्य स तथोक्तः। अद्यापि अस्मिन्नपि समये आत्मानं हृदयं न पर्य्यवस्थापयति न प्रकृतिस्थं कर्त्तुं शक्नोतीत्यर्थः। आर्य्यपुत्र इति शेषः। अकस्मान्नष्टलब्धस्य सहसैव पुनः प्रणाशात् महासम्भ्रमेणेति भावः।

(ढ) तमसेति। तमसायाः सीतां प्रति कन्यावद्व्यवहारात् स्नेहः, सीता स्वयमेव स्पृष्टवती पुनः स्वयमेवापसृतेति हासः प्रष्टुमिच्छा भवति किन्तु कार्य्यतो न पारयतीति कौतुकम्।

অবশ, কম্পমান ও ঘর্ম্মাক্ত আমার হস্ত হইতে, অবশ, কম্পমান ও ঘর্ম্মাক্ত তাহার সেই হস্তপল্লব, হঠাৎই স্খলিত হইয়া গিয়াছে॥৪১॥

(ড) সীতা। হায়! হায়! আর্য্যপুত্রের নয়নযুগল, কখনও অস্থির হইতেছে, কখনও নিশ্চল রহিতেছে, কখনও অপ্রতিভ হইতেছে এবং কখনও ঘুরিতেছে; তা ইনি এখনও আমাকে স্থির করিতে পারেন নাই।

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा।
मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव ॥४२॥

सीता। (स्वगतम्) अम्महे! अवसेण एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए, किंत्ति किल एसा मणिस्सदि, एसो दे परिच्चाओ एसो अ हिअआसङ्गोत्ति (ण)।

---

(ण) अहो! अवशेन एतेनात्मना लज्जापितास्मि भगवत्या तमसया, किमिति किलैषा मंस्यते, एष ते परित्यागः एष च हृदयासङ्ग इति।

---

सस्वेदेति। वत्सा सीता प्रियस्य दयितस्य रामभद्रस्य स्पर्शसुखेन हेतुना सस्वेदानि घर्म्माक्तानि, रोमाञ्चितानि पुलकितानि, कम्पितानि च अङ्गानि हस्तपदाद्यवयवा यस्याः सा तथोक्ता सती मरुता वायुना नवाम्भसा नूतनवृष्टिजलेन च यथाक्रमं प्रविधूता कम्पिता सिक्ता आर्द्रीकृता च सा तथोक्ता, तथा स्फुटाः विकसिताः कोरकाः कलिका यस्या सा स्फुटकोरका कदम्बयष्टिरिव कदम्बदण्ड इव दण्डायमानकदम्बवृक्ष इवेत्यर्थः जाता सम्भूता।

अत्रोपमालङ्कारः "मरुन्नवाम्भः प्रविधूतसिक्ते"ति यथासंख्यालङ्कारेण सङ्कीर्य्यते।

रोमाञ्चा एषां सञ्जाता इति रोमाञ्चितानि तारकादित्वादितच्।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥४२॥

(ण) सीतेति। अवशेन जड़ेन कार्य्याकार्य्यज्ञानहीनेनेति यावत् एतेन मदीयेन आत्मना मनसा द्वारेण भगवत्या तमसया लज्जापितास्मि सलज्जीकृतास्मि। मनो यदि न मामाार्य्यपुत्रं प्रष्टुं न प्रैषयिष्यत् तदा नाहं तमप्राक्ष्यमिति स्पर्शकृतलज्जां प्रति मन एव हेतुरिति भावः। एष ते परित्यागः एष च हृदयस्य आसङ्ग आसक्तिः रामं प्रत्यनुराग

---

(ঢ) তমসা। (স্নেহ, হাস্য ও কৌতুকের সহিত দেখিয়া।)

বৎসা সীতার অঙ্গসকল, প্রিয়তমের সংস্পর্শসুখে ঘর্ম্মাক্ত, রোমাঞ্চিত ও কম্পিত হইতেছে; সুতরাং বায়ুদ্বারা কম্পিত, নূতন বৃষ্টির জলে সিক্ত এবং প্রস্ফুটিত কলিকাসমন্বিত কদম্ববৃক্ষের ন্যায় সীতাকে দেখা যাইতেছে ॥৪২॥

रामः। (सर्वतोऽवलोक्य) कथं नास्त्येव, नन्वकरुणे! वैदेहि! (त)

सीता। सच्चं अअरुणह्मि, जा एव्वंविधं तुमं पेक्खन्ती णं धरामि ज्जेव जीविदं (थ)।

---

(थ) सत्यमकरुणास्मि, या एवंविधं त्वां प्रेक्षमाणा ननु धराम्येव जीवितम्।

---

इति यावत्। परित्यक्तायाः परित्यागकर्त्तारं प्रति मह्यामानकरणस्यैवौचित्यात् इदानीमनुरागवशात् तव रामस्य समीपगमनेन तत्क्षणात् पुनः प्रत्यावर्त्तनेन च उभयोरपि क्षणभङ्गुरत्वेन तुच्छत्वात् परित्यागहृदयासङ्गयोः किमपि मूल्यं नास्तीति भावः। इति एतत् एषा तमसा किमिति किं मंस्यते मनसा करिष्यति। इत्यहं शङ्के इति भावः।

अत्र लज्जापितेति ण्यन्तलज्जधातोरापु ततः कर्म्मणि क्तः। आत्मनेति करणे तृतीया। तमसयेति तु प्रयोजककर्त्तरि तृतीया।

(त) राम इति। सर्वतः समन्ततः सर्वासु दिक्ष्वित्यर्थः। कथमिति सम्भावनार्थमव्ययम्। नास्त्येव अस्मिन् स्थाने सीतेति शेषः। नन्वित्यनुनयसम्बोधने। अकरुणे! निर्द्दये! वक्ष्यमाणक्वासीत्यनेनान्वयात् वाक्यसमाप्तिः।

(थ) सीतेति। या अहम्। एवंविधं दारुणमहाशोकविह्वलमित्यर्थः त्वां प्रेक्षमाणा पश्यन्ती जीवितं जीवनं धरामि बिभर्म्मि, न तु त्यजामीत्येव शब्दार्थः। दयितस्य पत्युरेवंविधशोकार्त्तत्वदर्शनेन पत्न्या हृदयविदारणस्यैवौचित्यादिति भावः। अत्रापि नन्वित्यनुनये।

---

(ণ) সীতা। (স্বগত) হায়! ভগবতী তমসা, আমার এই অবশ দেহ দেখিয়া, আমাকে লজ্জিত করিয়াছেন। ইনি কি ইহা মনে করিবেন যে, এই তোমার পরিত্যাগ; আবার এই তোমার মনের আসক্তি।

(ত) রাম। (সকল দিকে দৃষ্টিপাত করিয়া) হায়! নাই; হে নির্দ্দয়ে! সীতে!।

(থ) সীতা। সত্যই আমি নির্দ্দয়; যে আমি, আপনাকে এই অবস্থায় দেখিয়াও, জীবন ধারণ করিতেছিই।

राम:। क्वासि, देवि! प्रसीद, न मामेवंविधं परित्यक्तु-मर्हसि (द)।

सीता। अइ अज्जउत्त! विवरीदं विअ एदं (ध)।

वासन्ती। देव! प्रसीद प्रसीद, स्वेनैव लोकोत्तरेण धैर्य्येण संस्तम्भयातिभूमिगतविप्रलम्भमात्मानं, कुतोऽत्र मे प्रियसखी सीता (न)।

(धं) अयि आर्य्यपुत्र! विपरीतमिवेदम्

(द) राम इति। एवंविधं दारुणमहाशोकविह्वलम्। पतिव्रतायाः पत्न्याः शोकार्त्तस्य अशरणस्य पत्युः परित्यागस्यानौचित्यादिति भावः।

(ध) सीतेति। इदं 'न मामेवंविधं परित्यक्तुमर्हसी'ति त्वयोक्तं वचनं विपरीत-मिव घटनाक्रमेण विप्रतिषिद्धमिव; तथा च त्वमेव पूर्णगर्भतया नितान्तकातरामेकाकिनीं मां परित्यक्तवान्, न तु तदहं त्वां कदापि परित्यक्तवती, सुतरामिदं तव वचनं विपरीत-वत् (উল্‌টামত) प्रतिभातीति भावः। इदं विपरीतमेव इत्युक्तौ कर्कशभाषित्वं स्यात् तच्च परमपतिव्रतायाः सीताया नितान्तमनुचितम्, सुतरामिवशब्दप्रयोगेण कविना सीताया विनयो रक्षित इति भाव्यम्।

(न) वासन्तीति। स्वेनैव स्वकीयेनैव न तु परोपदेशजनितेनेत्येवशब्दार्थः, लोकोत्तरेण सर्वलोकातिगेन धैर्य्येण अतिभूमिगतः चरमसीमां गतः विप्रलम्भः विच्छेदः सीताविरहजनितशोक इत्यर्थः यत्र तं तथोक्तम् आत्मानं स्वहृदयं संस्तम्भय प्रकृतिस्थं कुरु। आत्मना धैर्य्यावलम्बनं विना न खलु परोपदेशेन शोकोद्विग्नमनसः स्थिरता सम्भवतीति भावः।

"विप्रलम्भो विप्रयोगः" इत्यमरः। "अतिभूमिः। आधिक्य"मिति शब्दकल्पद्रुमः। प्रसीद प्रसीदेति दैन्ये द्विरुक्तिः। आत्मस्तम्भनेनैव मां प्रति प्रसन्नता स्यादिति भावः।

---

(द) রাম। দেবি! কোথায় আছ, প্রসন্ন হও; এই অবস্থায় আমাকে তুমি পরিত্যাগ করিতে পার না।

(ধ) সীতা। আর্য্যপুত্র! ইহা যেন উল্টা বলা হইল।

राम:। व्यक्तं नास्ति, कथमन्यथा वासन्त्यपि तां न पश्येत्, अपि खलु स्वप्न एष स्यात्, न चास्मि प्रसुप्त: कुतो वा रामस्य स्वप्न, सर्वथा स एवैष भगवाननेकवारपरिकल्पनानिर्म्मितो (१) विप्रलम्भ: पुन: पुनरनुबध्नाति (प)।

---

(प) राम इति। नास्ति सीता न विद्यते इति व्यक्तं स्पष्टम्। अन्यथा सीताया विद्यमानत्वे वासन्त्यपि प्रभाववती वनदेवतापि कथं तां सीतां न पश्येत् द्रष्टुं न शक्नुयात्। सुतरामेव सीता नास्त्येवेति भाव:। एष सीतानुभव: स्वप्न: स्यात् भवेत्। अपिशब्द: सम्भावनायाम्। खलु वाक्यालङ्कारे। इति सम्भावयामीत्यर्थ:। स्वयमेव स्वप्नं निरस्यति न चेति। न च अहं प्रसुप्तो निद्रितोऽस्मि, अतएव रामस्य कुत: स्वप्न:, अपि तु कथमपि नेत्यर्थ:। निद्रितावस्थायां विषयानुभवस्यैव स्वप्नत्वात् स्वप्नस्याभाव इति भाव:। तथा च साहित्यदर्पण:—

"स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु य:।"

स्वयमेव निश्चिनोति सर्वथेति। स पूर्वानुभूत एव न पुनर्नूतन इत्येवशब्दार्थ:। भगवान् अघटनीयघटनासामर्थ्यात् माहात्म्यवान्, अनेकवारपरिकल्पनया बहुवारचिन्तया निर्म्मित: कृत: विप्रलम्भ: वञ्चना इयं सीतेति भ्रमबुद्धिजनिता प्रतारणेति यावत् पुन: पुन: वारं वारं माम् अनुबध्नाति अनुसरति, इयं सीतेति भ्रमबुद्ध्या बहुवारं पूर्वं प्रवञ्चित आसम् इदानीमपि तथैव प्रवञ्चितोऽस्मीत्यर्थ:। वस्तुत: सीता नास्त्येव, किन्तु इयं सीतेति ज्ञानं पूर्ववद्भ्रान्तिरेवेति भाव:।

"विप्रलम्भ:—वञ्चनम्" इति शब्दकल्पद्रुम:।

---

(न) বাসন্তী। মহারাজ! প্রসন্ন হউন, প্রসন্ন হউন ; নিজের অলৌকিক ধৈর্য্যগুণেই অত্যন্তশোকাপন্ন চিত্তকে স্থির করুন। এখানে আমার প্রিয়সখী সীতা কোথায়?

(প) রাম। নিশ্চয়ই নাই ; না হইলে, বাসন্তীও তাঁহাকে দেখিতেছে

---

(१) परिकल्पितनिर्म्मित:। परिकल्पितनिर्म्माता इति पाठान्तरद्वयम्।

सीता। मए ज्जेव दारुणाए विप्पलद्धो अज्जउत्तो (फ)।

वासन्ती। देव! पश्य पश्य—(ब)

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः
पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।
खड्गच्छिन्नजटायुपक्षतिरितः सीतां ज्वलन्तीं वहन्
अन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः॥४३॥

(फ) मयैव दारुणया विप्रलब्ध आर्य्यपुत्रः।

(फ) सीतेति। दारुणया निष्ठुरत्वाद्भीषणया मयैव न त्वन्येन केनचित् प्रमादिनेत्यर्थः आर्य्यपुत्रो विप्रलब्धः प्रतारितः। यतोऽत्र विद्यमानाप्यहं नाश्वासयामीति भावः।

(ब) वासन्तीति। पश्य पश्येति विस्मये द्विरुक्तिः।

पौलस्त्येति। जटायुषा जटायुना विघटितः भग्नः अयं पुलस्त्यस्यापत्यं पौत्र इति पौलस्त्यो रावणस्तस्य कृष्णेन अयसा कालवर्णेन लौहेन कृत इति कार्ष्णायसः रथो विद्यत इति शेषः। पुरतः अस्माकमग्रतः एते दृश्यमानाः पिशाचवद्वदनं येषां ते पिशाचवदनाः नानाविधविकृतमुखा इत्यर्थः कङ्कालशेषाः कालेन मांसादीनां लोपात् अस्थिमात्रावशिष्टाः खराः रावणरथवाहका आकाशचारिणो अश्वतरा विद्यन्ते इति शेषः तत् पश्य। तथा खड्गेन असिना छिन्ने जटायोः पक्षती पक्षमूलद्वयं येन स तथोक्तः अरिः तव शत्रुः रावणः ज्वलन्तीं क्रोधेन उत्तेजितां लावण्यकान्तिद्वारा समुज्ज्वलां वा सीतां वहन् धारयन् अन्तर्मध्ये व्याकुला विचलिता विद्युत् तडित् यस्य स तथोक्तः अम्बुदो मेघ इव इतः अस्मात् निर्द्दिश्यमानादस्मात् स्थानात् द्याम् आकाशं अभ्युदस्थात् उत्थितवान्।

না কেন? তবে কি ইহা স্বপ্ন হইবে? আমি ও নিদ্রিত নহি; অথবা রামের স্বপ্ন কোথায়? নিশ্চয়ই, ইহা সেই বহুবার চিন্তাপ্রসূত শক্তিশালী প্রতারণা, বার বার আমার অনুসরণ করিতেছে।

(ফ) সীতা। দারুণপ্রকৃতি আমিই আর্য্যপুত্রকে প্রতারণা করিয়াছি।

সীতা। (সভয়ম্) অজ্জউত্ত! তাদো বাবাদীঅদি অহম্প অবহরিঅামি, পরিত্তাহি পরিত্তাহি (ভ)।

---

(ভ) আর্য্যপুত্র। তাতো ব্যাপাদ্যতে অহমপ্যপক্রিয়ে, পরিত্রায়স্ব পরিত্রায়স্ব।

অত্রোপমালঙ্কারঃ। অভ্যুত্পূর্বঃ স্যাধাতুরভ্রমিতরূপার্থবাচকতয়া ঊর্দ্ধ্বগমনার্থস্যাবাচক ইত্যবাচকত্বদোষঃ, কিন্তু 'অলঙ্ঘ্যাকুলবিদ্যুদম্বুদনিভঃ স্বর্নভোঽভ্যুত্স্থিত' ইতি পাঠেন নির্দ্দোষঃ।

সন্ন্যাসিবেশধারী রাবণঃ সীতামপহৃত্য রথেনাকাশপথে গন্তুমারেভে, দশরথসখো জটায়ুস্তদবলোক্য যুদ্ধেন রাবণস্য রথং বভঞ্জ শরীরঞ্চ ক্ষতবিক্ষতঞ্চকার, তথা রাবণো মায়াযুদ্ধেন তস্য পক্ষদ্বয়ং ছিত্ত্বা সীতাং জহারেতি রামায়ণী বার্ত্তা। ব্রহ্মণশ্চতুর্থমানসপুত্রস্য পুলস্ত্যস্য পুত্রো বিশ্রবা, তস্য পুত্রো রাবণ ইতি রামায়ণমনুসন্ধেয়ম্।

অত্রৈকস্মিন্নেব শ্লোকে কবিনা সান্তাকারান্তজটায়ুশব্দৌ দর্শিতৌ। তথা চ দ্বিরূপকোষঃ—"জটায়ুশ্চ জটায়ুষা।" "দ্যো দিবৌ দ্বে স্ত্রিয়াবভ্র"মিত্যাদি। "স্ত্রী পক্ষতী পক্ষমূল"-মিতি চামরঃ। শার্দ্দূলবিক্রীড়িতং বৃত্তম্ ॥৪৩॥

(ভ) সীতেতি। তাতঃ পিতৃকল্পস্য শ্বশুরস্য দশরথস্য মিত্রত্বেন তত্স্থানপাতিত্বাত্ পিতা জটায়ুরিত্যর্থঃ, ব্যাপাদ্যতে হন্যতে রাবণেনেতি শেষঃ। পরিত্রায়স্বেতি সম্ভ্রমে দ্বিরুক্তিঃ। মাং জটায়ুঞ্চ রক্ষেত্যর্থঃ।

---

(ব) বাসন্তী। মহারাজ! দেখুন, দেখুন—

জটায়ুকর্ত্তৃক ভগ্ন লৌহময় এই রাবণের রথ রহিয়াছে; দেখুন, পিশাচের ন্যায় মুখ ও কঙ্কালমাত্রাবশিষ্ট এই সকল রাবণের রথের অশ্বতর, সম্মুখে রহিয়াছে এবং শত্রু রাবণ, তরবারিদ্বারা জটায়ুর পক্ষমূল ছেদন করিয়া, দুঃখসন্তপ্তা সীতাকে বহন করতঃ, মধ্য-সঞ্চলিত-বিদ্যুৎ মেঘের ন্যায়, এই স্থান হইতে আকাশে উঠিয়াছিল ॥৪৩॥

(ভ) সীতা। (ভয়ের সহিত) আর্য্যপুত্র! পিতৃস্থানীয় জটায়ুকে হত্যা করিতেছে এবং আমাকেও অপহরণ করিতেছে; অতএব পরিত্রাণ করুন পরিত্রাণ করুন।

राम:। [सवेगमुत्थाय] आः पाप! तातप्राणसीतापहारिन्! क्व यासि? [म]

वासन्ती। अयि देव! राक्षसकुलप्रलयधूमकेतो! अद्यापि ते मन्युविषयः? [य]

(म) राम इति। आ इति कोपसूचकमव्ययम्। पाप! कुलीन परप्राणपरभार्य्यापहरणात् पापयुक्त! तातस्य जटायोः प्राणान् सीताञ्चापहरतीति स तथोक्तः ग्रहादित्वात् णिन्। तत्सम्बोधनम्।

"आस्तु स्यात् कोपपीड़यो"रित्यमरः। पापादिशब्दानां पापयुक्तादौ निरूढ़ा अजहत्स्वार्था लक्षणेति नैयायिकाः। उपादानलक्षणेति आलङ्कारिकाः। तन्मतमनुसृत्यामरसिंहोऽप्याह स्म—"त्रिषु द्रव्ये पापं पुण्यं सुखादि च" इति।

(य) वासन्तीति। राक्षसकुलस्य रावणादिराक्षससमूहस्य प्रलये विनाशे धूमकेतुः अशुभसूचको नक्षत्रविशेषः तत्सम्बोधनम्। यथा धूमकेतूदये लोकानाममङ्गलसूचनं स्यात् तथा रामजन्मन्यपि सति राक्षसकुलस्यामङ्गलसूचनमासीदित्यध्यात्मरामायणे द्रष्टव्यम्। अद्यापि सकलराक्षसानामभावसमयेऽपि ते तव राक्षसवंशध्वंसकर्त्तुरित्यर्थः मन्युविषयः क्रोधविषयः? अपि तु कथमपि नेत्यर्थः इति काकुस्वरेण व्यज्यते।

अत्र निरङ्गं केवलरूपकमलङ्कारः।

"कुलं जनपदे गोत्रे सजातीयगणेऽपि च" इति मेदिनी। "अग्न्युत्पातो धूमकेतू" इत्यमरः। "धूमः केतुरस्य। उत्पातः सधूमतारः" इति रघुनाथः।

धूमकेतोरुदयः प्रायेण लोकानाममङ्गलसूचकः। तथा चाह वराहसंहिताटीकायां भट्टोत्पलः—

"अचिरस्थितोऽतिवृष्टस्त्वस्तमितः स्निग्धमूर्त्तिरुदगुदितः।
ह्रस्वतनुः प्रसन्नः केतुर्लोकस्याभावाय न शुभो विपरीतो
विशेषतः शक्रचापसङ्काशः। द्विशिचतुश्शूलो वा दक्षिणसंस्थश्च मृत्युकरः।"

---

(ম) রাম। (বেগের সহিত উঠিয়া) আ পাপিষ্ঠ! পিতৃস্থানীয় জটায়ুর প্রাণ ও সীতার অপহরণকারী! কোথায় যাইতেছিস্?

सीता। अहो! उम्मत्तिम्र ह्मि सम्वुत्ता [र]।

राम:। अन्वर्थ एवायमधुना प्रलापो वर्त्तते [ल]।

उपायानां भावादविरतविनोदव्यतिकरै-[१]
विमर्दैर्वीराणां जगति जनितात्यद्भुतरस:।
वियोगो मुग्धाच्या: स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरिदानीन्तु विरह: [२] ॥४॥

(र) अहो! उन्मत्तिकास्मि संवृत्ता।

(र) सीतेति। उन्मत्तिका दारुणशोकभयावेगात् उन्मादरोगग्रस्ता। कथमन्यथा अतीतघटनानां वर्त्तमानवत्प्रतीत्या आर्य्यपुत्र! तातौ व्यापाद्यत इत्यादि प्रलपामीति भाव:। उन्मादमाह भावप्रकाशे—

"धीविभ्रम: सत्त्वपरिप्लवश्च पर्य्याकुला दृष्टिरधीरता च।
असम्बद्धवाकत्वं हृदयस्य शून्यं सामान्यमुन्मादगदस्य लिङ्गम्॥"

(ल) राम इति। अयम् 'आ: पाप!' इत्यादि पूर्वोक्तो मम वाक्यविन्यास: अन्वर्थो यथार्थ एव पूर्वमासीदिति शेष:, न तु प्रलाप इति एवशब्दार्थ:। तदानीं जटायुप्राण-सीतापहरणादिघटनानां वास्तविकत्वादिति भाव:। किन्तु अधुना प्रलापो वर्त्तते तदेव वचनं निरर्थकं भवतीत्यर्थ:। जटायुप्राणसीताहरणयोरवास्तविकत्वात् दारुणशोकावेगेन उन्मत्तत्वाच्चेति भाव:।

ज्ञात्वा तर्हि कथं प्रलापं करोषीत्यत आह उपायानामिति। उपायानां सीतोद्धार-

(ष) বাসন্তী। হে মহারাজ! রাক্ষসবংশবিনাশের ধূমকেতু! এখনও আপনার ক্রোধের বিষয় আছে কি?

(র) সীতা। হায়! আমি উন্মত্ত হইয়া পড়িয়াছি।

(ল) রাম। আমার এই উক্তি, তখন অন্বর্থই ছিল; কিন্তু এখন প্রলাপে পরিণত হইয়াছে।

(१) विनोदव्यतिकर इति क्वापि पाठ:। अयं त्वप्रतिविध:। इति पाठभेद:।

सीता। णिरवधिति हा हदम्हि मन्दभाइणी। [इति रोदिति] [व]

(व) निरवधिरिति हा हतास्मि मन्दभागिनी।

साधनानां सन्धिविग्रहादीनां भावात् विद्यमानत्वात् अविरतः अविश्रान्तः विनोदानां मनः-स्फूर्त्तिकराणां सीतोद्धरणाय तदन्वेषणसेतुबन्धनमन्त्रणादिव्यापाराणामित्यर्थः व्यतिकरः परस्परमेलनं येषु तैस्तथोक्तैः वीराणां लक्ष्मणहनूमदादिशूराणां विमर्द्दैः युद्धादिव्यापारैः जगति भुवने जनितः उत्पादितः अत्यद्भुतरसः महानद्भुतनामा रसो येन स तथोक्तः वियोगो विच्छेदः रिपूणां रावणादिशत्रूणां घातो वध एव एष अवधिः शेषसीमा यस्य स तादृशः अभूत् रावणादिवधानन्तरमेव सीता समप्रवश्यमिलनसम्भवादिति भावः। तु किन्तु इदानीमिदानीन्तनः एतत्कालवर्त्तीत्यर्थः विरहः सीताविच्छेदः निरवधिः असीमः अनन्त-कालस्थायीत्यर्थः मृतत्वेन कदाचिदपि पुनर्मेलनासम्भवादिति भावः। अतएव कथं केन प्रकारेण तूष्णीं पूर्ववदुपायाभावात् मौनभावेन सह्यः सोढुं शक्यः स्यात् अपि तु कथमपि नेत्यर्थः। परीवाहन्यायेन दारुणशोकदुःखं रोदनप्रलापादिभिरेव सोढुं शक्यते, न तु पुटपाकन्यायेन मौनभावे भयङ्करसन्तापादत एवं प्रलापं करोमीति भावः।

अत्रोपमानभूतात् पूर्वविरहादुपमेयस्येदानीन्तनविरहस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः, वाक्यार्थहेतुकं काव्यलिङ्गमर्थापत्तिश्च एषामङ्गाङ्गिभावेन सङ्करः। तथा वियोग-शब्दे सत्यपि पुनर्विरहपदोपादानात् दर्पणोदाहृत 'अचुम्बि स'मित्यादिवत् पुनरुक्ततादोषः। तद्वत् सर्वनामशब्देन परामर्शे तु निर्द्दोष एव, तथा च "कथं तूष्णीं सह्यो निरवधिरिदानीं पुनरसा"विति।

साहित्यदर्पणे—"अद्भुतो विस्मयस्थायिभाव" इत्याद्युक्तोऽद्भुतरसो ज्ञेयः।

शिखरिणी वृत्तम् ॥४४॥

---

উপায় ছিল বলিয়া, অবিশ্রান্ত মনঃস্ফূর্ত্তিকর বিবিধ ঘটনামিশ্রিত বীরগণের আড়ম্বরে জগতে অতি আশ্চর্য্য জন্মাইয়া, মনোহরনয়না সীতার সেই বিরহ, শত্রুবিনাশের পরই শেষ হইয়াছিল; কিন্তু বর্ত্তমান সময়ে সীমাবিহীন বিরহকে, আমি নীরবে কি করিয়া সহ্য করিব? ॥৪৪॥

राम:। हा कष्टम् [श]।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्य्यं हरीणां वृथा
प्रज्ञा जाम्ववतोऽपि, यत्र न गति: पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्म्मतनय: कर्त्तुं नलोऽपि क्षम:
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये! क्वासि भो:! [१] ॥४५॥

(व) सीतेति। निरवधि: इदानीन्तनो वियोग: असीमो भवेदित्यर्थ:, इत्यत: मन्द-भागिनी दुर्भाग्यवती अहं हतास्मि, दैवेन विनष्टवत् कृतापि पुनर्विनाशितास्मीत्यर्थ:। आर्य्यपुत्रस्यैव मुखे इदानीन्तनविरहस्य निरवधित्वश्रवणेन पुनर्मेलनाशाया अपि असत्त्वात् जीवन्त्या मम सर्वप्रकारसुखस्यासम्भवादिति भाव:।

(श) राम इति। कष्टम्। अप्रतिविधेयत्वादिदानीन्तनदु:खमसह्यमिति भाव:।

अप्रतिविधेयत्वं समर्थयति व्यर्थमिति। यत्र यस्मिन् स्थाने मे मम कपीन्द्रेण सुग्रीवेण सख्यं मैत्री व्यर्थं लोकान्तरे सैन्यप्रेरणादिसाहाय्यकरणासम्भवान्निष्फलम्। तत्कालीन-विरहे तु लङ्कायां सैन्यप्रेरणादिबहुतरसाहाय्यकरणात् सफलं जातमिति भाव:। यत्र च हरीणां मम सहायीभूतवानराणां वीर्य्यं बलं वृथा लोकान्तरे युद्धकरणासम्भवान्निरर्थकं तत्काले तु भीषणसंग्रामकरणात् सार्थकमेवासीदिति भाव:। यत्र च जाम्ववतोऽपि जाम्ववन्नामकभल्लूकाधिपस्यापि प्रज्ञा तीक्ष्णबुद्धि: वृथेत्यन्वय:। लोकान्तरे बुद्ध्या किमपि साधयितुमशक्यत्वात्, तत्काले तु नानाविधमन्त्रणाकौशलेन अतीवसफला जातेति भाव:। यत्र स्थाने वायो: पुत्रस्यापि महाबुद्धिबलशालिनो हनूमतोऽपि न गति: लोकान्तरे जीवतो जनस्य गन्तुमसामर्थ्यात् अन्वेषणाय गमनं न सम्भवतीत्यर्थ:। तदानीन्तु सीतान्वेषणाय लङ्कायां हनूमतो गमनमासीदेवेति भाव:। यत्र स्थाने विश्वकर्म्मण: तनयो नलोऽपि नलनामा वानरोऽपि मार्गं सेतुबन्धनादिना पन्थानं कर्त्तुं न क्षम: तत्स्थानस्याज्ञातत्वात् न समर्थ:।

(ব) সীতা। সীমাবিহীন, হায়! মন্দভাগিনী আমি মরিয়াছি। (এই বলিয়া রোদন করিতে লাগিলেন।)

(শ) রাম। হায় কি কষ্ট!।

(१) मे इति भिन्न: पाठ:।

सीता। बहु मण्णाविदह्मि तं पुव्वविरहं (घ)।

(घ) बहु मानितास्मि तं पूर्वविरहम्।

तदानीन्तु लङ्कायां गमनाय सेतुनिर्म्माणेन पन्थानमकार्षीद्देवेति भावः। भोः प्रिये! सीते! सुमित्रायाः अपत्यं पुमान् तस्यापि तदानीं शरजालेन सर्ववीरविमर्द्दकस्य महावीरस्य लक्ष्मणस्यापि इदानीं पत्रिणां वाणानाम् अविषये अगोचरे अदृश्यत्वेन पतनायोग्य इत्यर्थः तव तादृशे क्व कस्मिन् स्थाने असि वर्त्तसे तन्निरूपयितुमपि न शक्नोमीत्यर्थः। अतएव इदानीन्तनसीतावियोगदुःखस्य अप्रतिविधेयत्वमिति भावः।

अत्र वर्त्तमानसीताधिष्ठानस्थानस्य अनिरूपणीयत्वं प्रति बहूनां कारणानामुक्तत्वात् समुच्चयोऽलङ्कारः, तेन च तदानीन्तनवियोगादिदानीन्तनवियोगो निरवधिः सुदुःसहश्चेति व्यतिरेकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। तथा सौमित्रेरपि पत्रिणामित्यत्र वर्णपव्यञ्जनसमूहस्य सकृदनेकधासाम्यात् छेकानुप्रासश्चेत्यनयोः संसृष्टिः। तथा पूर्वपूर्ववाक्यवत् "सौमित्रेरपि पत्रिणामविषये" इति वाक्यस्यापि यच्छब्दनिर्द्दिश्यमानत्वं कवेरभिमतं तत्तु सम्मत्यन्तत्वान्नोपपद्यत इति अभवन्मतसम्बन्धदोषः, स च "सौमित्रेरपि पत्रिणां न विषयो यत्, क्वासि तव प्रिये!" इति पाठेन समाधेयः।

अञ्जनानामवानरीगर्भे वायोरौरसेन जातो हनूमान्, तथा ऋतध्वजमुनिशापात् वानररूपिणो विश्वकर्म्मण औरसेन घृताचीनामप्सरोगर्भे जातो नल इति रामायणे वामनपुराणे च द्रष्टव्यम्।

"शुकाहि-कपि भेकेषु हरिर्ना कपिले त्रिषु।" "पत्री रोप इषुर्द्वयो"रिति चामरः।

शार्द्दूलविक्रीड़ितं वृत्तम्॥४५॥

(घ) सीतेति। "निरवधिरिदानीन्तु विरह" इत्यादिना आर्य्यपुत्रवाक्येन तं पूर्व-

যেখানে, বানররাজ সুগ্রীবের সহিত আমার সখিত্বও নিরর্থক, যেখানে বানরগণের বল এবং জাম্ববানের বুদ্ধিও নিষ্ফল, যেখানে বায়ুপুত্র হনূমানেরও গমন সম্ভবপর নহে এবং যেখানে বিশ্বকর্ম্মার পুত্র নলও, পথ নির্ম্মাণ করিতে সমর্থ নহে; হে প্রিয়তমে! লক্ষ্মণেরও বাণের অবিষয় তেমন কোন স্থানে তুমি রহিয়াছ? ॥৪৫॥

रामः। सखि! वासन्ति! सुहृदामिदानीं दुःखायैव रामस्य दर्शनं, तदिदं कियच्चिरं त्वां रोदयिष्यति, तदनुजानीहि मां गमनाय (स)।

सीता। (सोद्वेगं तमसामवलम्ब्य) भअवदि! तमसे! गच्छदि ज्जेव अज्जउत्तो (ह)।

तमसा। वत्से! समाश्वसिहि समाश्वसिहि, नन्वावामप्यायुष्मतोः कुशलवयोर्वर्षवर्द्धनमङ्गलानि (१) सम्पादयितुं भागीरथीपदान्तिकमेव गच्छावः (च)।

---

(ह) भगवति। तमसे! गच्छत्येवार्य्यपुत्रः।

विरहं रावणापहरणजनितं वियोगं बहु मानितास्मि श्लाघ्यतया स्वीकारितास्मि। तदानीं रावणवधानन्तरमेव मिलनात् इदानीन्तु मिलनाशाया अप्यभावादिति भावः।

(स) राम इति। दुःखायैव दुःखजननायैव रामस्य दर्शनं साक्षात्कारः। दुःखितस्य दर्शने सहृदयानां दुःखोत्पत्तेः स्वाभाविकत्वादिति भावः। तत्तस्मात् रामदर्शनस्य दुःखजनकत्वात् इदं रामदर्शनं कर्तृ कियच्चिरं कियन्तं बहुकालम्।

(ह) सीतेति। गच्छत्येव न तु पुनः क्षणकालमपि तिष्ठतीत्येवशब्दार्थः। सीताया हताश्वासतया उक्तिरियम्।

---

(ষ) সীতা। বর্ত্তমান সময়ের বিরহ, সেই পূর্ব্ব বিরহকে শ্লাঘ্য বলিয়া স্বীকার করাইয়াছে।

(স) রাম। সখি! বাসন্তি! এখন রামের সন্দর্শন, বন্ধুজনের দুঃখের জন্যই হইয়া পড়ে। তা এই সন্দর্শন, কত কাল তোমাকে কাঁদাইবে; সুতরাং গমন করিবার জন্য আমাকে অনুমতি কর।

(হ) সীতা। (উদ্বেগের সহিত তমসাকে ধরিয়া) ভগবতি! তমসে! আর্য্যপুত্র কি যাইতেছেনই?

---

(१) वर्षग्रन्थिमङ्गलं इति पाठान्तरम्।

सीता । भअवदि ! पसीद, खणमेत्तं वि दाव दुल्लहं जणं पेक्खामि (क) ।

रामः । अस्ति चेदानीमश्वमेधाय सहधर्म्मचारिणी मे (ख) ।

(क) भगवति ! प्रसीद, क्षणमात्रमपि तावत् दुर्ल्लभं जनं प्रेक्षे ।

(ख) तमसेति । अनुनये ननुशब्दः । आयुर्जीवनकालः, आयुष्मतोः दीर्घायुःशालिनोः अतिशयार्थे मतुप् । वर्षवर्द्धनमङ्गलानि जन्मतिथिकर्त्तव्यमार्कण्डेयपूजादि मङ्गलसाधनकर्म्माणि सम्पादयितुं निर्वाहयितुं भागीरथीपदान्तिकमेव गङ्गाचरणसमीपमेव । गङ्गायाः पूज्यत्वातिशयात् भक्तिविशेषेण पदशब्दप्रयोगः । रामप्रस्थानेन नवीकृतमपि विरहदुःखं वत्सयोः कुशलवयोर्दर्शनेन विस्मर्त्तुं शक्ष्यसि, अथवा इतोऽधिकमतुलमानन्दमेवानुभवितुं शक्ष्यसीति भावः ।

तिथितत्त्वे—"द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् ।
मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा ॥
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ।
प्रह्लादञ्च हनूमन्तं विभीषणमथार्च्चयेत् ॥"

"वर्षवृद्धिर्जन्मदिन"मिति स्मार्त्तः ।

(क) सीतेति । प्रसीद गङ्गासमीपगमनाय क्षणकालं विलम्ब्य मां प्रत्यनुग्रहं कुरु । कथं विलम्बः कर्त्तव्य इत्याह क्षणमात्रमिति । दुःखेनायासेन बहुदैवताराधनादिना लभ्यत इति दुर्ल्लभम् । आर्य्यपुत्रस्य दर्शनलाभो बहुपुण्यजनितो बहुपुण्यजनकश्चेति भावः । अनुरागबाहुल्यात् अधिकदर्शनेच्छया सीताया इयमुक्तिः ।

(ক) তমসা । বৎসে ! আশ্বস্ত হও, আশ্বস্ত হও । ওহে ! আমরাও আয়ুষ্মান্ কুশ ও লবের বর্ষবৃদ্ধির মঙ্গলকার্য্য সম্পাদন করিবার জন্য গঙ্গাদেবীর চরণ সন্নিধানেই যাইব ।

(ক) সীতা । ভগবতি ! প্রসন্ন হউন ; ক্ষণকালমাত্রও দুর্ল্লভজনকে দেখিয়া লই ।

(খ) রাম । অশ্বমেধের জন্য আমার সহধর্ম্মিণী আছেন ।

सीता। (साक्षेपं स्वगतम्) अज्जउत्त! का सा? (ग)

रामः। हिरण्मया सीतायाः प्रतिकृतिः (१) (घ)।

सीता। (सोच्छ्वासं सास्रम्) अज्जउत्त! दाणिं सि तुमं, अम्मए! उक्खाणिदं दाणिं मे परिच्चाअलज्जासल्लं अज्जउत्तेण (ङ)।

---

(ग) आर्य्यपुत्र! का सा?

(ङ) आर्य्यपुत्र! इदानीमसि त्वम्, अहो! उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्य्यपुत्रेण।

---

(ख) राम इति। रामः सीतावियोगदुःखितमात्मानमात्मनैव सान्त्वयति अस्ति चेति। किञ्चेति चार्थः। अश्वमेधाय अश्वमेधयज्ञकरणाय सहधर्म्मचारिणी पत्नीस्थानपातिनीत्यर्थः।

(ग) सीतेति। आक्षेपेण रामवाक्याकर्षणेन सहेति साक्षेपं शङ्कया रामस्य वाक्यसमाप्तिमनपेक्ष्येत्यर्थः। सा तव सहधर्म्मचारिणीत्यर्थः। अस्ति चेत्यादिरामवाक्यश्रवणेन 'तर्हि किमार्य्यपुत्रेण पुनः परिणीता काचि'दिति शङ्काकुलचित्तायाः सीताया उक्तिरियम्। सापत्नभयं हि स्त्रीणां मरणकालेऽपि तिष्ठतीति लोकसिद्धम्।

(घ) राम इति। हिरण्मयी सुवर्णमयी, प्रतिकृतिः प्रतिमूर्त्तिः।

"प्रतिकृतिरर्च्चा पुंसि प्रतिनिधि"रित्यमरः।

"मुख्यालाभे प्रतिनिधिः शास्त्रार्थ" इति आर्षः। तथा च कात्यायनः—

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः॥"

अतएव मुख्यायाः सीताया अलाभेन अश्वमेधे तदीयप्रतिकृतिः प्रतिनिधिरिति बोध्यम्।

(ङ) सीतेति। उच्छ्वासेन मानसोल्लासेन यद्वा निश्वासेन सहेति सोच्छ्वासम्। अस्रेण आनन्दाश्रुणा सहेति सास्रम्। उभयमपि आहेत्यध्याहृतक्रियाया विशेषणम्। त्वं खलु नितान्तसूक्ष्मदर्शितया लोकानां यथायथभावग्राही अनुरूपमानापमानकारी चेति

---

(গ) সীতা। (রামের বাক্যের মধ্যে, স্বগত) আর্য্যপুত্র! কে সে?

(ঘ) রাম। সীতার স্বর্ণময়ী প্রতিমূর্ত্তি।

---

(१) सीताप्रतिकृतिः इति पाठभेदः।

राम:। तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि (च)।

सीता। धण्णा सा, जा अज्जउत्तेण बहु मणाअदि, जा अ अज्जउत्तं विणोदअन्ती आसाणिबन्धणं जादा जीअलोअस्स (छ)।

---

(छ) धन्या सा, या आर्य्यपुत्रेण बहु मन्यते, या च आर्य्यपुत्रं विनोदयन्ती आशा-निबन्धनं जाता जीवलोकस्य।

---

प्रसिद्ध:, तव पूर्वं पतिव्रतां मां चरित्रदोषारोपेण परित्यक्तवानिति तदुभयमपि मम भाग्य-दोषात् तव तुच्छमिव जातम्, इदानीन्तु अश्वमेधानुष्ठानाय ममैव प्रतिमूर्त्त्याश्रयात् यथायथ-भावग्राहित्वम् अनुरूपमानकारित्वञ्चेत्युभयमपि सम्यगेव रक्षितमिति भाव:। अम्मए इति शौरसेन्यां भाषायां विस्मयहर्षसूचकमव्ययं संस्कृते तु तदुभयसूचकस्याव्ययाभावादहोशब्देनानुवाद: कृत: इदानीं सीताप्रतिकृत्यवलम्बनसमये, परित्यागेन चरित्रदोषारोपात् निर्वासनेन या लज्जा सैव शल्यं शङ्कु:, तत् उत्खातम् उन्मीलितम्। दुष्टतया मुख्यस्य अग्राह्यत्वे तत्प्रतिनिधिरपि ग्राह्यत्वासम्भव:, तेन अश्वमेधानुष्ठानाय पवित्रत्वात् मत्प्रतिमूर्त्तिग्रहणेन ममापि पवित्रत्वं स्थिरीकृतमिति भाव:।

(च) राम इति। तत्रापि, वास्तविकसीताया अलाभेन गत्यन्तराभावात् हिरण्मय्यां तत्प्रतिकृतावपि वाष्पदिग्धम् अश्रुस्फीतं चक्षुर्विनोदयामि आनन्दयामि हिरण्मयीं सीता-प्रतिकृतिं पश्यन्नानन्दमनुभवामीत्यर्थ:। अत्र "अस्ति चेदानीमश्वमेधाय सहधर्म्मचारिणी मे हिरण्मयी सीताया: प्रतिकृति"रित्येकं वाक्यं "तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि" इति द्वितीयम्, तदुभयमपि रामेण क्रमेणैवोच्चार्य्यते, किन्तु मध्ये मध्ये यथास्थानं यथा-सङ्गतञ्च सीतावाक्यसन्निवेशवशात् चमत्कारातिशयं पुष्णाति, तथा भागीरथीवरप्रभावात् सीतावाक्यं रामो न शृणोति अथ च तादृक् सन्निवेशवशात् सीतारामयोरयं परस्परालाप-इव प्रतिभातीति महाकविना निबद्धमिदं स्थानमतीवमनोहरमिति भाव्यम्।

---

(ঙ) সীতা। (নিশ্বাসত্যাগের সহিত, অশ্রুপাতপূর্ব্বক) আর্য্যপুত্র! আপনি এখন আপনি হইয়াছেন। আর্য্যপুত্র, এখন আমার পরিত্যাগ-নিবন্ধন লজ্জাশল্য উদ্ধার করিয়াছেন।

(চ) রাম। তাহাতেই অশ্রুস্ফীত নয়নকে আনন্দিত করি।

तमसा। (सस्मितस्नेहास्रं परिष्वज्य) अयि वत्से! एवमात्मा स्तूयते (ज)।

सीता। (सलज्जमधोमुखी स्वगतम्) परिहसिदह्मि भअवदीए तमसाए (झ)।

(झ) परिहसितास्मि भगवत्या तमसया।

(छ) सीतेति। सा हिरण्मयी सीतायाः प्रतिकृतिः धन्या पुण्यवती। या हिरण्मयी सीतायाः प्रतिकृति आर्य्यपुत्रेण बहु मन्यते समाद्रियते यज्ञे सहधर्म्मचारिणीकरणादिति भावः। विनोदयन्ती आनन्दयन्ती सती जीवलोकस्य प्राणिजगतः आशानिबन्धनं रामस्य गृहावस्थितौ या आशा तस्य रक्षणहेतुर्जाता। भार्य्यावियोगदुःखेन रामस्य वानप्रस्थाव-लम्बनसम्भावनैव लोकानामाधिक्येन जाता, किन्तु सम्प्रति यज्ञे सहधर्म्मचरणाय हिरण्मयीं सीताप्रतिकृतिं कृत्वा तामेव सतृष्णनयनः पश्यन्नाश्वसितीति सैव रामस्य महान् सान्त्वनो-पायः, सुतरामधुना गृहे तिष्ठन् राज्यं पालयिष्यतीति सा हिरण्मयीसीताप्रतिकृतिरेव लोकानामाशास्थापनहेतुरिति भावः।

निबध्यतेऽनेनेति निबन्धनं कारणं तस्य विधेयत्वेऽपि "उद्देश्यविधेययोरुद्देश्यवचनत्व-माख्यातस्य" इति वचनात् जातित्यस्य स्त्रीत्वम्। तत्र आख्यातस्य प्रधानक्रियाया इत्यर्थः।

(ज) तमसेति। धन्येत्यादिसीतावाक्यश्रवणजातकौतुकात् स्मितमीषद्धास्यम्, सीतायाः कन्यास्थानपातित्वात् स्नेहः, दुःख। स्वयं तादृगादरयोग्येयं सीता अधुना प्रतिकृत्यादर-मात्रादानन्दतीति शोकादस्रं तैः सह। परिष्वज्य आलिङ्ग्य। एवम् अनया स्वकीय-प्रतिमूर्त्तिप्रशंसया आत्मा स्वो स्तूयते प्रशस्यते। प्रतिबिम्बप्रशंसया बिम्बप्रशंसा अतएव सिद्धेति प्रकारान्तरेण आत्मप्रशंसा क्रियते इति भावः।

---

(ছ) সীতা। সে ধন্য; যাহাকে আর্য্যপুত্র আদর করেন এবং যে আর্য্যপুত্রকে আশ্বস্ত করতঃ, জীবলোকের আশার রক্ষক হইয়াছে।

(জ) তমসা। (ঈষৎ হাস্য, স্নেহ ও অশ্রুপাতের সহিত সীতাকে আলিঙ্গন করিয়া) বৎসে! এইভাবে নিজের প্রশংসা করিতেছ।

वासन्ती । महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति पुनर्यथा कार्य्यहानिर्न भवति तथास्ताम् (१) (ञ) ।

सीता । पड़िउला दाणिं मे वासन्दी संवुत्ता (ट) ।

तमसा । वत्से ! एहि, गच्छावः (ठ) ।

---

(ट) प्रतिकूला इदानीं मे वासन्ती संवृत्ता ।

---

(झ) सीतेति । आत्मप्रशंसा लज्जाकारणमेवेति सलज्जमित्युक्तम् । परिहसिता उपहसितास्मि । कथमन्यथा आत्मा स्तूयते इत्युच्यते इति भावः ।

(ञ) वासन्तीति । तमसासीतयार्वाक्याश्रवणात् 'अस्ति चेदानी'मित्यादिराम-वाक्यस्य च तादृशकरणीयोत्तराभावात 'तदनुजानीहि मां गमनाय' इत्यस्य उत्तरमाह महानित्यादि । अयं व्यतिकरः सम्मेलनम् अस्माकं सम्बन्धे महान् प्रसादः अनुग्रहः, त्वं यत स्वयमागत्य अस्माभिः सह मिलितः तदेवास्मान प्रति महान्तमनुग्रहं कृतवानित्यर्थः पुनः किन्तु गमनं प्रति निजराजधानीगमनविषये, यथा येन प्रकारेण कृतेनेत्यर्थः कार्य्य-हानि कर्त्तव्यघातिर्न भवति, तथा स प्रकार आस्ता भवत् । गन्तुमिच्छा चेद्वर्त्तते तदा गन्तुमर्हसि तत्रास्माकं न क्वापि बाधास्तीति भावः ।

(ट) सीतेति । प्रतिकूला विरोधिनी । आर्य्यपुत्रप्रस्थानानुमतिदानेन अधिककालं यावदार्य्यपुत्रदर्शने विघ्नकरणादिति भावः । एतेन रामदर्शने सीताया अतीव बलवतीच्छा व्यज्यत इति वस्तुना वस्तुध्वनिः ।

---

(ঝ) সীতা । (লজ্জার সহিত অধোমুখী হইয়া স্বগত) ভগবতী তমসা আমাকে পরিহাস করিলেন ।

(ঞ) বাসন্তী । আপনার এই সম্মিলন, আমাদের পক্ষে গুরুতর অনুগ্রহ ; কিন্তু যাহাতে কার্য্যহানি না হয়, আপনার গমনের বিষয়ে তাহা হউক ।

(ট) সীতা । এখন বাসন্তী আমার প্রতিকূল হইয়াছে ।

---

(१) तथास्तु इति पाठान्तरम् ।

सीता। (सकष्टम्) एव्वं करेह्म (ड)।

तमसा। कथं वा गम्यते, यस्यास्तव (ढ)।

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्म्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥४६॥

---

(ड) एवं कुर्व्वः।

---

(ठ) तमसेति। गच्छाव आवां भागीरथीपदान्तिकमिति शेषः।

(ड) सीतेति। एवं भागीरथीपदसमीपगमनमित्यर्थः। इदानीमेव आर्य्यपुत्रः प्रतिष्ठत इति तदन्यकरणीयाभावादिति भावः। दारुणदुःखेन सीताया उक्तिरियम्।

(ढ) तमसेति। कथं केन प्रकारेण, गम्यते त्वयेति शेषः। इदानीं तव गमनमतीवदुःखकरमिति भावः। तत्कारणमाह यस्यास्तवेति।

प्रत्युप्तस्येति। दयिते प्रिये रामभद्रदेहे इत्यर्थः प्रत्युप्तस्येव रोपितस्येव बद्धमूलस्येवेत्यर्थः, तथा तृष्णया बलवद्दर्शनाकाङ्क्षया दीर्घस्य विशालीभूतस्य यस्यास्तव चक्षुषः मर्म्मच्छेदपरैः हृदयविदारकैरित्यर्थः यत्नैः आकर्षणप्रवृत्तिभिः आकर्षः रामदर्शनादाकर्षणं न समाप्यते न विरम्यते, अद्यापि गमनप्रयत्नैश्चक्षुराकृष्यते, चक्षुस्तु दर्शनं विहाय न प्रतिनिवर्त्तितुमिच्छतीत्यर्थः। बलवद्दर्शनाकाङ्क्षया विशालीभूतं तव चक्षुः रामभद्रदेहे बद्धमूलमिव जातं सुतराम् एतावता कालेनापि तस्याकर्षणं न सम्पूर्णं तदाकर्षणे च क्रियमाणे तव हृदयं विदीर्य्यत इवेति सरलार्थः। एतावता कालेनापि तव चक्षुषस्तृप्तिर्न जातेत्यधुनापि सस्पृहं दर्शनं वर्त्तत इत्यतो गमनं तव महादुःखकरमिति भावः।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः।

पथ्यावक्त्रं वृत्तम् ॥४६॥

---

(ঠ) তমসা। বৎসে! আইস, আমরা যাই।

(ড) সীতা। (কষ্টের সহিত) ইহাই করি।

(ঢ) তমসা। কি প্রকারেই বা যাই? যে তোমার—

নয়ন, প্রিয়তম রামের দেহে যেন রোপিত হইয়া পড়িয়াছে এবং দর্শন-

सीता। णमो णमो पुव्वपुस्सजणिददंसणाणं अज्जउत्त-चरणकमलाणं। (इति मूर्च्छति) (ण)।

तमसा। वत्से! समाश्वसिहि समाश्वसिहि।

सीता। (समाश्वस्य) किअच्चिरं व्वा मेहन्तरेण पुस्सिमा-चन्दस्स दंसणं (त)।

(ण) नमो नमः पूर्वपुण्यजनितदर्शनानामार्य्यपुत्रचरणकमलानाम्।

(त) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम्।

(ण) सीतेति। पूर्वैः पूर्वकृतैः पुण्यैर्जनितं दर्शनं साक्षात्कारो येषां तेषां तथोक्तानाम्। चरणानि कमलानि पद्मानीव तेषाम्। अत्र "चतुर्थ्यर्थे षष्ठी"ति सूत्रेण नमःशब्दयोगे प्रसज्यमानचतुर्थ्यर्थे षष्ठी। अनुवादे मूलानुरूपशब्दप्रयोगस्यौचित्यात् तत्रापि षष्ठ्येव प्रयुक्ता। गुरुत्वात् बहुवचनम्। लुप्तोपमालङ्कारः। असाधारणपूर्वकृत-पुण्यैनैव एतद्दर्शनं जातमिति भक्त्यतिशयेन नमस्कृत्य तादृशपरपुण्याभावस्यैव विशेषसम्भवा-दस्मिन् जन्मनि पुनर्दर्शनमसम्भवमेवेति मन्यमाना सीता शोकावेगात् मूर्च्छतीति बोध्यम्।

(त) सीतेति। समाश्वस्य चैतन्यं लब्ध्वेत्यर्थः, ब्रवीतीति शेषः। अहो! नाटकादाविव लोकेऽपि यदि मूर्च्छारोगस्य समाश्वसिहीति प्रयोग एव तत्क्षणात् प्रतिकारकारी भवेत्, तदा महौषधसमायासमसंख्यधनव्ययस्थानकीकृत्य यावज्जनो मूर्च्छति तावदेव समाश्वसिहीति ब्रूयात्, सपदि रोगी चैतन्यं लभेत, प्रचुरतरश्चमत्कारश्च द्रष्टॄणामुत्पद्येत। कथं ममार्य्यपुत्रचरणकमलदर्शनं चिरमेव न स्यादिति पश्यं मनसि कृत्वा पश्चान्तरं भाषया

---

লালসায় দীর্ঘ হইয়া গিয়াছে; সুতরাং মর্ম্মপীড়াজনক চেষ্টা, উহার আকর্ষণ শেষ করিতে পারিতেছে না ॥৪৬॥

(ণ) সীতা। পূর্ব্ব পুণ্যেই যাহার দর্শন ঘটাইয়াছে, আর্য্যপুত্রের সেই চরণকমল উদ্দেশে বার বার নমস্কার করি। (এই বলিয়া মূর্চ্ছিত হইয়া পড়িলেন।)

তমসা। বৎসে! আশ্বস্ত হও, আশ্বস্ত হও।

तमसा। अहो! संविधानकम् (थ)।

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्त्त-वुद्वुद-तरङ्गमयान् विकारा-
नम्भो यथा, सलिलमेव तु तत् समग्रम् (१) ॥४७॥

व्यनक्ति कियदिति। मेघान्तरेण मेघान्तर्धानेन मेघस्यापसरणेनेति यावत् पूर्णिमाचन्द्रस्य दर्शनं कियच्चिरं कियन्तं बहुकालं व्याप्य सम्भवेत् अपि तु बहुकालं व्याप्य न भवेदित्यर्थः। पुनरपि मेघाच्छादनादिति भावः।

अत्र समादप्रस्तुतात् बहुकालपूर्णिमाचन्द्रदर्शनासम्भवात् समस्य प्रस्तुतस्य बहुकालार्य्यपुत्रचरणकमलदर्शनासम्भवस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः अर्थापत्त्या सङ्कीर्णः।

"अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्याद्यमरः।

(थ) तमसेति। अहो आश्चर्य्यं संविधानकं सृष्टिः, विधातुः सृष्टिरसंख्यप्रकारत्वात् अतीवविचित्रा इत्यर्थः।

सम्यग्विधानं संविधानकम्, अज्ञाने कप्रत्ययः।

सृष्टिवैचित्र्यमेवाह एक इति। एक एव करुणो रसः सीताविषयको रामस्य शोक इत्यर्थः, निमित्तभेदात् कारणवैषम्यात् आलम्बनीभूतायाः सीतायाः व्यवहारपार्थक्यादित्यर्थः भिन्नः सन् पृथक् पृथक् विवर्त्तान् भिन्नभिन्नपरिणामान् आश्रयत इव वास्तविकपक्षे तु स एक एव करुणो रस इति। यथा अम्भो जलम् आवर्त्तो जलभ्रमिः (घोला) वुद्वुदो जलस्फोटः (वुडवुडि) तरङ्ग ऊर्म्मिः (ढेउ) तन्मयान् तत्स्वरूपान् विकारान् परिणामान् आश्रयते, न किन्तु तत् आवर्त्तादिकं समग्रं समस्तं वस्तु सलिलमेव तत् जलमेव। यथा

(त) सीতা। (আশ্বস্ত হইয়া) মেঘের অপসরণে কত কালই বা পূর্ণিমাচন্দ্রের দর্শন ঘটিবে?

(থ) তমসা। বিধাতার সৃষ্টি আশ্চর্য্য।

(१) क्वचित् तत् समस्तम् इति पाठान्तरम्।

रामः। अयि विमानराज! इत इतः (द)।

एकमेव जलम्, केनचित् पदार्थेन वेगरोधे सति आवर्त्तरूपपरिणामम् अभ्यन्तरे वायुप्रवेशे सति बुद्बुदाकारताम्, पृष्ठतो वायोराघातेन तरङ्गतां भजते; तथा रामस्य सीताविषयक एक एव शोकः सीताया व्यवधाने विषादरूपेण, मूर्च्छानन्तरस्पर्शे हर्षरूपेण, स्मृतिरूपेण, स्तम्भरूपेण, धृतिरूपेण च परिणमते इति सरलार्थः। अतएव विधातुः सृष्टिरतीवविचित्रेति भावः। सीतारामयोरवस्थां विलोक्य तमसायाः स्वगतवदालोचनेयम्।

अत्र श्रौती उपमालङ्कारः वाच्याक्रियोत्प्रेक्षया सङ्कीर्य्यते। अत्र, करुणो रस इत्युक्तावपि न रसस्य स्वशब्दोक्तिदोषः ताद्दशोक्तिं विना अभिप्रेतार्थस्य बोधयितुमशक्यत्वात्, शोक इत्युक्तावपि न निस्तारः "स्थायिसञ्चारिणोरपि" इत्यनेन स्थायिभावस्य स्वशब्दोक्तिदोषप्रसङ्गात्। अनुभावमुखेन कथने तु अभिप्रेतार्थाबोधनादिति सुधीभिर्विभावनीयम्। किन्तु अम्भो यथा इत्यनेन प्रक्रम्य सलिलमेव इत्युक्तिः "एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत" इति दर्पणोदाहृतवत् प्रक्रमभङ्गदोषः, अपि च, पुनः सलिलशब्दोपादानात् पुनरुक्ततादोषश्च, तेन 'अम्भो यथा, सकलमेव तु तत्तदेवे'ति पाठेन तद्दोषद्वयं निरसनीयम्।

करुणरसलक्षणादिकमनुसन्धेयम्, वसन्ततिलका वृत्तमिति संक्षेपः ॥४७॥

(द) राम इति। सकलव्योमयानानां मध्ये पुष्पकस्य प्राधान्यात् विमानराज इत्युक्तम्। इत इतः अस्मिन्नस्मिन् पथि त्वया गन्तव्यमिति शेषः। वीप्सायां द्विरुक्तिः। गन्तव्यदेशं प्रति गमनवेगमुत्पादयितुं रामेण पुष्पकस्य आरोहीच्छानुरूपगामित्वेन सचेतनपदार्थतुल्यत्वात् सचेतनं प्रतीव तं प्रति आदेशः कृत इति प्रत्येतव्यम्।

अत्र जिज्ञास्यते, प्राचीनार्य्यविज्ञाननैपुण्यमवजानाना इदानीन्तनाः केचन सभ्यम्मन्याः

---

এক করুণ রসই, কারণভেদে ভিন্ন হইয়া, পৃথক্ পৃথক্ পরিণাম অবলম্বন করিতেছে; যেমন জল, আবর্ত্ত (ঘোলা), বুদ্‌বুদ (জলের ফোস্কা) এবং তরঙ্গরূপ বিকার প্রাপ্ত হইয়া থাকে; কিন্তু বাস্তবিকপক্ষে সে সমস্তই জল ॥৪৭॥

(इति सर्वे उत्तिष्ठन्ति) (ध)।

(तमसावासन्त्यौ सीतारामौ प्रति) [न]।

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता।
स च मुनिरनुयातारुन्धतीको वशिष्ठ-
स्त्वयि [१] वितरतु भद्रं भूयसे मङ्गलाय ॥४८॥

---

भारतीयविज्ञानोन्नतिप्रमाणीभूतं पुराणादिवचनं प्रक्षिप्तं मन्यमाना ये पाश्चात्यविज्ञान-गौरवगर्वेण गर्जन्ति, हन्त! ते किमिदमपि रामवाक्यं प्रक्षिप्तं मन्यन्ते?

(ध) इतीति। उत्तिष्ठन्ति स्वस्वगन्तव्यस्थानगमनायेत्यर्थः।

(न) तमसेति। तमसा सीतां प्रति, वासन्ती रामं प्रतीति यथासंख्येनान्वयः।

अवनिरिति। अवनिः पृथिवी, अमरसिन्धुर्गङ्गा, अस्मद्विधाभिः अस्मादृशीभिः किञ्चिन्माहात्म्यवतीभिरिति भावः देवताभिः सार्द्धं सह विद्यमानेति शेषः, तथा य आद्यः प्रथमः छन्दसां वेदोक्तातिरिक्तच्छन्दसां प्रयोक्ता अवतारयिता, स कुलपतिः दशसहस्रमुनीनाम् अन्नदानेन परिपालनपूर्वकमध्यापयिता मुनिर्वाल्मीकिः, तथा अनुयाता धर्म्माचरणाय अनुगता अरुन्धती यस्य स तथोक्तः, स मुनिर्वशिष्ठश्च भूयसे प्रचुराय मङ्गलाय जगतः शुभाय त्वयि सीतायां रामे च भद्रं कल्याणं वितरतु ददातु। राज्ञो मङ्गले सति तदधीनं जगतो मङ्गलमप्यवश्यमेव भवतीति भावः।

अत्र एकया वितरत्विति क्रियया बहूनामप्रस्तुतानामवन्यादीनां कर्त्तृतया सम्बन्धात् तुल्ययोगितालङ्कारः।

"ज्याऽवनिर्मेदिनी मही" इत्यमरः। अमराणां देवानां सिन्धुर्नदी सा सुरसरिद्-गङ्गेत्यर्थः। "सिन्धुर्नद्यां महानदे" इति धरणिः।

---

(द) राम। বিমানরাজ! এই দিক্ এই দিক্ চল।

(ধ) (সকলেই গাত্রোত্থান করিলেন।)

(ন) তমসা সীতার প্রতি এবং বাসন্তী রামের প্রতি।

---

(१) तव इति पाठभेदः।

[इति निष्क्रान्ताः सर्वे]

# इति छाया नाम तृतीयोऽङ्कः (प)।

कुलपतिमाहुः साम्प्रदायिकाः—

"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।

अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥"

आदौ भव आद्यः अपि च ग्रहणात् "नावत्सार्थ्य" इत्यादिना आदिशब्दादयः। मालिनी वृत्तम्॥४८॥

(प) इतीति। छायाया इव रामेणास्पष्टमभिलक्ष्यमाणायाः सीताया घटनावली-निबन्धनादस्याङ्कस्य छायेति नाम कृतं भवभूतिनेति बोध्यम्। तत्र छाया नाम छायेत्यनेन प्रकाश्यः, नाम्ना छायेत्यर्थः।

"नाम प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः।

अभिज्ञानशकुन्तले चतुर्थाङ्क इवास्मिन्नुत्तररामचरितेऽपि तृतीयाङ्कोऽयमतीवचमत्-कारीति समुद्घोषयन्ति काव्यरसिकाः।

इति महामहोपाध्याय-महाकवि-भारताचार्य्य-

श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां-

मुत्तररामचरितटीकायां सर्वार्थबोधिनीसमाख्यायां

तृतीयाङ्कविवरणं समाप्तम्॥०॥

---

আমাদের ন্যায় ব্যক্তির সহিত পৃথিবী ও গঙ্গা এবং যিনি ছন্দের প্রথম প্রয়োগকারী, সেই কুলপতি বাল্মীকি, আর অরুন্ধতীদেবীর সহিত সেই মহর্ষি বশিষ্ঠ, জগতের প্রচুর মঙ্গলের জন্য, তোমার প্রতি (আপনার প্রতি), মঙ্গল দান করুন॥৪৮॥

(ইহার পর সকলে চলিয়া গেলেন।)

(প) ছায়ানামে তৃতীয় অঙ্ক সমাপ্ত।০॥

# चतुर्थोऽङ्कः।

——:०:——

[ततः प्रविशतस्तापसौ]

एकः। सौधातके! दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य। तथाहि—[क]

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादभ्यधिकं [१] तपोवनमृगः पर्य्याप्तमाचामति।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्य्यते ॥१॥

(क) एक इति। भूयिष्ठं यथा स्यात्तथा बाहुल्येनेत्यर्थः सन्निधापिताः निमन्त्रणादिना समुपस्थापिता आनीता इति यावत् अतिथिजनाः आगन्तुकलोका यस्मिन् तस्य तथोक्तस्य, आश्रमपदस्य विशेषणमेतत्। आश्रम एव पदं स्थानं तस्य, समधिकेन प्रचुरतरेण आरम्भेण आतिथ्यसम्पादनार्थमायोजनेन रमणीयता सौन्दर्य्यं दृश्यताम्। केचित् द्रव्याण्यासादयन्ति, केचित् पचन्ति, केचिदागतानभ्यर्थयितुमितस्ततो धावन्ति इत्यादिना महती हुलहुल्लिका वर्त्तत इत्यर्थः। समधिकारम्भं समर्थयति तथाहीति।

"पदं व्यवसिति-त्राण-स्थानलक्ष्माङ्घ्रि-वस्तुषु" इत्यमरः।

---

তদনন্তর দুইটী তপস্বীর প্রবেশ।

(ক) একটী। সৌধাতকি! অধিকসংখ্যক অতিথি উপস্থিত করা হইয়াছে; তাহাতেই অধিক আয়োজন চলিতেছে; তাই আজ ভগবান্ বাল্মীকির আশ্রমের সৌন্দর্য্য দেখ। যেহেতু—

---

(१) अत्यधिकमिति पाठान्तरम्। अभ्यधिकमिति क्वचित् पाठः।

सुधातुरपत्यं पुमानिति सौधातकिः "सुधातुरकङ्च" इति सुधातृशब्दादकङ्चकारादिञ्।

नीवारौदनेति। तपोवनमृगः आश्रमहरिणः सुतरामेव प्रचुरलोकमध्येऽपि निर्भय-प्रचार इति व्यज्यते। सद्यः अचिरं प्रसूता सन्तानं प्रसूतवती, अतएव नितरां पिपासार्त्ता इति भावः, तया प्रियया निजभार्य्यया पीतात् आपिपासानिवृत्तेः निपीतादित्यर्थः अभ्यधिकम् अतिरिच्यमानम् अवशिष्टमिति यावत् उष्णं मधुरञ्च सुस्वादु च नीवारौदनस्य तृणधान्यान्नस्य मण्डं पर्य्याप्तं यथेष्टं यथा स्यात्तथा आचामति पिबति। एतेन बहुलोकभोजनाय प्रचुरान्नपाकान्मण्डस्यापि प्राचुर्य्यं व्यज्यते। सर्पिष्मतः घृताक्तस्य भक्तस्य अन्नस्य स्फुरता प्रसरता गन्धेन सौरभेण मनाक् अल्पं यथा स्यात्तथा अनुसृतः अनुगतः संयुक्त इत्यर्थः कर्कन्धुफलैः बदरीफलैः मिश्राः युक्ता ये शाका वास्तूकादयः तेषां पचनात् पाकादुत्थित इत्यर्थः आमोदः गन्धः परिस्तीर्य्यते सर्वतो व्याप्तो भवतीत्यर्थः। अतएव समधिकारम्भ इति प्रत्येतव्यमिति भावः।

अत्र मृगीमृगकर्त्तृकपर्य्याप्तमण्डपानेन नानासौरभप्रकाशेन च कार्य्येण कारणभूतः पाकादिसमधिकारम्भः प्रतीयत इति पर्य्यायोक्तमलङ्कारः।

"तृणधान्यानि नीवारा" इत्यमरः। उड़ीधान इति बङ्गभाषा, तिनी इति हिन्दीभाषा।) (मण्ड—(माड फेन इति बङ्गभाषा।) "कामं प्रकामं पर्य्याप्तम्।" "किञ्चिदीषन्मना-गल्पे।" "भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीधिविः।" "कर्कन्धूर्बदरी कोली" इति चामरः। सर्पिष्मद्भक्तं (पोलाउ इति प्रसिद्धम्।)

सद्यः प्रसूता चासौ प्रिया चेति सद्यःप्रसूताप्रिया "पुंवन्न प्रियादौ" इति क्रमदीश्वरसूत्रान्न पुंवद्भावः। कलापमतेऽपि प्रियाशब्दस्य पूरण्याद्यन्तर्गतत्वान्न पुंवद्भावः।

शार्दूलविक्रीड़ितं वृत्तम् ॥१॥

---

উড়ীধান্যের তণ্ডুল পাক করা হইতেছে, সেই অন্নের উষ্ণ ও সুস্বাদু মণ্ড (মাড়) নির্গত হইতেছে; সদ্যই সন্তানপ্রসবকারিণী হরিণী সেই মণ্ড পান করিলে পর যাহা অতিরিক্ত থাকিতেছে, তাহা তপোবনের হরিণ পর্য্যাপ্তরূপে পান করিতেছে, আর বদরীফলযুক্ত শাক পাকের সৌরভ,

सौधा। आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिस्सकूच्चाणं [१] [ख]।

प्रथमः। [विहस्य] अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातके! [ग]

---

(ख) आगतमनध्यायकारणं सविशेषभूतमद्य जीर्णकूर्च्चानाम्।

---

(ख) सौधेति। प्रथमतापसेन सौधातक इति सम्बोध्य नाम्ना परिचायितत्वात् द्वितीय इत्यनुक्त्वा सौधातकीतिनाम्ना निर्द्देशं कुर्वन् "एकदेशेन समुदायो गम्यत" इति न्यायात् सौधेतिमात्रं कविरुक्तवान्। अद्य जीर्णकूर्च्चानां पक्वश्मश्रूणाम् अतिवृद्धानामित्यर्थः आगतम् आगमनं सविशेषभूतं नितान्तमित्यर्थः अनध्यायकारणं पाठनिवृत्तिहेतुः जातमिति शेषः। यस्य कस्यचिदतिथेरागमने कश्चित् कस्मिंश्चिदवसरे यत्किमपि अध्येतुमर्हति किन्त्वद्य वृद्धानामागमनात्तेषां तत्त्वावधानार्थं सर्व्वदैव व्यग्रतया सर्व्वस्यैव सर्व्वथैवाध्यायो न भवेदिति ज्ञापनाय सविशेषमित्युक्तम्। वृद्धानामित्यनभिधाय जीर्णकूर्च्चानामित्युक्तः सोपहासेयमुक्तिरिति प्रतीयते।

"कूर्च्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी।

आगतमिति भावे क्तः।

(ग) प्रथम इति। सौधातके! गुरुषु माननीयेषु अभ्यागतेषु ते तव बहुमानस्य आदरस्य हेतुः कारणम् 'आअद' इत्यादि पूर्ववचनमित्यर्थः कोऽपि अनिर्वचनीयः अपूर्वः अद्भुतः। माननीयानामसमक्षे केनचित् विशिष्टशब्देन सम्मानप्रदर्शनमेव समादरकारणं

---

চারিদিকে ব্যাপ্ত হইতেছে এবং ঘৃতসংযুক্ত অবস্থায় পক্ক অন্নের (পোলাউর) সৌরভ অল্প অল্প বাহির হইয়া, পূর্ব্বোক্ত সৌরভের অনুসরণ করিতেছে ॥১॥

(খ) সৌধাতকি। আজ পকশ্মশ্রুদিগের আগমন, বিশেষ অনধ্যায়ের কারণ হইয়া দাঁড়াইয়াছে।

---

(१) आअदं अणीअपिआराणां जिस्सकुच्छाणं अणज्झाअकारणं इति पाठान्तरम्।

सौधा। भो भाण्डायण! किंणामधेओ एसो महन्तस्स त्थविरसत्थस्स (१) धुरन्धरो अज्ज अदिधी आअदो? (घ)

भाण्डायनः। धिक् प्रहसनम्। नन्वयमृष्यशृङ्गाश्रमादरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान् वशिष्ठः प्राप्तस्तत् किमेवं प्रलपसि (ङ)।

---

(घ) भो भाण्डायन! किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्य अतिथिरागतः।

---

स्यात्, तव तु जीर्णकूर्च्चानामित्यनेन परिहासः, अतएव न सङ्गच्छत इति भावः। अभ्यागतस्य गुरुत्वमाह अङ्गिराः—

"गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः॥"

(घ) सौधेति। महती विशालस्य बहुस्थानव्यापकस्येत्यर्थः स्थविरसार्थस्य वृद्धवर्गस्य धुरन्धरः भारवाही श्रेष्ठ इत्यर्थः, किंनामधेयः किंनामकः। अत्र श्रेष्ठ इत्येवमनुक्त्वा धुरन्धर इत्युक्तेरुपहासप्रतीतिः धुरन्धरशब्दस्य भारवाहिनि यौगिकत्वात् वृद्धत्वेन दुर्बले च तदसम्भवादिति बोध्यम्।

(ङ) भाण्डायन इति। सौधातकिना 'भो भाण्डायण' इति सम्बोधनेन नाम्नः परिचायितत्वात् पूर्ववत् 'एकः' 'प्रथमः' इत्यनुक्त्वा भाण्डायन इत्युक्तम्। प्रहसनम् उपहासं धिक् निन्दामीत्यर्थः। कथमित्याह नन्वित्यादि। नन्विति सम्बोधने। अरुन्धती पुरस्कृता अग्रवर्त्तिनी येषां तान्, दारान् भार्य्याः, अधिष्ठाय आश्रित्य नेता भूत्वेत्यर्थः।

---

(গ) প্রথম তপস্বী। (হাস্য করিয়া) সৌধাতকি! গুরুজনদিগের প্রতি তোমার এই সম্মানসূচক বাক্য, অনির্ব্বচনীয় আশ্চর্য্য।

(ঘ) সৌধাতকি। ভাণ্ডায়ন! বিশাল বৃদ্ধগণের ধুরন্ধর হইয়া (সর্দ্দার হইয়া) এই যে অতিথি আজ আসিয়াছেন, উঁহার নাম কি?

---

(१) त्थविरसत्थस्स इति पाठान्तरम्।

सौधा। हुं वसिट्ठा (च)।

भाण्डा। अथकिम् (छ)।

सौधा। मए उण जाणिदं, वग्घो वा विओ वा एसोत्ति (ज)।

---

(च) हुं वशिष्ठ:।

(ज) मया पुनर्ज्ञातम्, व्याघ्रो वा वृको वा एष इति।

---

प्राप्त उपस्थित:। वदस्यात्, किं कथम्, एवम् अनेन प्रकारेण प्रलपसि उपहाससूचकं वाक्यं वदसीत्यर्थ:। सर्वमान्यस्य वशिष्ठस्य उपहासकरणं तवातीवानुचितमतएव निन्दामीति भाव:।

(च) सौधेति। हुमिति प्रश्नसूचकमव्ययम्। वशिष्ठ: किमित्यर्थ:।

"हुं स्यात् प्रश्नवितर्कयो"रित्यजय:।

(छ) भाण्डेति। अथकिमित्येकं सम्मतिज्ञापनार्थमव्ययम्। 'हाँ' इति वङ्गभाषा, 'औरक्या' इति हिन्दीभाषा।

(ज) सौधेति। पुन: किन्तु, ज्ञातं मतम्। एष आगत:। वृक: कुक्कुराकार-व्याघ्रविशेष:। 'केन्दुया वाघ' इति 'घोघ' इति च वङ्गभाषा, 'हुण्डार' इति हिन्दीभाषा। पक्वपिङ्गलवर्णकेश-श्मश्रुबहुतररोमावृतसर्वशरीरत्वं प्रथमं संशयस्य कारणम्। किन्तु आकारवैषम्येण मनुष्यनिश्चयेऽपि व्याघ्रवृकसंशयप्रकाशात् सोपहासोक्तिरियम्।

"कोकस्त्वीहामृगो वृक:" इत्यमर:।

(ঙ) ভাণ্ডায়ন। উপহাস ভাল নহে। ভগবান্ বশিষ্ঠদেব অরুন্ধতীকে অগ্রে করিয়া, তৎপশ্চাৎ মহারাজ দশরথের ভার্য্যাদিগকে লইয়া, ঋষ্যশৃঙ্গের আশ্রম হইতে এই আসিয়াছেন ; তা, কি প্রলাপ বকিতেছ ! ।

(চ) সৌধাতকি। হু, বশিষ্ঠ ! ।

(ছ) ভাণ্ডায়ন। হাঁ।

(জ) সৌধাতকি। আমি কিন্তু মনে করিয়াছিলাম যে, এ একটা বাঘ বা একটা ঘোঘ (কেন্দুয়া বাঘ)।

भाण्डा । आः, किमुक्तं भवति ? (झ)

सौधा । तेण परावडिदेण ज्जेव सा वराइआ कल्लाणिआ मड़मड़ाइदा (१) (ञ) ।

भाण्डा । समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिनः, तं हि धर्म्मसूत्रकाराः समामनन्ति (२) (ट) ।

(ञ). तेन परापतितेनैव सा वराकिका कल्याणिका मड़मड़ायिता ।

(झ) भाण्डेति । आ इति कोपसूचकमव्ययम् । उक्तं त्वयेति शेषः । ब्रह्मर्षिं वशिष्ठं प्रति नैतादृशं वाच्यमिति भावः ।

(ञ) सौधेति । संशयस्य द्वितीयं कारणं निर्द्दिशति तेनेत्यादि । यस्मात् परापतितेनैव उपस्थितेनैव न तु किञ्चिद्विलम्ब्येत्येवशब्दार्थः । वराकिका क्षुद्रत्वेन आत्मरक्षणासामर्थ्यात् शोच्या, कल्याणिका कल्याणिकेति कृतनामधेया मड़मड़ायिता मड़मड इति शब्देन चर्व्विता । अतएव व्याघ्रादिवत् रामायाणतदंष्ट्रत्वात् सहसैव वत्सतरीभक्षणाच्च व्याघ्रत्वकतया सशयो मे नासकृत इति भावः ।

"वराकः । शोचनीयः ।" इति शब्दकल्पद्रुमः ।

अस्थिचर्व्वणेन यः शब्द उत्पद्यते तस्यानुकरणं 'मड़मड़' इति शब्दः, तस्मात् "अव्यक्तानुकरणा"दित्यादिना डाच् प्रत्ययान्तात् "डाच् लोहितादिभ्यश्च" इत्यायिः, ततः कर्म्मणि क्तः ।

(ट) भाण्डेति । गृहमेधिनो गृहस्थाः, मांसेन सह इति समांसो मधुपर्कः

(ঝ) ভাণ্ডায়ন । আঃ, বলা হইতেছে কি ?

(ঞ) সৌধাতকি । তিনি উপস্থিত হইয়াই, সেই ক্ষুদ্র কল্যাণীকে (কল্যাণীনামে বাছুরটাকে) "মড় মড়" করিয়া চর্ব্বণ করিয়াছেন ।

(१) जेण परावड़िदेण ज्जेव सा वराकविला कल्लाणी मड़मड़ाइदा इति पाठान्तरम् । (२) इति हि धर्म्मसूत्रकारा इति पाठान्तरम् ।

पूजोपचारविशेषः प्रदेय इति शेषः, इति इत्यानुपूर्वीकम् आम्नायं वेदं वेदवाक्यमित्यर्थः बहुमन्यमानाः महाप्रमाणत्वेन समाद्रियमाणाः सन्तः श्रोत्रियाय वेदविद्यादिसम्पन्नाय ब्राह्मणाय अभ्यागताय अतिथये सते वत्सतरीम् अत्यल्पवयस्कां गोवत्साम्, वा अथवा, महोक्षं महावृषभम्, वा किंवा, महाजं महान्तं छागं निर्वपन्ति ददति। ननु "समांसो मधुपर्क" इति श्रुत्या देवायैव 'समांसो मधुपर्को दातव्य इत्युच्यते तत्कथं श्रोत्रियाय स दीयत इत्याह तं होति। हि यस्मात् धर्मसूत्रकाराः धर्मशास्त्राणां स्मृतिशास्त्राणां प्रणेतारः मन्वादयः, तं श्रोत्रियाभ्यागसम्प्रदानकं वत्सतर्य्या महोक्षस्य महाजस्य वा निर्वापं समामनन्ति ब्रुवन्ति। अतएव "समांसो मधुपर्क" इति श्रुतेः तदनुवादकपस्मृतिदर्शनात् पितृदेवताऽतिथिसम्प्रदानकसमांसमधुपर्कदानपरत्वमेव बोध्यम्, अतएव वशिष्ठेन मधुपर्कसम्पृक्तमांसं भक्षितमिति दोषाभावात् कथमुपहास इति भावः।

मधुपर्क उक्तः कालिकापुराणे—

"दधि सर्पिर्जलं क्षौद्रं सिते ताभिस्तु पञ्चभिः।
प्रोच्यते मधुपर्कस्तु सर्वदेवौघतुष्टये॥"

श्रोत्रियमाह देवलः—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्॥"

आतिथ्ये पशुहिंसामाह स्मृतिः—"पितृदेवातिथिपूजायां पशुं हिंस्यात।"

मनुश्च—"मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि।
अत्रैव च पशुं हिंस्यात् नान्यथेत्यब्रवीन्मनुः॥"

तत्रापि गोमांसदानमाह वशिष्ठः—"अथापि ब्राह्मणाय राजन्याय वा अभ्यागताय वत्सतरीं वा महोक्षं वा महाजं वा पचेदेवमस्यातिथ्यं कुर्वन्ति।"

कलियुगे तु मधुपर्के पशुहिंसा निषिद्धा। तथा च उद्वाहतत्त्वधृतं वृहन्नारदीयपुराणम्—

"देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥
* * *
इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः॥"

सौधा। भो! णिग्गिहीदोसि (ठ)।

भाण्डा। कथमिव (ड)।

सौधा। जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा, अज्ज एव्व पच्चागदस्स राएसिणो जणअस्स भअवदा वम्मीएणवि दहिमहुहिं एव्व णिव्वत्तिदो महुवक्को, वच्छदरी उण विसज्जिदा (ढ)।

---

(ठ) भोः! निगृहीतोऽसि।

(ढ) येन आगतेषु वशिष्ठमिश्रेषु वत्सतरी विशसिता, अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिनापि दधिमधुभिरेव निर्वर्त्तितो मधुपर्कः, वत्सतरी पुनर्विसृष्टा।

"मांसादनं गोमहिषादे"रिति स्मार्त्तः, अतएव तद्भक्षणमपि निषिद्धम्। आम्नायते अभ्यस्यते धर्म्मो यस्मात् स आम्नायः "इङ्भ्याञ्चे"ति घञ्। गृहैर्दारैर्मेधन्ते सङ्गच्छन्ते इति गृहमेधिनः गृहस्थाः।

"श्रुतिः स्त्री वेद आम्नाय" इत्यमरः। "गृहमेधी। गृहस्थ" इति शब्दकल्पद्रुमः।

(ठ) सौधेति। निगृहीतोऽसि पराजितोऽसि मयेति शेषः।

(ड) भाण्डेति। कथमिव 'कैमन धारा' इति वङ्गभाषा।

(ढ) सौधेति। आत्मना वाक्यविचारे सामान्यत उक्तं भाण्डायनपराजयं विशेषेण समर्थयति येनेति। येन हेतुना। वशिष्ठमिश्रेषु ब्रह्मर्षिश्रेष्ठेषु वशिष्ठेषु। विशसिता व्यापादिता मधुपर्कार्थमिति शेषः। किन्तु अद्यैव न तु दिनान्तरे इत्येवशब्दार्थः,

---

(ট) ভাণ্ডায়ন। "মাংসের সহিত মধুপর্ক দিবে" এই বেদবাক্যের বিশেষ আদর করিয়া গৃহস্থগণ, অভ্যাগত শ্রোত্রিয় ব্রাহ্মণকে ক্ষুদ্র গরুর বাছুর কিংবা বৃহৎ বৃষ অথবা বৃহৎ ছাগল দিয়া থাকেন। যেহেতু, মনুপ্রভৃতি ধর্ম্মশাস্ত্রকারগণ সেইরূপ দান ধর্ম্মশাস্ত্রে বলিয়াছেন।

(ঠ) সৌধাতকি। ওহে! তুমি পরাজিত হইলে।

(ড) ভাণ্ডায়ন। কি রকম?

**भाण्डा। अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते, निवृत्तमांसस्तु तत्रभवान् जनकः (ग)।**

दिनान्तरे विस्मरणसम्भावना स्यात् किन्तु नात्र तथेति भावः। प्रत्यागतस्य उपस्थितस्य। वाल्मीकिनापि अनभिज्ञजने सम्यक् शास्त्रार्थावधारणाभावात् वैषम्यमपि घटेत, किन्तु अभ्रान्तचित्तेन सम्यग् वेदविदा वाल्मीकिनापीति अपिशब्दार्थः। निर्वर्त्तितः निष्पादितः। पुनः किन्तु, विसृष्टा मधुपर्कात् परित्यक्ता। "समांसो मधुपर्क" इति श्रुत्यनुसारेण यदि मधुपर्के वशिष्ठाय वत्सतरी दत्ता भवेत् तदा जनकायापि सा दत्ता स्यात्, किन्तु स्वयं वाल्मीकिनैव तद्दानात् सा श्रुतिर्नातिथिविषयेति त्वं मया पराजितोऽसीति भावः। उत्तरपदे मिश्रशब्दस्य श्रेष्ठार्थत्वं शब्दकल्पद्रुमे द्रष्टव्यम्।

विशसितेति "शस हिंसाया"मित्यस्य प्रयोगः। जनकस्येति सम्बन्धमात्रे षष्ठी। दधिमधुभिरिति बहुवचनेन घृतसंग्रहः। तथा च संयुक्तस्य त्रितयस्यापि मधुपर्कत्वमाह तन्त्रसारधृतं वचनम्—

"आज्यं दधिमधुमिश्रं मधुपर्कं विदुर्बुधाः।"

(ग) भाण्डेति। न निवृत्तं मांसं मांसभोजनं येषां तेषाम् अनिवृत्तमांसानां मांसभोजिनां जनानामित्यर्थः सम्बन्धे एवं कल्पं मधुपर्के मांसदानविधिम्, मन्यन्ते "समांसो मधुपर्क" इति श्रुतिं श्रुत्यन्तरेण मांसाभोजिभ्यो मांसदाननिषेधात् मांसभोजिसम्प्रदानपरतयैवावधारयन्तीत्यर्थः। तु किन्तु तत्रभवान् पूज्यः जनकः निवृत्तमांसः मांसभोजनं परित्यक्तवानित्यर्थः। अतएव मांसभोजिने वशिष्ठाय मधुपर्के मांसं दत्तम्, निरामिषाशिने जनकाय तु केवलाज्यदधिमधुभिरेव मधुपर्को दत्त इति न "समांसो मधुपर्क" इति श्रुतेरतिथिभिन्नपरत्वं न वा वशिष्ठजनकाभ्यां मांसदानादानयोस्तत्र काचिदप्यापत्तिरस्तीति नाहं त्वया शास्त्रविचारे पराजितोऽस्मीति भावः।

(ঢ) সৌধাতকি। যেহেতু, বশিষ্ঠ আসিলে, গোবৎসা হত্যা করা হইল; কিন্তু অদ্যই রাজর্ষি জনক আসিয়াছেন, তাঁহার জন্য ভগবান্ বাল্মীকিই দধি ও মধুদ্বারাই মধুপর্ক সম্পাদন করিয়াছেন; কিন্তু গোবৎসা ছাড়িয়া দিয়াছেন।

सौधा। किं णिमित्तं ? (त)

भाण्डा। स तद्दैव सीतादेव्यास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः, तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य (थ)।

---

(त) किं निमित्तम् ?

---

भोजनाय मधुपर्कादौ दत्तस्य मांसस्याभोजने मनुना दोषाभिधानात् वशिष्ठेन मधुपर्के दत्तं मांसं भुक्तम्। तथा च मनुः—

"नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥
न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥"

जनकस्तु वैखानसनियमवान् इति निरामिषाशी। तथा च यमः—

"भक्षयेत प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया।
दैवे नियुक्तः श्राद्धे वा नियमे च विवर्जयेत॥"

(त) सौधेति। किं निमित्तं जनको निवृत्तमांस इत्यर्थः। किं निमित्तमिति निवृत्तक्रियाविशेषणम्।

(थ) भाण्डेति। स जनकः, तद्दैव निर्वासनाव्यवहितपरकाल एव, तादृशम् अतिदारुणमित्यर्थः। दैवस्य अदृष्टस्य दुर्विपाकं दुष्टपरिणामं वने निर्वासनमित्यर्थः, उपश्रुत्य लोकपरम्परया आकर्ण्य वैखानसः वानप्रस्थः। चन्द्रद्वीपतपोवने चन्द्रद्वीपाख्यस्य कस्यचित् स्थानस्य कस्मिंश्चिदाश्रमे तथा वैखानसरूपेण तपस्तप्यमानस्य तपस्यां कुर्वतः, अस्य जनकस्य कतिपये संवत्सराः कियन्तो वत्सराः अतीता इति शेषः।

---

(ণ) ভাণ্ডায়ন। যাঁহারা মাংস বর্জ্জন করেন নাই; (অর্থাৎ মাংস ভক্ষণ করেন) তাঁহাদের জন্য ঋষিরা এইরূপ কর্ত্তব্য (মাংস দান কর্ত্তব্য) মনে করেন; কিন্তু মহারাজ জনক মাংস ত্যাগ করিয়াছেন।

(ত) সৌধাতকি। কি নিমিত্ত (মাংস ত্যাগ করিয়াছেন)?

सौधा। तदो किंत्ति आअदो ? (द)

भाण्डा। चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुम् (ध)।

सौधा। अवि अज्ज सम्बन्धिणीहिं समं संवुत्तं से दंसणं णवत्ति ? (न)

---

(द) ततः किमित्यागतः ?

(न) अपि अद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति ?

दैवमाह याज्ञवल्क्यः—"तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम्।" पूर्वजन्मकृतं पापं पुण्यं वा इह जन्मनि अभिव्यक्तं फलजननोन्मुखीभूतं सत् दैवमिति कथ्यत इत्यर्थः।

"वानप्रस्थो वैखानसोऽग्रहः" इति त्रिकाण्डशेषः।

तत्र वानप्रस्थो द्विविधः, पचमानकोऽपचमानकश्च; तत्र जनकः अपचमानकः मांसादिवर्ज्जनात। तथा चैकादशीतत्त्वधृतबौधायनवचनम्—

"वानप्रस्थानाममांसव्रतीना"मित्यादि।

(द) सौधेति। किं कस्मात् ततः; ततस्तस्मात चन्द्रद्वीपतपोवनादित्यर्थः।

(ध) भाण्डेति। चिरन्तनः बहुकालीनः प्रियसुहृत प्रियसखः तं प्राचेतसं वाल्मीकिम्। चिरं भव इति चिरन्तनः "सायं चिर"मित्यादिना तनट्।

(न) सौधेति। अपिशब्दः प्रश्ने। सम्बन्धिनीभिः वैवाहिकीभिः कौशल्यादिभिः समं सह, अस्य जनकस्य, दर्शनं साक्षात्कारः।

(প) ভাণ্ডায়ন। তিনি (জনক), সীতাদেবীর সেইরূপ দৈবদুর্বিপাক শুনিয়া, তখনই বানপ্রস্থাশ্রমী হইয়াছেন এবং চন্দ্রদ্বীপ-তপোবনে তপস্যা করিতেছিলেন, এই অবস্থায় তাঁহার কয়েক বৎসর গিয়াছে।

(দ) সৌধাতকি। সেখান হইতে আসিলেন কেন ?

(ধ) ভাণ্ডায়ন। বহুকালের প্রিয়সুহৃদ্ বাল্মীকিকে দেখিতে।

(ন) সৌধাতকি। আজ বেহাইনদের সহিত ইঁহার দেখা হইয়াছে কি না ?

भाण्डा। सम्प्रत्येव भगवता वशिष्ठेन देव्याः कौशल्यायाः सकाशं भगवत्यरुन्धती प्रहिता, यत् स्वयमुपेत्य वैदेहो द्रष्टव्य इति वक्तुम् (प)।

सौधा। जधा एदे त्थविरा परप्परमिलिदा, तधा अम्हे वि वटुकेहिं समं मिलिअ अणज्झाअमहूसवं खेलन्ता सम्भावेम्ह। (इति परिक्रामतः) (फ)।

---

(फ) यथा एते स्थविराः परस्परमिलिताः, तथा वयमपि वटुकैः समं मिलित्वा अनध्यायमहोत्सवं खेलन्तः सम्भावयामः।

---

(प) भाण्डेति। स्वयम् आत्मना, न तु केनचित् प्रतिनिधिनेत्यर्थः तथात्वे यत्नसमादरशोकानां लाघवप्रतीतिः स्यादिति भावः। उपेत्य गत्वा वैदेहः विदेह-देशाधिपतिर्जनकः, द्रष्टव्यः साक्षात्कर्त्तव्य, इति वक्तुं सम्प्रत्येव न तु पूर्वमित्यर्थः। प्रहिता प्रेरिता। अतएव इदानीमपि जनकस्य कौशल्यादिभिः सह साक्षात्कारो न जातः, किन्तु सम्भवत इतः परं भविष्यतीति भावः।

(फ) सौधेति। स्थविरा वृद्धाः जनकवशिष्ठादयः। वटुकैः अपरापरबालकैः। अनध्याये पाठनिषेधदिवसे चिरमनुष्ठितो यो महोत्सवः महानन्दकरव्यापारः तम्, खेलन्तः खेलां कुर्वन्तः सम्भावयामः सम्मानयामः, अस्मिन्ननध्यायदिवसे चिरानुष्ठितखेलारूपं महोत्सवं कर्म्म इत्यर्थः। छात्रा हि अनध्यायदिवसागमे ब्रह्मानन्दमनुभवन्ति। परिक्रामतः, सौधातकिभाण्डायनौ गन्तुं पादविक्षेपं कुरुत इत्यर्थः।

"बालको मानवो बालः किशोरो वटुरित्यपि" इति शब्दरत्नावली।

वटुक इति अल्पार्थे कप्रत्ययः।

---

(প) ভাণ্ডায়ন। "নিজে উপস্থিত হইয়া জনকের সহিত দেখা করিবে" এই কথা বলিবার জন্য ভগবান্ বশিষ্ঠদেব এখনই ভগবতী অরুন্ধতীকে কৌশল্যাদেবীর নিকট পাঠাইয়াছেন।

(ফ) সৌধাতকি। এই বৃদ্ধগণ যেমন পরস্পর মিলিত হইয়াছেন,

भाण्डा। तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतस-वशिष्ठावुपास्य सम्प्रत्याश्रमवहिर्वृक्षमूलमधितिष्ठति; य एषः—(ब)

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्तःप्रसृप्तदहनो (१) ज्वलन्निव (२) वनस्पतिः ॥२॥

---

(ब) भाण्डेति। स चासौ अयञ्चेति तदयं सोऽयमित्यर्थः। ब्रह्मवादी वेदवक्ता, पुराणः प्राचीनः, राजा सन् ऋषिः राजर्षिः। प्राचेतसवशिष्ठौ वाल्मीकिवशिष्ठौ उपास्य साधानकारालापादिना सन्तोष्येत्यर्थः। य एष इत्यस्य श्लोकस्थतप्यत इत्यनेनान्वयः। "वेदस्तत्त्वं तपोब्रह्म" इत्यमरः।

वृक्षमूलमिति "आधारोऽधिशीङ्स्थासस्थां प्रौव्ये" इत्यनेन अधिकरणस्य कर्म्मत्वम्।

हृदीति। अन्तरभ्यन्तरे प्रसृप्तः परिव्याप्तः दहनो वह्निर्यस्य स तथोक्तः, अतएव ज्वलन् दीप्यमानो वनस्पतिः शमीवृक्ष इव य एष जनकः हृदि चित्ते नित्यानुषक्तेन चिरावस्थितेन सततमनुभूयमानेनेत्यर्थः सीतायाः शोकेन निर्वासनदुःखेनेत्यर्थः तप्यते सन्तापमनुभवन्ति।

अत्र श्रौत्युपमालङ्कारः। तथा साधारणवनस्पतीनामभ्यन्तरे वह्निसम्भवो नास्त्येव किन्तु वनस्पतिविशेषस्य शमीरूपस्यैव, तेन विशेषे वक्तव्ये साधारणस्योक्तत्वात् विशेषे अविशेषाख्य-दोषः, स च "ज्वलन्निव शमीद्रुमः" इति पाठेन समाधेयः।

पथ्यावक्त्रं वृत्तम् ॥२॥

---

আমরাও সেইরূপ অন্যান্য বালকদের সঙ্গে মিলিত হইয়া, খেলা করতঃ, অনধ্যায়মহোৎসবের সম্মাননা করিব। (ইহার পর উভয়ে পাদক্ষেপ করিতে লাগিল।)

(ব) ভাণ্ডায়ন। সেই বেদবক্তা প্রাচীন রাজর্ষি জনক বাল্মীকি ও বশিষ্ঠের সেবা করিয়া, এখন আশ্রমের বাহিরে বৃক্ষমূলে এই অবস্থান করিতেছেন; যে ইনি—

---

(१) अन्तःप्रदीप्तदहन इति पाठान्तरम्। (२) जरन्निवेति पाठभेदः।

(इति निष्क्रान्तौ) । (भ)

## विष्कम्भकः । (म)

(ततः प्रविशति जनकः)

जनकः । अपत्ये यत्तादृग् दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्म्माणि क्रकच इव मन्युर्विरमति ॥३॥

---

(भ) इतीति । निष्क्रान्तौ, सौधातकिभाण्डायनौ रङ्गालयादिति शेषः ।

(म) विष्केति । विष्कम्भकलक्षणादिकमुक्तम् । मध्यमपात्राभ्यां सौधातकिभाण्डायनाभ्यामृषिकुमाराभ्यां प्रयोजितत्वात् अयं शुद्धो विष्कम्भकः । तथा च साहित्यदर्पणे:—

"मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः शुद्धः स्यात्— ।"

अत्र "स तदैव सीतादेव्यास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः" इत्यादिना "नन्वयमृष्यशृङ्गाश्रमा"दित्यादिना च वृत्तकथांशानां निदर्शनम्, तथा "सम्प्रत्येव भगवता वशिष्ठेन" इत्यादिना वर्त्तिष्यमाणकथांशानाञ्च निदर्शनं बोध्यम् ।

अपत्य इति । अपत्ये सन्तानरूपायां सीतायां तादृक् अतिदारुणं यत् दुरितं पापं पूर्वपापजनितनिर्वासनदुःखमित्यर्थः । अभवत्, महता विशालेन, तीव्रेण तीक्ष्णेन, व्रणितं क्षतं हृदयं वक्षो यस्मात् तेन, व्यथयता पीडयता तेन दुरितेन सीताया निर्वासनदुःखेनेत्यर्थः विषक्तः हृदये गाढं निहितः, पटुः विदारणसमर्थः धारया अविच्छिन्नप्रवाहेण निशिताग्रभागेन च वहति प्रचरतीति धारावाही सर्वदाऽवस्थितः, शितधारश्चेत्यर्थः, तथा चिरेणापि कालेन बहुकालेनातीतेनापीत्यर्थः । नव इव प्रतिदिनं नूतन इव मे मम

---

যাহার অভ্যন্তরে অগ্নি ব্যাপ্ত হয়, সন্তপ্যমান সেই বৃক্ষের ন্যায় সর্ব্বদাই হৃদয়ে অবস্থিত সীতার শোকে সন্তপ্ত হইতেছেন ॥২॥

(ভ) (ইহার পর উভয়ে চলিয়া গেল ।)

(ম) বিষ্কম্ভক ।

कष्टम्, एवं नाम जरसा दुःखेन च दुरासदेन भूयः पराक-सान्तपनप्रभृतिभिस्तपोभिरात्तरसधातुरनुपयुज्यमानो (१)

मन्थ : सीताशोकः, क्रकच इव करपत्रमिव (करात इति यस्य वङ्गभाषा) मर्म्माणि हृदय-सन्धिस्थानानि निकृन्तन् छिन्दन् विदारयन्नित्यर्थः नहि नैव विरमति निर्वाणं गच्छति। सर्वस्यापि पदार्थस्य कालेन लोपसम्भवेऽपि सीताशोकोऽयम् इदानीमपि प्रतिदिनं नूतन इव सन् मां दहतीति भावः।

अत्र पूर्णोपमालङ्कारः। तथा नव इवेति भावाभिमानिनी वाच्या गुणोत्प्रेक्षा च, इत्यनयोरङ्गाङ्गिभावेन सङ्करः। हिशब्द एवार्थे तस्य च नञा अन्वयः, तेन न निरर्थकता-दोषः। नञसममभिव्याहाराच्च न अक्रमतादोषोऽपि।

"क्रकचोऽस्त्री करपत्रम्।" "मन्यु र्दैन्ये क्रतौ क्रुधि" इति चामरः।

व्रणं मर्म्मास्येति व्रणितं तारकादित्वादितच्। चिरेणेत्यव्ययं ततोऽपवर्गार्थे जातायास्तृतीयाया "अव्ययाच्चे"ति लोपः।

शिखरिणी वृत्तम् ॥२॥

(ग) कष्टमित्यादि। कष्टम् अहो दुःखमित्यर्थः, कष्टमित्युच्चार्य्य निश्वसितमिति बोध्यम्। दारुणं दुःखमिदमिति भावः। एव नाम एवम्भूतेन सुस्पष्टेनेत्यर्थः, जरसा वार्द्धकेन, दुरासदेन दुःसहेन च सीताशोकजनितेनेत्यर्थः, भूयः पुनरपि पराको द्वादशाहोपवाससाध्यो व्रतविशेषः सान्तपनं त्र्यहसाध्यो व्रतविशेषः, पराकसान्तपने प्रभृती

(তদনন্তর জনকের প্রবেশ।)

জনক। সন্তান সীতার সেইরূপ যে নির্ব্বাসনদুঃখ হইয়াছিল; বিশাল, তীব্র, হৃদয়ের ক্ষতজনক ও বেদনা উৎপাদক সেই দুঃখে আমার যে শোক জন্মাইয়াছে, তাহা হৃদয় বিদারণ করিতে সমর্থ হইতেছে, নিরবচ্ছিন্নভাবে চলিতেছে, বহুকাল গেলেও নূতন বলিয়া বোধ হইতেছে এবং করাতের ন্যায় মর্ম্মস্থান ছেদকরতও বিরত হইতেছে না।৩॥

(१) अनवष्टम्भ इति पाठान्तरम्।

नाद्यापि मे दग्धदेहः पतति। अन्धतामिस्रा ह्यसूर्य्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते। अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावना स्पष्टनिर्भासः (१) प्रत्यग्र इव दारुणो न मे दुःखसंवेगः

आदौ येषां तैः, तपोभिर्बहुभिर्नानाविधव्रतोपवासादिभिरित्यर्थः आत्ता गृहीताः शोषिता इत्यर्थः रसधातवः देहस्थाः द्रवपदार्था रसाः मांसादयश्च धातवो यस्य स तथोक्तः, अनुपयुज्यमानः अनुपयुक्तः क्षीणदुर्बलत्वात् सर्वस्मिन्नेव राज्यशासनपरिभ्रमणादिव्यापारे असमर्थ इत्यर्थः। दग्धो दग्धवन्निःसारः देहो न पतति न नश्यति। अविरतमेव दारुण-दुःखमनुभवति ममेदानीं मरणमेव श्रेय इति भावः।

ननु तर्हि आत्महत्यैव क्रियतामित्याह अन्धेत्यादि। हि यस्मात् ये जना आत्मघातिनो भवन्तीति शेषः, तेभ्यो जनेभ्यः, अन्धम् अन्धङ्करणं तामिस्रम् अन्धकारसमूहो येषु ते, असूर्य्याः सूर्य्यालोकशून्याः सर्वप्रकारालोकरहिता इत्यर्थः, नाम असूर्य्या इति नाम्ना प्रकाशिता इत्यर्थः, ते प्रसिद्धाः, लोकाः स्थानानि, प्रतिविधीयन्ते निर्द्दिश्यन्ते विधात्रेति शेषः। अतएवात्महत्यापि कर्त्तुं न शक्यत इति भावः।

अहो! किञ्चित् प्रतीक्ष्यताम्, कालेन सर्वस्यैव क्षयात् तवापि शोकक्षयो भविष्यतीत्याह अनेकेत्यादि। प्रतिक्षणं परिभावनया सीताचिन्तया स्पष्टः व्यक्तः निर्भासः प्रकाशो यस्य

(ख) হায় কি কষ্ট! এইরূপ বার্দ্ধক্য এবং দুঃসহ দুঃখ, আবার পরাক ও সান্তপন প্রভৃতি তপস্যা, আমার দেহের সমস্ত রস ও ধাতু শুকাইয়া ফেলিয়াছে; তাহাতে এই দেহ, সকল কার্য্যেই অনুপযুক্ত হইয়া পড়িয়াছে; তথাপি এই পোড়া দেহ, আজও ধ্বংসপ্রাপ্ত হইতেছে না। যাহারা আত্মঘাতী হয়, বিধাতা তাহাদের জন্য সূর্য্যালোকশূন্য অন্ধতামিস্রনামে প্রসিদ্ধ নরক নির্দ্দিষ্ট করেন। ঋষিরা এইরূপ মনে করেন। অনেক বৎসর অতীত হইলেও, আমার সেই শোকের আবেগ, চিন্তামাত্রেই প্রত্যেক

(१) प्रतिक्षणपरिभावनया स्पष्टनिर्भास इति पाठभेदः।

प्रणश्यति। अयि मातर्देवयजनसम्भवे देवि सीते! ईदृशस्ते निर्म्माणभागः परिणतः, येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते। हा हा पुत्रि! (य)

स तथोक्तः, प्रत्यग्र इव नूतन इव, प्रतीयमान इत्यर्थः। प्रणश्यति नश्यति। अतः कालेनापि अस्य शोकस्य चयाशा सुदूरपराहतेवेति भावः।

ईदृशः एवम्प्रकारः, कुत्सितापवादेन निर्वासनादरण्ये एकाकिन्याः शोचनीयमरणान्वित इत्यर्थः, ते तव निर्म्माणभागः सृष्टेरंशः जीवनशेषभाग इति तात्पर्य्यम्। येन तादृश-परिणामेन हेतुना। स्वच्छन्दम् इच्छानुरूपम्, आक्रन्दितुं रोदितुम्। चरित्रदोषाप-वादेन निर्वासितायाः निमित्तं रोदने तत्सहानुभूतिप्रकाशेन दुश्चरित्रताप्रश्रयदानप्रकाशात् महती निन्दा स्यादिति भावः।

"गुणे रागे द्रवे रस" इत्यमरः। "धातुः स्वाद्रसरक्तादा"वित्यजयः। "प्रत्यग्रोऽभिनवो नव्यः।" "अभिप्रायश्छन्द आशय" इति चामरः।

तमिस्राणामिदं वृन्दमिति तामिस्रम् अन्धकारसमूहः "तस्येद"मित्यण्। तेभ्य इति तादर्थ्ये चतुर्थी।

पराकव्रतमाह मनुः—"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्।
पराको नाम कृच्छ्रोऽयं सर्व्वपापापनोदनः॥"

सान्तपनमाह याज्ञवल्क्यः—"कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृद्घृतम्।
प्राश्यापरेऽह्नि उपवसेत् कृच्छ्रं सान्तपनं चरन्॥"

"वैधर्म्म्ये त्वसप" इति प्रायश्चित्ततत्त्वादौ स्मार्त्ताभिप्रायः।

आत्मघातिनां गाढान्धकारावृतासूर्य्यनामकनरकप्राप्तिरुक्ता वाजसनेयसंहितायाम्। यथा—

"असूर्य्या नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥"

---

ক্ষণে স্পষ্টরূপে প্রকাশিত হইতে থাকে এবং নূতনের ন্যায় ভীষণ হইয়া, (কিছুতেই বিরত হয় না। হায় মা! যজ্ঞভূমিসমুৎপন্নে! দেবি!

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जु (१) जल्पितं ते ॥४॥

अनियतेति। अनियते अनिर्द्दिष्टे रुदितस्मिते क्रन्दनहास्ये यस्मिन् तत् तथोक्तं, विनैव इदानीमेव रुदत् इदानीमेव च हसदित्यर्थः, तथा विराजन्ति शोभमानानि कतिपय-कोमलदन्ताः कियत्संख्यकसुकुमारदशनाः कुड्मलाग्राणि मुकुलाग्रभागा इव यस्मिन् तत् तथोक्तम्, तथा स्खलत् सम्पूर्णोच्चारणसामर्थ्याभाववशात् असम्पूर्णाक्षरम् असमञ्जसम् असम्बद्धम् अनुत्पन्नयथायथवाक्यज्ञानत्वात् "मया गच्छसि, त्वं पिबामि" इत्येवं कर्त्तृ-क्रियादिव्याकरणानुसारियोग्यसमावेशरहितमित्यर्थः, तथापि मञ्जु सुश्राव्यत्वात् मनोहरं जल्पितं भाषितं वाक्यमिति यावत् यस्मिन् तत् तथोक्तम्, शिशोः, "दन्तजनने सप्तमे मासी"ति स्मृतेः सप्तममासादिशैशवावस्थायां स्थितायाः इत्यर्थः ते तव वदनं कमलमिव तत् वदनकमलकं पद्मवत् सुन्दरं मुखं स्मरामि, विनष्टवस्तुनः स्मरणमेव शोक इति शोकलक्षणात् सीतास्मरणात्मकशोकेनाभिभूतोऽस्मीत्यर्थः।

अत्र यथावद्वर्णनात् स्वभावोक्तिरलङ्कारः, तथा रुदितस्मितादीनां मुख एव सम्भवेन उपमासाधकसद्भावात् रूपकस्य च बाधकत्वात् लुप्तोपमाद्वयमित्येतेषामङ्गाङ्गिभावेन सङ्करः। प्रथमपादे तकारस्य सकृत्साम्यात् वृत्त्यनुप्रासः, असमञ्जसमञ्जित्यत्र छेकानुप्रासश्चेति संसृष्टिः।

"समञ्जसं समाख्यातमभ्यस्तौचित्ययोरपि" इत्यमरः।

रुदित-स्मित-जल्पितपदानि भावे क्तप्रत्ययान्तानि। कमलकमित्यत्र स्वार्थे कप्रत्ययः।

पुष्पिताग्रा वृत्तम्। अस्यानुरूपः श्लोको यथा शाकुन्तले—

সীতে! তোমার জীবনের শেষভাগ এইরূপে পরিণত হইল যে, লজ্জাবশতঃ ইচ্ছানুসারে কাঁদিতেও পারিতেছি না। হা হা তনয়ে!

(१) मुग्धेति पाठान्तरम्।

भगवति! वसुन्धरे! सत्यमतिदृढ़ासि (र)।
त्वं वह्निर्मुनयो वशिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः।
विद्यां वागिव यामसूत भवती, शुद्धिं गतायाः पुर-(१)
स्तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः?॥५॥

"आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचः प्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति॥" ॥४॥

(र) भगवतीति। सत्यं निश्चितम् अतिदृढा अतिकठिनहृदया।

अतिदृढ़त्वं प्रतिपादयति त्वमिति। त्वं महाप्रभाववती भवती, वह्निः अन्तर्यामी अग्निर्देवः, मुनयः तपस्याप्रभावेण सर्वज्ञाः वशिष्ठवाल्मीकिप्रभृतय ऋषयः, वशिष्ठगृहिणी महापतिव्रतात्वेन सर्वज्ञा अरुन्धती, स्वर्गी महामाहात्म्यवती गङ्गा च, यदि वा तथा, रघोः कुलगुरुः वंशस्यादिपुरुषः, देवः महामाहात्म्यशालीत्यर्थः, स्वयं साक्षादित्यर्थः भास्करः सूर्य्यश्च यस्याः सीतायाः माहात्म्यं चरित्रोत्कर्षं पातिव्रात्यमित्यर्थः, विदुः जानन्ति। तथा वाक् उपनिषद्वाणी विद्यामिव ब्रह्मज्ञानमिव, भवती त्वम्, यां सीताम्, असूत प्रसूतवती, पुरः अग्रतः स्वसमीपे इत्यर्थः तव सर्वव्यापित्वेन लङ्कायामपि स्थितत्वादिति भावः, शुद्धिं निर्द्दोषत्वं गतायाः प्राप्तायाः अग्निपरीक्षया सर्वथा निर्द्दोषत्वेन निर्णीतायाः इत्यर्थः तस्याः दुहितुः तनयायाः सीतायाः तथा तादृक् दारुणं शोचनीयमित्यर्थः विशसनं

যাহাতে রোদন ও হাস্য অনির্দিষ্ট ছিল এবং কতিপয় দন্তমুকুলের অগ্র প্রকাশ পাইতেছিল এবং যাহা হইতে অসম্পূর্ণ ও অসম্বদ্ধ অথ চ মনোহর বাক্য নির্গত হইত; তোমার শিশু অবস্থার সেই মুখকমলখানি স্মরণ করিতেছি।৪॥

(র) ভগবতি! পৃথিবি! তুমি সত্যই বড় দৃঢ়। (কারণ,)

(१) तदस्तु या दैवतमिति पाठान्तरम्।

नेपथ्ये। इत इतो भगवतीमहादेव्यौ। (ल)

हिंसां चरित्रदोषापवादेन महारण्ये निर्वासनात् विनाशनमित्यर्थः, हे दारुणे! निष्ठुरे! त्वं किं केन प्रकारेण अमुंव्यथाः सोढवती। दुश्चरित्रायाः परित्यागेन विनाशनं शास्त्रानुसारेण समुचितत्वात् सर्व्वैरेव सह्यते, किन्तु स्वयं विदितशुद्धचरित्रायाः अग्निपरीक्षादिभिश्च निर्द्दोषत्वेन प्रमितायाः विशेषतः स्वतनयायाः यत्नाहृशं दारुणपरिणामं त्वं सोढुं शक्नासि, अतएवातिदृढ़ेवासीति भावः।

अत्र एकया विदुरिति क्रियया बहूनां कर्त्तृतासम्बन्धेनान्वयात् तुल्ययोगितालङ्कारः श्रौती उपमा च, अनयोर्मिथो नैरपेक्ष्येण स्थितेः संसृष्टिः, तथा त्वमित्येकं युष्मत्कर्त्तृपदम् अन्यानि च नामकर्त्तृपदानि इत्युभयोरेकक्रियासम्बन्धे तत्र "युगपद्वचने परः पुरुषाणा"-मित्यनेन मध्यमपुरुषप्राप्तौ विदुरिति प्रथमपुरुषविभक्तिप्रयोगात् च्युतसंस्कारतादोषः, स तु 'गङ्गा च यस्या विदु'रित्यत्र 'यस्या विद स्वर्नदी' इति पाठेन समाधेयः। तत् पाठेन विद इति मध्यमपुरुषबहुवचने निपातः, स्वर्नदी गङ्गा, चकारतुल्यार्थकयदिवाशब्देन समुच्चयात् न न्यूनपदतादोषोऽपीति सुधीभिर्विभावनीयम्।

"वस्तुस्वरूपावधारणं विद्यामाहु"रिति वेदान्तभाष्ये भगवच्छङ्कराचार्य्याः। "ब्रह्मैव वस्त्वि"ति वेदान्तसारः।

शार्दूलविक्रीडितं वृत्तम् ॥५॥

(ल) नेपथ्य इति। इत इतः अस्मिन्नस्मिन् पथि, भगवतीमहादेव्यौ आगच्छतामिति शेषः। कञ्चुकिन उक्तिरियम्।

---

তুমি, অগ্নিদেব, বশিষ্ঠ-বাল্মীকি প্রভৃতি মুনিগণ এবং গঙ্গা, এমন কি রঘুবংশের আদিপুরুষ স্বয়ং সূর্য্যদেব, ইঁহারা যাহার মাহাত্ম্য জানিতেন এবং বেদবাণী যেমন ব্রহ্মবিদ্যা প্রসব করে, সেইরূপ তুমি যাহাকে প্রসব করিয়াছিলে; হে নিষ্ঠুরে! নিজের সম্মুখে (অগ্নি পরীক্ষায়) নির্দোষ বলিয়া প্রমাণিত সেই কন্যার সেইরূপ দুঃখ, তুমি কি প্রকারে সহ্য করিলে? ॥৫॥

(ল) নেপথ্যে। ভগবতী এবং মহাদেবী এই পথে এই পথে আসুন।

जनकः। (दृष्ट्वा) अये! गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती। (उत्थाय) कां पुनर्महादेवीत्याह? (निरूप्य) हा! कथं महाराजदशरथस्य धर्म्मपत्नी (१) प्रियसखी मे कौशल्या, क एवं प्रत्येति सैवेयमिति (ब)।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा।
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकः॥६॥

(ब) जनक इति। अये इति विषादसूचकमव्ययं शब्दकल्पद्रुमे द्रष्टव्यम्। गृष्टिना तदाख्येन कञ्चुकिना उपदिश्यमानः निर्द्दिश्यमानो मार्गः पन्था यस्याः सा। निरूप्य विशेषेणावलोक्य। इयं दृश्यमाना सैव पूर्वदृष्टा कौशल्येव इत्येवं को जनः प्रत्येति विश्वसिति, अपि तु कोऽपि नेत्यर्थः। नानाविधदारुणशोकेन जरसा च अतीवविकृताकृतित्वादिति भावः।

धर्म्मस्य पत्नी धर्म्मपत्नी अश्वघासादिवत् षष्ठीसमासः।

आसीदिति। इयं दृश्यमाना कौशल्या दशरथस्य गृहे श्रीः राजलक्ष्मीर्यथा तथा आसीत्, राजलक्ष्मीवत् असाधारणकान्तिपरमसमादरादिविशिष्टा आसीदित्यर्थः। वा अथवा उपमानपदेन सादृश्यवाचकतया भेदबोधकेन यथाशब्देनेत्यर्थः किं किं प्रयोजनम् अपि तु किमपि नेत्यर्थः। कथमित्याह, एषा कौशल्या सा श्रीरेव राजलक्ष्मीरेव आसी-

(ব) জনক। (দেখিয়া) ও! ভগবতী অরুন্ধতী; গৃষ্টিনামক কঞ্চুকী উঁহার পথ বলিয়া দিতেছেন। (উঠিয়া) কিন্তু মহাদেবী বলিলেন কাঁহাকে? (নিরূপণ করিয়া) হায়! মহারাজ দশরথের ধর্ম্মপত্নী আমার প্রিয়সখী কৌশল্যা! কে এরূপ বিশ্বাস করে যে, ইনিই সেই কৌশল্যা।

(१) धर्म्मदारा इति पाठान्तरम्।

अयमपरः पापो (१) दशाविपर्य्यासः (ग)।

दित्यर्थः। अतएव अनया सार्द्धं राजलक्ष्म्या अभेदात् भेदे प्रसक्ताया उपमाया नात्यवकाश इति भावः। बत खेदे। कष्टं दुःखम्। दैववशेन दुरदृष्टवशेन दुःखमात्मा स्वभावो यस्य तत् दुःखात्मकं दुःखस्वरूपमित्यर्थः किमपि अनिर्वचनीयमित्यर्थः अन्यत् लोकविलक्षणं भूतं कोऽपि जन्तुरिव जाता अहो विपाकः आश्चर्य्यः परिणाम इत्यर्थः। यस्मादियमविकल-राजलक्ष्मीरूपापीदानीमतीवविकृताकृतिः परिचेतुमप्यशक्या जाता, तत एव जीवानां परिणामो विस्मयकर एवेति भावः।

अत्र प्रथमचरणे श्रौती उपमा, द्वितीयचरणे भेदे अभेदाध्यवसायमूला अतिशयोक्तिः, द्वितीयार्द्धे च भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षा, इत्येतेषां परस्परनैरपेक्ष्यस्थितेः संसृष्टिः।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः। "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवे त्रिषूचिते" इत्यादि मेदिनी।

तद्भिन्नत्वे सति तद्गतभूयो धर्म्मवत्त्वमुपमानत्वमिति लक्षणादुपमानोपमेययोर्भेद आवश्यकः। विधेयप्राधान्येऽपि "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य" इति काशिका-प्रामाण्यात् जातेत्यस्य स्त्रीत्वम्। तत्र आख्यातस्य प्रधानक्रियाया इत्यर्थः।

वसन्ततिलका वृत्तम् ॥६॥

(ग) अयमिति। अयम् उपस्थितः कौशल्यासाक्षात्काररूपः, अपरः अन्यः, पापः पापजनितः दशाविपर्य्यासः अवस्थापरिवर्त्तिः। जातो ममेति शेषः। सीतया सह, चिरविच्छेदे सति एका चिरशोकार्त्तरूपा दशापरिवर्त्तिरासीत्, इयञ्च द्वितीया कौशल्यया सह साक्षात्कारे सति सीतागुणानुवाद-परस्परार्त्तनादादिरूपा महादुःखजनिका पापजनिता जाता, पापं विना दुःखासम्भवादिति भावः।

---

ইনি দশরথের গৃহে রাজলক্ষ্মীর ন্যায় ছিলেন; অথবা সাদৃশ্যবাচক শব্দ প্রয়োগের প্রয়োজন কি? ইনি সেই রাজলক্ষ্মীই ছিলেন; হায়! কি কষ্ট; বর্ত্তমানে দৈববশতঃ দুঃখস্বরূপ যেন অন্য কোন অনির্ব্বচনীয় প্রাণী হইয়া গিয়াছেন; কি আশ্চর্য্য পরিণাম ॥৬॥

---

(१) अयमपरप्राय इति, अयमपरः प्राय इति च पाठान्तरम्।

य एव मे जनः पूर्वमासीन्मूर्त्तो महोत्सवः।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥७॥
(ततः प्रविशति अरुन्धती कौशल्या कञ्चुकी च।)

अरुन्धती। ननु ब्रवीमि, द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः कुलगुरोरादेशः; अतएवाहं प्रेषिताः; ततः कोऽयं पदे पदे महानध्यवसायः (१) (ष)।

दशाविपर्य्यासं व्यनक्ति य एवेति। य एव कौशल्यालक्षणो जनः पूर्वं सीताविवाहानन्तरदशरथजीवनसमये मे मम मूर्त्तो मूर्त्तिमान् महोत्सवः परमामोदकारणमासीत्, सीताया विवाहात् परं दशरथजीवितकाले यां दृष्ट्वा महान्तमानन्दमनुभूतवानस्मीत्यर्थः, इदानीं तस्यैव जनस्य दर्शनं साक्षात्कारः क्षते देहस्य छिन्नस्थाने विदीर्णव्रणादौ वा क्षारं क्षारसंयोगः लवणादिक्षारवस्तुसंयोग इव असह्यं सोढुमशक्यं जातं संवृत्तं सकलशोकोद्दीपकत्वादिति भावः।

या पूर्वं सुखकारणमासीत् इदानीं सैव दुःखकारणमिति दशाविपर्य्यास इति च भावः।

अत्र प्रथमार्द्धे हेतुर्नामालङ्कारः द्वितीयार्द्धे च श्रौत्युपमा, इत्युभयोर्निरपेक्ष्यस्थितेः संसृष्टिः ॥७॥

(ष) अरुन्धतीति। नन्विति कौशल्यासम्बोधने। स्वयमात्मना उपेत्य समीपे गत्वा वदेहः विदेहदेशाधिपतिर्जनकः। वो युष्माकं कुलगुरोर्वशिष्ठस्य। अतएव त्वया स्वयमुपेत्य द्रष्टव्यत्वादेव, अहं प्रेषिता प्रेरिता युष्मत्कुलगुरुणेति शेषः। एकाकिन्यास्तव गमनस्यासम्भवात् अनौचित्याच्च त्वत्सहचारिणीकरणाय अहं प्रेषितेति भावः। ततस्तस्मात् गुरोरादेशस्यावश्यपालनीयत्वादित्यर्थः पदे पदे प्रतिपदक्षेपं कोऽयं किंहेतुक इत्यर्थः। महानध्यवसायः अतीवावस्थानोद्यमः, एकैकपदं गत्वैव तत्र तत्रोपवेशनादिना अवस्थिति-

---

(শ) এই আর একটী পাপজনিত অবস্থার পরিবর্তন।

যে লোকই, পূর্ব্বে আমার নিকট মূর্ত্তিমান্ মহোৎসবস্বরূপ ছিল; ক্ষতস্থানে লবণের ন্যায় অসহ্য, সেই লোকেরই সন্দর্শন উপস্থিত হইল ॥৭॥

---

(১) महानध्यवसाय इति पाठान्तरम्।

कञ्चुकी। देवि! संस्तम्भयात्मानम्, अनुरुध्यस्व भगवतो वशिष्ठस्यादेशमिति विज्ञापयामि (स)।

कौशल्या। ईदिसे काले मिहिलाधिवो दट्ठव्योत्ति समं ज्जेव सव्वाइ दुक्खाइ समुब्भवन्ति। ण सक्कणोमि उव्वत्तमाण-मूलबन्धणं (१) हिअअं अवत्थाविदुं (ह)।

---

(ह) ईदृशे काले मिथिलाधिपो द्रष्टव्य इति सममेव सर्वाणि दुःखानि समुद्भवन्ति। न शक्नोमि उद्वर्त्तमानमूलबन्धनं हृदयमवस्थापयितुम्।

प्रयत्नः कथमित्यर्थः। त्वञ्चेत् गत्वा वैदेहं न द्रक्ष्यसि तदा स कुलगुरुर्विरक्तो भविष्यतीति भावः।

ननु ब्रवीमीत्यनेन "द्रष्टव्य" इत्यादिवाक्यं पूर्वमपि हितिवक्तमिति प्रतीयते।

(स) कञ्चुकीति। आत्मानं हृदयं संस्तम्भय स्थिरीकुरु। अनुरुध्यस्व अनुसर प्रतिपालयेत्यर्थः।

(ह) कौशल्येति। ईदृशे काले स्ववैधव्य-सीता-चिरविच्छेदाभ्यां दारुणीकृत-समये। सममेव समानमेव युगपदेवेत्यर्थः सर्वाणि दुःखानि स्ववैधव्यसीतानिर्वासन-रामादिवियोगजनितानि कष्टानि समुद्भवन्ति चित्ते आविर्भवन्ति। अतएव उद्वर्त्तमानम् उत्तिष्ठत् तैस्तैर्दुःखैरुच्छिन्नप्रायमित्यर्थः मूलबन्धनं यथास्थानस्थितिकारकप्रकृतबन्धनं

---

(তদনন্তর অরুন্ধতী, কৌশল্যা ও কঞ্চুকীর প্রবেশ।)

(ষ) অরুন্ধতী। ওহে! আমি বলিতেছি—"নিজে যাইয়া বিদেহ-রাজের সহিত দেখা করিতে হইবে" ইহা তোমাদের কুলগুরুর আদেশ; এই জন্যই আমি প্রেরিত হইয়াছি; সুতরাং পদে পদে তোমার কি এ গুরুতর জেদ!।

(স) কঞ্চুকী। দেবি! চিত্তকে স্থির করুন, ভগবান্ বশিষ্ঠদেবের আদেশ পালন করুন; ইহা আমি নিবেদন করিতেছি।

---

(१) उग्घट्टमाणेति पाठान्तरम्।

अरु। अत्र कः सन्देहः (ক্ষ)।

सन्तानवाहीन्यपि मानुषाणां
दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥৮॥

---

यस्य तत् तथोक्तं हृदयम् अवस्थापयितुं स्थिरीकर्त्तुं न शक्नोमि। अतएव नितान्ताकुलतया तत्र तत्र स्थातुं मे महान् अध्यवसाय इति भावः।

"समं सर्वसमानयो"रित्यमरः। सममिति उद्भवन्तिक्रियाविशेषणम्।

(ক্ষ) अरु इति। अत्र जनकदर्शनेन सर्वदुःखाविर्भावविषये।

तत्र सन्देहाभावं समर्थयति सन्तानेति। मानुषाणां सन्तानेन धारया वहन्तीति सन्तानवाहीनि निरवच्छिन्नानीत्यर्थः सतामुत्कृष्टानां बन्धूनाम् अतीवस्नेहास्पदानां पुत्रकन्यादीनां वियोगात् विच्छेदात् जायन्त इति सद्बन्धुवियोगजानि दुःखानि, प्रेयसि जने प्रियतमे अन्यस्मिन् बन्धौ दृष्टे सति दुःसहानि असह्यानि सन्ति स्रोतःसहस्रैरिव असंख्यप्रवाहैरिव संप्लवन्ते उच्छलन्ति। अतस्त्वया यदुक्तं सममेवेत्यादि तत् सत्यमेवेति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः, तेन च चन्द्रोदये समुद्रजलानीवेत्युपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। तथा समुच्चयप्रयोजनाभावेऽपि अपिशब्दप्रयोगादधिकपदत्वदोषः, स च 'सन्तानवाहिनी मनुष्याणा'मिति पाठेन समाधेयः।

दुष्टबन्धुविच्छेदे दुःखमेव न भवतीति सत्पदमुपात्तम्।

कुमारसम्भवे एतदनुरूपोक्तिर्यथा—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति। इन्द्रवज्रा वृत्तम् ॥৮॥

---

(হ) কৌশল্যা। এইরূপ সময়ে মিথিলাধিপতির সহিত সাক্ষাৎ করিতে হইবে; এই জন্য সমস্ত দুঃখই একদা আবির্ভূত হইতেছে। যাহার মূলবন্ধন উঠিয়া গিয়াছে, সেই চিত্তকে স্থির করিতে পারিতেছি না।

(ক্ষ) অরুন্ধতী। এ বিষয়ে সন্দেহ কি?

कौशल्या। कहं वच्छाए वहुए एवं गदे तस्स राएसिणो मुहं दंसइस्स (क)।

अरु। एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः।

याज्ञवल्क्यो मुनिर्यस्मै ब्रह्म पारायणं जगौ ॥९॥

कौशल्या। एसो सो महाराअस्स हिअआणन्दो वच्छाए

---

(क) कथं वत्साया वध्वा एवं गते तस्य राजर्षेर्मुखं दर्शयामः।

---

(क) कौशल्येति। वध्वाः सीतायाः। एवं गते एवम्प्रकारे दारुणे अवस्था-परिवर्त्तने जाते सतीत्यर्थः। तस्य राजर्षेर्जनकस्य, सम्बन्धविवक्षया षष्ठी, तेन राजर्षि-मीत्यर्थः। अकारणसीतापरित्यागकारिणो रामस्य मातृत्वसम्बन्धात् जनकेन मुखं दर्शयितुं ममापि महदप्रतिभत्वं जायत इति भावः।

एष इति। एष सम्मुखवर्त्ती वो युष्माकं श्लाघ्य आदरणीयः सम्बन्धी वैवाहिकः जनकानां जनकवंशीयानां कुलोद्वहः कुलधुरन्धरो वर्त्तत इति शेषः। याज्ञवल्क्यो मुनिः, यस्मै जनकाय पारायणं सकलं ब्रह्म वेदं जगौ गीतवान्। याज्ञवल्क्यो यं राजानं समग्रं वेदमध्यापयामासेत्यर्थः।

पारं समाप्तिम् अयते गच्छति प्राप्नोतीति पारायणं नन्द्यादित्वात्।

"वेदस्तत्त्वं तपो ब्रह्म" "साकल्यासङ्गवचने पारायणपरायणे" इति चामरः ॥९॥

---

নিরবচ্ছিন্নভাবে প্রবাহিত সদ্বন্ধুবিচ্ছেদজনিত মানুষের দুঃখ, অপর বন্ধুজনকে দেখিলে দুঃসহ হইয়া, সহস্র স্রোতে যেন প্রবাহিত হইতে থাকে ॥৮॥

(ক) কৌশল্যা। বৎসা বধূর এইরূপ হইলে, সেই রাজর্ষিকে কি করিয়া মুখ দেখাইব।

অরুন্ধতী। জনকবংশের ধুরন্ধর ইনি তোমাদের শ্লাঘ্য সম্বন্ধী; যাজ্ঞবল্ক্যমুনি, যাঁহার নিকট সমস্ত বেদ বলিয়াছিলেন ॥৯॥

वहुए पिदा राएसी। हद्दी हद्दी, सम्भाविदह्मि अणुवट्ठिदमहूसवे दिअसे ; हा देव्व! सव्वं एव्व तं णत्थि (ख)।

जनकः। (उपसृत्य) भगवत्यरुन्धति! वैदेहः सीरध्वजोऽभिवादयते (ग)।

यया पूतम्मन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।

---

(ख) एष स महाराजस्य हृदयानन्दो वत्सायाः वध्वाः पिता राजर्षिः। हा धिक् हा धिक्, सम्भाविताम्मि अनुपस्थितमहोत्सवे दिवसे ; हा दैव! सर्वमेव तत् नास्ति।

---

(ख) कौशल्येति। महाराजस्य दशरथस्य, हृदयम् आनन्दयतीति हृदयानन्दः। वध्वाः सीतायाः। न उपस्थितः महोत्सवः प्रचुरानन्दो यस्मिन् स तथोक्तस्तस्मिन् दिवसे सम्भाविताम्मि समादृताम्मि जनकराजेन दर्शनदानादिति शेषः। दुःखसमये महोत्सवोपयुक्तजनदर्शनं प्रत्युत महादुःखकरमेवेति भावः। हा दैव! अदृष्ट! तत् महोत्सवप्रयोजकं सर्वमेव वस्तितात्यर्थः नास्ति। महाराजः, सीता, ततसन्तानश्च ते न सन्त्येव ; शोककातरा रामादयोऽपि दूरे वर्त्तन्ते अन्तमप्येवं दशामापन्ना ; अतएव महोत्सवस्य किमपि नास्तीत्यर्थः।

(ग) जनक इति। वैदेहः विदेहदेशीयः, सीरो हलः ध्वजे ध्वजदण्डे यस्य सः, सीरध्वजनामेत्यर्थः, अभिवादयते प्रणमति, भवतीमिति शेषः।

* "सीरोऽर्कहलयोः पुंसि" इति मेदिनी।

---

(খ) কৌশল্যা। মহারাজের (দশরথের) হৃদয়ের আনন্দজনক এবং বৎসা বধূ সীতার পিতা ইনি সেই রাজর্ষি জনক! হায়! হায়! যে দিন মহোৎসব উপস্থিত নাই, সেই দিনে ইঁহার দর্শনে সমাদৃত হইলাম। হা বিধাতঃ! সে সমস্তই নাই।

(গ) জনক। (নিকটে যাইয়া) ভগবতি! অরুন্ধতি! বিদেহদেশবাসী সীরধ্বজ আপনাকে অভিবাদন করিতেছে।

त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥१०॥

---

अभिवाद्यतायाः कारणमाह यस्येति। पूर्वेषां पूर्ववर्त्तिनां गुरूणामपि जगच्छिक्षकतया सर्वपूज्यानामपि मरीच्यादिदेवर्षीणां मध्ये गुरुतमः प्रधानतमः प्रकृष्टो गुरुरित्यर्थः, तथा पवित्रस्य स्वतः पवित्रस्येत्यर्थः महसो ब्रह्मतेजसः निधिरपि आश्रयोऽपि ते तव पतिर्भर्त्ता वशिष्ठः, यया त्वया पूतम्मन्यः आत्मानं पवित्रं मन्यते। अवनितललोलेन भूतलचञ्चलेन भूमिस्पर्शिनेति यावत् शिरसा मस्तकेन त्रिलोकीमङ्गल्यां त्रिभुवनकल्याणकारिणीं जगद्वन्द्यां सर्वपूज्यां देवीमुषसमिव उषाकालाधिष्ठात्रीं देवतामिव भवतीं वन्दे प्रणमामि। अत्र पूर्णोपमालङ्कारः।

"महस्तूत्सवतेजसोः।" "प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि" इति चामरः।

पूतमात्मानं मन्यत इति पूतम्मन्यः, "खश् चात्मने" इति मन्यतेः खश्, "अरुर्द्विषदजन्तस्य मुम्" इति मकारागमः। त्रयाणां लोकानां समाहार इति त्रिलोकी द्विगोर्ङीबादित्वादीप्रत्ययः।

साध्वी भर्त्तारं पुनातीत्याह अङ्गिराः—

"ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः।
तं वै पुनाति सा नारीत्याङ्गिरसभाषितम्॥"

साध्व्याः पूज्यत्वमाह मत्स्यपुराणम्—

"तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः।
तासां राज्ञा प्रसादेन धार्य्यते च जगत्त्रयम्॥"

शिखरिणी वृत्तम् ॥१०॥

---

প্রাচীন গুরুদিগের মধ্যেও প্রধান গুরু এবং পবিত্র ব্রহ্মণ্য তেজের আধার হইয়াও আপনার পতি (বশিষ্ঠদেব), যাঁহাদ্বারা আত্মাকে পবিত্র মনে করেন; ঊষাদেবীর ন্যায় ত্রিলোকের মঙ্গলজনিকা এবং জগতের বন্দনীয়া আপনাকে ভূতলাবলুণ্ঠিত মস্তকদ্বারা নমস্কার করিতেছি ॥১০॥

अरु। परं ज्योतिस्ते प्रकाशताम्, अयं स त्वां पुनातु देवः परोरजाः, (१) य एष तपति (घ)।

जनकः। आर्य्यगृष्टे! अपि कुशलमस्याः प्रजापाल-मातुः? (ङ)

(घ) अरु इति। परं ज्योतिः सर्वप्रधानं तेजः परंब्रह्मेत्यर्थः ते तव प्रकाशतां परमात्मसाक्षात्कारस्तव भवत्वित्यर्थः। तथा रजसो रजोगुणात् परं परवर्त्ती एष सर्वलोकप्रत्यक्षगोचरः यस्तपति तापदानं करोति, अयं स देवः आदित्यः त्वां पुनातु पवित्रीकरोतु। इत्याशीर्वादद्वयम्।

परोरजा इति "अपस्करादयश्चे"ति ससुट्निपातः।

अत्र परज्योतिःशब्देन परंब्रह्माभिधीयते। तथा च श्रुतिः—"एष सम्प्रसादोऽस्मा-च्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते।" अत्र वेदान्तसूत्रम्—"ज्योतिर्दर्शना"दिति। तत्र शाङ्करभाष्यम्—"परमेव ब्रह्म ज्योतिःशब्द"मिति। (१ अ, ३ पा, ४० सू।)

य एष तपतीत्यनेनादित्योऽभिप्रेतः। तथा च छान्दोग्योपनिषत्—"य एवासौ तपति तमुद्गीथमुपासीत।"

अत्र रजःपदं तमसोऽप्युपलक्षणं तेन रजस्तमोभ्यामस्पृष्टः केवलसत्त्वमय इत्यर्थः सर्वप्रकाशकत्वात्। तथा च सांख्यकारिका—

"सत्त्वं लघु प्रकाशकमिष्ट"मित्यादि।

(ङ) जनक इति। गृष्टिरिति कञ्चुकिनी नाम तत्सम्बोधनं गृष्ट इति। अपिशब्दः प्रश्ने। प्रजापालमातुः कौशल्यायाः, कुशलं वर्त्तते किमित्यर्थः। यः खलु यथार्थत्व-मयथार्थत्वं वा अपराधमनपराधं वा न्याय्यत्वमन्याय्यत्वं वा अविविच्य कर्म्म कुरुते स

(घ) अरुन्धती। আপনার পরব্রহ্ম সাক্ষাৎকার হউক এবং রজোগুণের অতীত ও জগৎপ্রসিদ্ধ এই সূর্য্যদেব, আপনাকে পবিত্র করুন; যিনি এই তাপ দান করিতেছেন।

(१) परोरजसामिति पाठान्तरम्।

कञ्चुकी। (स्वगतम्) (१)। निर्विशेषमतिनिष्ठुरमुपालब्धाः स्मः। (प्रकाशम्) राजर्षे! अनेनैव मन्युना चिरपरित्यक्तरामभद्र-मुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम्। रामभद्रस्यापि (२) दैवदुर्नियोगः कोऽपि, यत् किल समन्तात् प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निपरिशुद्धि-मप्यल्पकाः प्रतियन्ति, इत्यतो दारुणमनुष्ठितम् (च)।

---

सर्वैरेवाभ्यज्ञायते। तथा च रामभद्रः खल्वदूरदर्शिनीनां साधारणप्रजानामयथार्थापवादेन निरपराधां सीतामन्याय्यभावेन केवलप्रजारञ्जनाय निर्वासितवानिति नितान्ततरल-स्वभावताप्रकाशादवज्ञेय इति भावः। एतेन रामं कौशल्याञ्च प्रति जनकस्य महान् विरागो व्यज्यत इति वस्तुना वस्तुध्वनिः।

(च) कञ्चुकीति। निर्न विद्यते विशेषो यस्मात् तन्निर्विशेषं निरतिशयम् अति-निष्ठुरं नितान्तपरुषञ्च यथा स्यात्तथा उपालब्धाः तिरस्कृताः स्मः वयमिति शेषः। निःसङ्कोचालापकारिणीं कौशल्यां प्रति पूर्वमिव 'प्रियसखि! अपि कुशलं ते' इत्येवं साक्षादपृष्ट्वा मम समीपे वैवाहिकीति सम्बन्धबोधकपदाप्रयोगात प्रजापालमातुरिति सौल्लुण्ठनपदप्रयोगाच्चेति भावः।

अनेनैव सीतानिर्वासनजनितेनैव मन्युना क्रोधेन चिरं परित्यक्तं रामभद्रस्य मुखचन्द्रदर्शनं यया तां तथोक्ताम्। अतिदुःखितां सीतानिर्वासनेनैव निरतिशय-दुःखशालिनीमित्यर्थः दुःखयितुं पुनः क्लिष्टां कर्त्तुम। देवीं कौशल्याम्। सीतानिर्वासनेनैव भवानिव इयमपि रामं प्रति नितान्तकुपिता सती परमस्नेहवशादविरतदृष्टपूर्वमपि रामभद्रमुखचन्द्रमिदानीं नावलोकयति परमदुःखिता च जातेति रामविद्वेषे भवत्पक्ष-पातिनी, अतएव देवीं प्रति ईदृशवाक्यप्रयोगस्ते न युक्तिसङ्गत इति भावः।

नहि राम एव तिरस्करणीय इत्याह रामभद्रस्यापीति। कोऽपि अनिर्वचनीयः

---

(७) जनक। आर्या। गृष्टि। এই প্রজাপালকের মাতার মঙ্গল ত?

(१) निरवशेषमिति पाठान्तरम्। रामभद्रेणापि समन्तात् प्रवर्त्तितबीभत्स-किंवदन्तीकाः—दारुणमनुष्ठितमिति पाठान्तरम्।

जनकः। आः! कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने। कष्टम्, एवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे (छ)।

दैवदुर्नियोगः दुरदृष्टकृतप्रेरणम्, यद्‌यस्मात् दैवदुर्नियोगादित्यर्थः। समन्तात् सर्वासु दिक्षु प्रवृत्ता उपस्थिताः, कौभत्सा निन्दिताः किंवदन्त्यः "निःसहाया सीता वत्सरप्रायं यावत् लङ्कायां स्थिता तथापि अवाधेन सा पुनर्गृहीता" इत्थम् अपवादा येभ्यस्ते तथोक्ताः, अतएव अल्पकाः अनिश्चितहेतुकपरापवादकारित्वात् क्षुद्राशयाः पौरजानपदाः पुरवासिनो देशवासिनश्च जनाः अग्निपरिशुद्धिमपि अग्निपरीक्षया प्रमाणितनिर्दोषत्वमपि न प्रतियन्ति न विश्वसन्ति, सीतायाः अग्निपरीक्षया प्रतिपादितं निर्दोषत्वं शृण्वन्तोऽपि न विश्वसन्तः, केवलं निन्दन्तीत्यर्थः। इति वाक्यसमाप्तौ। अतः कारणात् दारुणं निर्वासनरूपं भयङ्करं कर्म्म अनुष्ठितं कृतं रामभद्रेणेति शेषः। अस्मिन् निर्वासने रामस्य विरागो विद्वेषो वा न कारणं किन्तु दुर्दैवमेवेति निर्दोषो रामोऽपि न निन्दनीय इति भावः।

(छ) जनक इति। आ इति कोपसूचकमव्ययम्। अस्मत्प्रसूतेः मम तनयायाः सीतायाः परिशोधने पवित्रताकरणे अयं त्वया उच्यमानः अग्निर्नाम अग्निरिति प्रसिद्धः पदार्थः कः, अपि तु कोऽपि नेत्यर्थः। पवित्रताविषये सीतायाः अग्निन्यूँन एवेति भावः। एवम् "अग्नौ सीतायाः शुद्धि"रिति वाक्यं वदति यः स एवंवादी तेन, जनेन कस्य (कि-

(চ) কঞ্চুকী। (স্বগত) আমরা, নিরতিশয় ও অত্যন্ত নিষ্ঠুরভাবে তিরস্কৃত হইলাম। (প্রকাশ্যে) রাজর্ষি! কৌশল্যাদেবী, এই ক্রোধবশতই চিরকালের জন্য রামভদ্রের মুখচন্দ্র-দর্শন পরিত্যাগ করিয়াছেন এবং অত্যন্ত দুঃখিত রহিয়াছেন; সুতরাং উঁহাকে আবার দুঃখিত করা আপনার উচিত নহে। রামভদ্রেরও অনির্ব্বচনীয় দৈবদুর্নিয়োগ হইয়াছিল; যেহেতু, সকল দিকেই যাহাদের মধ্যে কুৎসিত কিংবদন্তী চলিতেছিল, সেই ক্ষুদ্রচেতা পুরবাসিগণ এবং দেশবাসিগণ, অগ্নিপরীক্ষায় সীতাদেবীর পরিত্রাণ প্রমাণও বিশ্বাস করিতেছিল না; এই জন্যই রামভদ্র সেই ভয়ঙ্কর কার্য্যের অনুষ্ঠান করিয়াছিলেন।

अरु। (निःश्वस्य) एवमेतत्, अग्निरिति वत्सां प्रति परिलघून्यक्षराणि, सीतेत्येव पर्य्याप्तम्। हा वत्से! (ज)

शिशुर्वा शिष्या वा यदसि, मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढ़यति।
शिशुत्वं स्त्रैणं वा भवतु, ननु वन्द्यासि जगतो
गुणाः पूजास्थानं, गुणिषु न च लिङ्गं न च वयः ॥११॥

---

प्रभृतिना लोकेन, रामेण परिभूताः चरित्रदोषापवादेन सीतायाः निर्वासनात् तिरस्कृता अपि वयं पुनः परिभूयामहे तिरस्कृताः स्मः। दुष्टसम्पर्केण निर्द्दोषस्यापि दोषः स्यादिति रामेण चरित्रदोषापवादेन सीतायाः निर्वासनात् तस्य जनकतया अहमप्यवमानितः, परञ्च तस्याः अग्निशुद्धिं वदता जनेन स दोषो दृढ़ीकृत इति पुनरप्यवमानित इति भावः।

"प्रसूतिः।—दुहिते"ति शब्दकल्पद्रुमः।

(ज) अरु इति। एतत् त्वयोक्तं कोऽयमित्यादिवाक्यम्, एवं सत्यमित्यर्थः स्वयमपि तद्वाक्यस्य सत्यत्वं प्रतिपादयति अग्निरिति। वत्सां प्रति सीताविषये अग्निरिति अक्षराणि 'अग्नि' इत्यानुपूर्वीका वर्णाः परिलघूनि न्यूनानि। सीतया सह पवित्रतायां अग्नेस्तुलनायां क्रियमाणायां पातिव्रात्यधर्म्मेण सीतैव विशिष्यत इत्यर्थः। अवान्तरशब्दस्य तत्प्रतिपाद्यार्थे लक्षणा। सीतेत्येव सीता इति नामैव, पर्य्याप्तं यथेष्टम्। सीतायाः एतावान् चरित्रात् कर्षो जगत्यां प्रथितः, यत् सीतानामोच्चारणमात्रेणैव सर्व्वेषां हृदये तस्याः लोकोत्तरा पवित्रताविर्भवतीति तत्प्रतिपादने अग्निर्न समर्थ इति भावः।

"कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सित"मित्यमरः।

---

(छ) জনক। আঃ! আমার কন্যার পবিত্রতা প্রমাণ করিতে অগ্নিটা কে? আমরা রামকর্তৃক তিরস্কৃত হইয়াও পুনরায় এইরূপবাদী লোককর্তৃক তিরস্কৃত হইতেছি।

(জ) অরুন্ধতী। (নিশ্বাস ত্যাগ করিয়া) ইহা এইরূপই বটে। 'অগ্নি' এই অক্ষরগুলি, সীতার বিষয়ে অতিক্ষুদ্র 'সীতা' এইটুকুই যথেষ্ট। হা বৎসে!

' शिशुरिति। हा वत्से! मम समीपे त्वं शिशुः वयोऽल्पत्ववशात् बालिका वा शिष्या पातिव्रात्यधर्म्मोपदेशादिना शिक्षणीया वा असि भवसि इति यत् तत् शिशुभवनं शिष्याभवनं वा शिशुत्वं वेत्यर्थः तथा तेनैव प्रकारेण तिष्ठतु त्वया सार्द्धं मे बहिर्व्यवहारः शिशुभावेन शिष्याभावेन च भवतु इत्यर्थः, तु किन्तु, विशुद्धेः पवित्रताया उत्कर्षः उत्कृष्टता त्वयि मम भक्तिं पूज्यत्वेनानुरागं द्रढयति दृढीकरोति, प्रथममेवालौकिकसौन्दर्य्यादिदर्शनात् देवांशज्ञानेन सामान्यतो भक्तिर्जाता इदानीन्तु चरित्रोत्कर्षस्तां दृढीकरोतीत्यर्थः। न केवलं मम अपि तु सर्वेषामेव त्वयि भक्तिर्जायते इत्याह शिशुत्वमित्यादि। शिशुत्वम् अल्पवयस्कत्वं स्त्रैणं स्त्रीत्वं वा भवतु तदेति शेषः, तथापि जगतो जगज्जनस्य वन्द्या ननु, भक्त्या पूजनीयैव असि भवसि। ननु बालिका स्त्री कथं सर्वेषां पूजनीया स्यादित्याह, गुणा इत्यादि। गुणाः धर्म्मपातिव्रात्यसच्चरित्रादयः पूजायाः स्थानम् आस्पदं प्रयोजको हेतुरित्यर्थः, गुणिषु तादृशगुणवत्सु जनेषु लिङ्गं स्त्रीत्वपुंस्त्वादिकं न च पूजास्थानं न वा वयो जीवनकालस्य अल्पवयस्त्वं वेत्यर्थः पूजास्थानम्। अतएव त्वं पातिव्रात्यादिगुणैनैव पूज्यासीति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः तथा "न च लिङ्गं न च वयः" इत्यनेन लिङ्गवयसोः पूजाकारणतानिरासात् शाब्दी परिसंख्या च इत्यनयोरङ्गाङ्गिभावेन सङ्करः।

यदिति तदिति च क्रियाविशेषणम्। दृढं करोतीति "रशब्द ऋतो लघोर्व्यञ्जनादे"रिति ऋकारस्य रत्वम्। स्त्रिया भाव इति स्त्रैणं "स्त्रीपुंभ्यां नञ्स्नञौ" इति नञ्प्रत्ययः। ननुशब्दोऽवधारणे। चकारद्वयं प्रत्येकप्राधान्यसूचनार्थम्।

शिखरिणी वृत्तम् ॥११॥

---

তুমি আমার নিকট শিশু, অথবা শিষ্যা; উহার যাহাই হও, তাহা সেই ভাবেই থাক; কিন্তু পবিত্রতার উৎকর্ষই তোমার প্রতি আমার ভক্তিকে দৃঢ় করিতেছে। তোমার শিশুত্বই হউক কিংবা স্ত্রীত্বই হউক, তথাপি তুমি নিশ্চয়ই জগতের পূজনীয়, কারণ, গুণই পূজার স্থান; সুতরাং গুণী ব্যক্তির স্ত্রীত্ব-পুংস্ত্ব প্রভৃতি লিঙ্গ কিংবা বালকত্ব, বৃদ্ধত্বপ্রভৃতি বয়স দেখিতে হয় না ॥১১॥

कौशल्या। अम्मो! उम्मीलन्ति वेअणाओ। (इति मूर्च्छति) (झ)।

जनकः। हा कष्टम्! किमेतत्? (ञ)

अरु। राजर्षे! किमन्यत् (ट)?

स राजा तत् सौख्यं स च शिशुजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्।
विपाके घोरेऽस्मिन्नथ (१) खलु विमूढ़ा तव सखी,
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥१२॥

(झ) अहो! उन्मीलन्ति वेदनाः।

(झ) कौशल्येति। वेदनाः शोकजनितदुःखव्यथाः उन्मीलन्ति प्रादुर्भवन्ति नवीभवन्तीत्यर्थः सीतायाः अशिवगुणानुवादश्रवणादिति भावः।

(ञ) जनक इति। एतत् कौशल्यायाः मूर्च्छापन्नत्वं किं किम्प्रकारम्। (एकि? इति वङ्गभाषा।)

(ट) अरु इति। अन्यत् अन्यप्रकारं किम् अपि तु किमपि नान्यप्रकारमित्यर्थः। तथा च मूर्च्छितेयं नान्यप्रकारमापन्नेति भावः। (आर कि? इति वङ्गभाषा।)

सकारणां तामेवाह स राजेति। सुहृदि प्रियसखे त्वयि दृष्टे सति स राजा दशरथः, तत् सौख्यं तत्कालीनसुखसन्तानः, स च शिशुजनः सीतारामचन्द्रादिः, ते दिवसाश्च अनुभूतपूर्वाणि सुखकराणि दिनानि, तदेतत् अखिलं दशरथादिसमस्तं स्मृतौ आविर्भूतं स्मृतिपथारूढ़म्। अथ अनन्तरम् अस्मिन् अनुभूयमाने घोरे विपाके अवस्थाविपर्य्यये स्मृतावाविर्भूते सतीत्यर्थः तत्कालीनावस्थया सह इदानीन्तनावस्थायां

(झ) কৌশল্যা। ওমা! বেদনা জাগিয়া উঠিয়াছে। (এই বলিয়া মূর্চ্ছিত হইলেন।)

(ঞ) জনক। হায় কি কষ্ট! এ কি?

(ট) অরুন্ধতী। রাজর্ষি! অন্য আর কি?

(१) ननु खलु इति पाठान्तरम्।

जनकः। हन्त! हन्त! [१] सर्वथा नृशंसोऽस्मि संवृत्तः, [२] यश्चिरस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् न स्निग्धं पश्यामि [ठ]।

---

पर्य्यालोचनयेत्यर्थः तव सखी कौशल्या विमूढा मूर्च्छापन्ना ननूभयोरवस्थयोः स्मरणमात्रेण कथं मूर्च्छा स्यादित्याह पुरन्ध्रीणामित्यादि। हि यस्मात् पुरन्ध्रीणां पतिपुत्रादिमतीनां कुलस्त्रीणां चित्तं मनः कुसुमसुकुमारं पुष्पवत् कोमलं तीव्रदुःखासहिष्णु इत्यर्थः भवति। अतएवोभयोरवस्थयोः स्मरणेन व मूर्च्छितेति भावः।

अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, कुसुमसुकुमारमिति लुप्तोपमया सङ्कीर्णः।

सुखमेव सौख्यं स्वार्थे यण्। तदिति "नपुंसकानपुंसकयोर्नपुंसकमेकवच्च।" इति नपुंसकत्वम् एकवचनञ्च।

"पुरन्ध्री। पतिपुत्रदुहित्रादिमती" इति शब्दकल्पद्रुमः। शिखरिणी वृत्तम् ॥१२॥

(ठ) जनक इति। हन्तेति विषादसूचकमव्ययं द्विर्वचनञ्च विषादे। नृशंसः निष्ठुरः। चिरस्य दृष्टान् बहुपूर्वे दृष्टानित्यर्थः, प्रियसुहृदः दशरथस्य, दारान् भार्य्याम्, स्निग्धं सस्नेहम्। यो बन्धुजनं सर्वथा सस्नेहं नावलोकयति स निष्ठुर एवेति भावः।

আপনি বন্ধুজন; আপনার দর্শনে সেই রাজা দশরথ, রামভদ্রপ্রভৃতি সেই শিশুগণ এবং সেই দিনগুলি; এই সমস্তই স্মৃতিপথে আবির্ভূত হইয়াছে। তাহার পর এই ভয়ঙ্কর অবস্থা পরিবর্ত্তনের সময়ে আপনার সখী মূর্চ্ছিত হইয়াছেন; কারণ, পতিপুত্রবতী রমণীদিগের চিত্ত, পুষ্পের ন্যায় কোমল হইয়া থাকে ॥১২॥

(ঠ) জনক। হায়! হায়! সর্ব্বপ্রকারেই আমি নৃশংস হইয়াছি; যে আমি বহুকালের পর দৃষ্ট প্রিয়সুহৃদের প্রিয়তমা ভার্য্যাকে স্নেহের সহিত দেখিতেছি না।

---

(१) कष्टमिति पाठान्तरम्। (२) अन्यपुस्तके संवृत्त इति पाठो नास्ति।

स सम्बन्धी श्लाघ्यः, प्रियसुहृदसौ, तच्च हृदयं
स चानन्दः साक्षादपि च निखिलं जीवितफलम् (१)।
शरीरं, जीवो वा, यदधिकमतो वा प्रियतमो
महाराजः श्रीमान् किमिव मम नासीद्दशरथः ॥१३॥

स इत्यादि। स दशरथः श्लाघ्यः अतीवसद्वंशजातत्वात् प्रशस्यः सम्बन्धी वैवाहिकः, असौ दशरथः प्रियसुहृत् परमप्रणयास्पदं सखा, तच्च स च दशरथः हृदयं हृदयरूप-प्रीतिभाजनं स च दशरथः साक्षात् चाक्षुषप्रत्यक्षविषयः मूर्त्तिमानित्यर्थः आनन्दः आमोदः, अपि च अन्यच्च दशरथः निखिलं समस्तं जीवितस्य मम प्राणधारणस्य फलं सुखमेव सर्वेषां जीवनस्य सर्वदाभीष्टतया वास्तविकं फलं निरतिशयमनोऽनुकूलत्वात् तच्च दशरथः आसीदित्यर्थः तथा दशरथः शरीरं सुस्थत्वे कार्य्यसम्पादनात् असुस्थत्वे च कार्य्यहानेः मम गात्रस्वरूपः तथा दशरथः जीवः अतीवप्रियत्वात् मम जीवात्मा अहङ्कारविशिष्टं चैतन्य-मित्यर्थः वा अथवा अतः एभ्यो हृदयादिभ्यो यत् वस्तु अधिकं प्रियत्वेनातिरिक्तं जगत्या-मस्तीति शेषः तादृशोऽपि प्रियतमः दशरथः आसीदिति सर्वत्रान्वयः। अतएव श्रीमान् राजलक्ष्मीवान् महाराजो दशरथः मम किमिव नासीत् अपि तु सर्वमेवासीदित्यर्थः। दशरथमयं मे जीवनमासीदिति भावः।

अत्र आनन्दस्य चाक्षुषप्रत्यक्षविषयत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, तथा दशरथे हृदयत्वजीवितफलत्वशरीरत्वजीवत्वानामारोपात् निरङ्गं मालारूपकं तथा हृदयादिभ्योऽधिकप्रियवस्तुनोऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरपरातिशयोक्तिः तथा चतुर्थ-चरणगतवाक्यार्थं प्रति प्राथमिकचरणत्रयगतवाक्यार्थानां हेतुत्वात् काव्यलिङ्गम् अर्थापत्ति-श्चेति, एतेषामङ्गाङ्गिभावेन सङ्करः।

"य आधारस्तदधिकरण"मित्यादिवत् तच्चेति प्रक्रान्तसमानलिङ्गत्वेन हृदयविशेषणत्वात् नपुंसकम्। इवशब्दो वाक्यालङ्कारे।

"साक्षात्प्रत्यक्षतुल्ययो"रित्यमरः।

(१) जीवितपदमिति पाठभेदः।

कष्टम्, इयमेव सा कौशल्या।

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥१४॥

---

अहङ्कारविशिष्टपुरुषस्य जीवत्वमाह सांख्यसूत्रम्—

"विशिष्टस्य जीवत्वमन्वयव्यतिरेका"दिति (सा ६ अ ६३ सू)। "जीवत्वं प्राणित्वं तच्चाहङ्कारविशिष्टपुरुषस्य धर्म्म" इति तद्भाष्यञ्च। शिखरिणी वृत्तम् ॥१३॥

यदस्या इति। अस्याः कौशल्यायाः, पत्युर्वा अस्या एव भर्त्तुर्दशरथस्य वा रहसि निर्ज्जनस्थाने यत् परमं दूषितम् अत्यन्तं दूषणं प्रणयकलह इति यावत् अभूत्, तदर्थमहं दम्पत्योः उभयोरेव जायापत्योः पृथक् स्वतन्त्रं यथा स्यात्तथा उपालम्भस्य तिरस्कारस्य विषयः पात्रम् अभूवम्। 'तव सखा मां प्रतीदृशमन्याय्यमाचरितवान् तथापि त्वमुदासीन इति कीदृशी लोकस्त्वं यन्नैनं शिक्षयसि' इत्यं कौशल्या मामुपालब्धवती। तथा 'तव सखी नितरामन्याय्यकारिणी इत्यवगच्छन्नपि उपेक्षमाणो भवानावयोः कलहं कौतुकमिव मन्यते किम्' इत्यं दशरथोऽपि मामुपालब्धवानित्यर्थः। तदनु तदनन्तरं प्रसादे उभयोर्मनोमालिन्यदूरीकरणे कोपे वा क्रोधोत्पादने वा मदधीनो ममायत्तो विधिर्व्यवस्था अभूत्। दम्पती परस्परं प्रति प्रसादयितुं कोपयितुं वा अहमेव समर्थोऽभवमित्यर्थः। अतएवाहमुभयोरपि परमविश्वस्तबन्धुरासमिति भावः। वा अथवा तत् समस्तं तां

---

সেই দশরথ আমার শ্লাঘ্য সম্বন্ধী (বৈবাহিক) ছিলেন এবং তিনি প্রিয়সুহৃদ, তিনি হৃদয়, তিনি সাক্ষাৎ আনন্দ; এমন কি তিনিই জীবনের সমস্ত ফলস্বরূপ ছিলেন; শরীর কিংবা জীবন অথবা ইহা অপেক্ষা অধিক প্রিয়তম যাহা কিছু; রাজলক্ষ্মীশালী মহারাজ দশরথ, আমার নিকট উহার কি না ছিলেন? ॥১৩॥

হায় কি কষ্ট! ইনিই সেই কৌশল্যা।

অরু। হা কষ্টম্! অতিচিরনিরুদ্ধনিশ্বাসনিষ্ঠুরং হৃদয়মস্যাঃ (ড)।

জনকঃ। হা প্রিয়সখি! (কমণ্ডলূদকেন সিঞ্চতি) (১) (ঢ)।

---

ঘটনাবলীমিত্যর্থঃ স্মৃত্বা অলং তৎস্মরণেন নাস্তি প্রয়োজনমিত্যর্থঃ। যৎ ঘটনাবৃন্দং স্মৃতং সদিতি শেষঃ হৃদয়ম্ অবস্কন্দ্য আক্রম্য দহতি শোকরূপেণ পরিণতং সৎ সন্তাপয়তি। পূর্ব্বঘটনাবলীনাং স্মরণেন কেবলং হৃদয়ং শোকাতুরমেব ভবতি, ন তু খল্বিদানীং কিমপি অন্যৎ ফলমস্তীতি নিষ্কর্ষঃ।

অত্র দম্পতীনিষ্ঠদূষণরূপকারণাৎ জনকস্যোপালম্ভরূপকার্য্যোৎপত্তেঃ অসঙ্গতিরলঙ্কারঃ।

প্রথমং বাদ্বয়ং সমুচ্চয়ে। তথা চ—"বা স্যাদ্বিকল্পোপময়োরেবার্থে চ সমুচ্চয়ে" ইতি বিশ্বঃ। "বিবিক্তবিজনচ্ছন্ননিঃশলাকাস্তথা রহঃ" ইত্যমরঃ।

স্মৃত্বা অলমিতি "অলং খল্বোঃ প্রতিষেধয়োঃ ক্ত্বা বে"তি ক্ত্বাপ্রত্যয়ঃ।

শিখরিণী বৃত্তম্ ॥১৪॥

(ড) অরু ইতি। অতিচিরম্ অতিবহুকালং নিরুদ্ধৈরভ্যন্তরাবদ্ধৈঃ নিশ্বাসৈঃ নিষ্ঠুরং কঠোরং কঠোরত্বাৎ নিশ্চলমিত্যর্থঃ। নিশ্বাসাভাবাৎ বক্ষঃস্থলং নিস্পন্দমাস্ত ইতি নিষ্কর্ষঃ।

"কঠোরং নিষ্ঠুরং দৃঢ়"মিত্যমরঃ।

---

উঁহার বা উঁহার স্বামীর নির্জনস্থানে যে গুরুতর দোষ হইত, তাহাতে আমি, ঐ দম্পতির মধ্যে প্রত্যেকের নিকট পৃথক্ পৃথক্ তিরস্কারের পাত্র হইতাম। তাহার পর, প্রসন্নতা জন্মাইতে কিংবা ক্রোধ উৎপাদন করিতে যে কার্য্যের আবশ্যকতা, তাহা আমার অধীন থাকিত; অথবা তাহা স্মরণ করিবার প্রয়োজন নাই, যাহা হৃদয়কে আক্রমণ করিয়া দগ্ধ করে॥১৪॥

(ড) অরুন্ধতী। হায় কি কষ্ট! অতিদীর্ঘকাল নিশ্বাস নিরুদ্ধ করায় ইঁহার হৃদয় নিষ্ঠুর বটে।

---

(১) কমণ্ডলুজলেনেতি পাঠান্তরম্।

কঞ্চুকী। সুহৃদিব প্রকটয্য সুখপ্রদঃ
প্রথমমেকরসামনুকূলতাম্।
পুনরকাণ্ডবিবর্ত্তনদারুণো
বিধিরহো বিশিনষ্টি মনোরুজম ॥১৫॥

কৌশল্যা। (সংজ্ঞাং লব্ধ্বা) হা বচ্ছে! জাণই! কহিং সি,

---

(ঢ) জনক ইতি। হা প্রিয়সখি। কীদৃশীমবস্থাং গতাসীতি শেষঃ। সিঞ্চতি কৌশল্যামিতি শেষঃ।

সুহৃদিতি। বিধির্বিধাতা সুহৃৎ সখেব প্রথমম্ আদৌ বাল্যকালাবধি রামবনবাস-পর্য্যন্তমিত্যর্থঃ, একঃ অবিমিশ্রঃ দুঃখেনাসংযুক্ত ইত্যর্থঃ রসঃ সুখাস্বাদো যস্যাং তাং ধারাবাহিককেবলসুখশালিনীমিত্যর্থঃ অনুকূলতাম্ আনুকূল্যং প্রকটয্য প্রকাশ্য সুখপ্রদঃ সন্ অহো বত পুনঃ অকাণ্ডে অনবসরে বার্দ্ধকে তাদৃশদারুণদুঃখাসহিষ্ণুত্বেন অযোগ্যকাল ইত্যর্থঃ বিবর্ত্তনেন পরিবর্ত্তনেন দারুণো ভয়ঙ্করঃ, রূপান্তরধারণেন নৃশংস ইত্যর্থঃ মনোরুজঃ চিত্তপীড়া বিশিনষ্টি বিশেষেণ করোতি নানাবিধদুর্ঘটনাকরণেন দারুণং দুঃখমুৎপাদয়তীত্যর্থঃ।

অত্র সুখপ্রদবিধের্দুঃখোৎপত্তের্বিষমালঙ্কারঃ সুহৃদিবেতি শ্রৌত্যা উপময়া সঙ্কীর্য্যতে।

"অহো। বিষাদঃ" ইতি শব্দকল্পদ্রুমঃ। "কাণ্ডোঽস্ত্রী দণ্ডবাণার্ববর্গাবসরবারিষু" ইত্যমরঃ।

দ্রুতবিলম্বিতং বৃত্তম্—"দ্রুতবিলম্বিতমাহ নভৌ ভরৌ" ইতি লক্ষণাৎ ॥১৫॥

(ঢ) জনক। হা প্রিয়সখি! (কমণ্ডলুর জলদ্বারা সেক করিতে লাগিলেন।)

কঞ্চুকী। বন্ধুর ন্যায় বিধাতা, প্রথমে ধারাবাহিক এক রকমে অনুকূলতা প্রকাশ করিয়া, সুখদাতা হইয়া, হায়! অসময়ে পরিবর্ত্তননিবন্ধন পুনরায় ভীষণ হইয়া, অতিরিক্ত ভাবে মনের পীড়া জন্মাইতেছেন ॥১৫॥

सुमरामि दे विश्राहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तसुद्धहसिदमुद्धमुहपुण्डरीअं, आपप्फुरन्तकोमुदचन्दचन्दिआसुन्दरेहिं अङ्गेहिं उल्लासेहि; जादे! पुणोवि उज्जोएहि उच्छङ्गं। सव्वदा महाराओ भणादि, एसा रहुउलमहत्तराणं वह्न अम्माणं उण जणअसम्बन्धेण दुहिदिआ एव्व (ग)।

---

(ग) हा वत्से! जानकि! कास्मिन्नसि, स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरच्छुद्धहसितमुग्धमुखपुण्डरीकम्, आस्फुरत्कौमुदचन्द्रचन्द्रिकासुन्दरैरङ्गैरुल्लासय, जाते! पुनरप्युद्द्योतयोत्सङ्गम्, सर्वदा महाराजो भणति, एषा रघुकुलमहत्तराणां वधूः, अस्माकं पुनर्जनकसम्बन्धेन दुहिता एव।

---

(ग) कौशल्येति। संज्ञां चैतन्यम्। विवाहलक्ष्म्याः विवाहकालीनशोभायाः परिग्रहो धारणमेव एकम् अद्वितीयं मण्डनं भूषणं यस्य तत्, कृत्रिमालङ्काराभावेऽपि तात्कालिकस्वाभाविकशोभयैव अतीवशोभितमित्यर्थः। प्रस्फुरता विकसता शुद्धेन निर्मलेन हसितेन स्मितेन मुग्धं मनोहरं मुखं पुण्डरीकं पद्ममिव तत् तथोक्तं स्मरामीत्यनेनान्वयः। आस्फुरन्ती सम्यक् प्रकाशमाना कौमुदस्य कार्त्तिकमासीयस्य चन्द्रस्य चन्द्रिका ज्योत्स्ना तद्वत् सुन्दरैः अङ्गैरवयवैः उल्लासय आनन्दय अस्मानिति शेषः। जाते! कन्यातुल्ये! उत्सङ्गं क्रोडम् उद्द्योतय प्रकाशय उपवेशनेनेत्यर्थः। महाराजो दशरथः, भणति ब्रवीति स्म। किमित्याह, एषा सीता रघुकुलस्य महत्तराणां प्राचीनानाम् अस्मत्पितृपितामहादीनामितरार्थः वधूः स्नुषा, पुनः किन्तु जनकसम्बन्धेन जनकेन सह मित्रत्वरूपसम्बन्धेन दुहिता एव कन्यैव, जनकस्य यो यादृशः सम्बन्धो अस्माकमपि स तादृशः सम्बन्धो जनकस्य मम च अभिन्नहृदयत्वात्, अतएव जनकस्य या कन्या सा ममापि कन्येति भावः।

अत्र मुखपुण्डरीकमित्यत्र चन्द्रिकासुन्दरैरित्यत्र च लुप्तोपमालङ्कारः। तथा चन्द्रिकेत्यनेनैव अभिप्रेतार्थनिर्वाहे पुनश्चन्द्रपदोपादानात् पुनरुक्ततादोषः, चन्द्रपदपरित्यागेन स समाधेयः।

भणतीति "प्रयोगतये"ति अतीते वर्त्तमाना।

कञ्चुकी। यथाह देवी (त)।
पञ्चप्रसूतेरपि राज्ञ आसीत्
प्रियो विशेषेण सुबाहुशत्रुः।
वधूचतुष्केऽपि यथैव शान्ता
प्रिया तनूजास्य तथैव सीता ॥१६॥

(त) कञ्चुकीति। देवी कौशल्या, यथाह सत्यं ब्रवीति।

यथार्थत्वं स्वयमपि प्रतिपादयति पञ्चेति। सुबाहो सुबाहुनामकराक्षसस्य शत्रुः हन्ता रामः, प्रसूयते उत्पाद्यते या सा प्रसूतिरपत्यम्, पञ्च प्रसूतयः अपत्यानि यस्य तस्य, रामादयश्चत्वारः पुत्राः, शान्ता च एका कन्येति पञ्चापत्यशालिन इत्यर्थः राज्ञो दशरथस्य विशेषेण अन्येभ्य आधिक्येन प्रियः आसीत्। शान्ता तदाख्या तनूजा कन्या यथैव प्रिया, वधूचतुष्केऽपि स्नुषाचतुष्टयेऽपि मध्ये सीता तथैव प्रिया आसीत्।

अत्र आसीदित्येकक्रियया सुबाहुशत्रुसीतयोरन्वयात् तुल्ययोगितालङ्कारः उपमया सङ्कीर्य्यते।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥१६॥

(থ) কৌশল্যা। (সংজ্ঞা লাভ করিয়া) হা বৎসে! জানকি! তুমি কোথায় আছ; বিবাহের শ্রীধারণই যাহার একমাত্র অলঙ্কার ছিল এবং প্রস্ফুটিত নির্ম্মল হাস্যে যাহা মনোহর হইত, তোমার সেই মুখকমলখানিকে আমি স্মরণ করিতেছি। কার্ত্তিকমাসীয় চন্দ্রের প্রকাশমান জ্যোৎস্নার ন্যায় মনোহর অঙ্গদ্বারা আমাদিগকে আনন্দিত কর; হে কন্যে! আবার আমার কোল উজ্জ্বল কর। মহারাজ (দশরথ) সর্ব্বদা বলিতেন—এই সীতা, রঘুকুলের প্রাচীনদিগের বধূ: আমাদের কিন্তু জনকের সহিত সখিত্ববশতঃ কন্যাই।

(ত) কঞ্চুকী। রাণী ঠিক বলিয়াছেন।

রাজা দশরথের পাঁচটী সন্তান থাকিলেও তাহাদের মধ্যে রামচন্দ্রই বিশেষ

जनकः। हा प्रियसख! महाराज दशरथ! एवमसि सर्वप्रकारहृदयङ्गमः कथं विस्मर्य्यसे (थ)।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धवीजन्तु तत्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग् जीवितम्॥१७॥

---

(थ) जनक इति। सर्वेण प्रकारेण हृदयङ्गमः हृद्यः प्रीतिभाजनमिति यावत्। अतीवप्रीतिभाजनरूपो जनः सर्वदैव मनसि वर्त्तत इति बहुकालात्ययेऽपि विस्मर्त्तुं न शक्यत इति भावः।

कन्याया इति। किलेति लोकवार्त्तायाम्। कन्यायाः पितरः पितृपक्ष इत्यर्थः जामातुः कन्याभर्त्तुः आप्तं बन्धुत्वेन विश्वस्तं पित्रादिकमित्यर्थः जनं पूजयन्ति दानानुगत्यादिना सम्मानयन्ति, इयमेव साधारणी चिरन्तनी रीतिरिति किलशब्दस्यार्थः। किन्तु सम्बन्धे आवयोरस्मिन् वैवाहिकत्वसम्बन्धे तत् पूजनं विपरीतमेव समाजप्रचलितरीतिविरुद्धमेव अभूत्। तत् वैपरीत्यमेवाह आराधनं ते मयीति। ते तव जामातृपितुः मयि कन्यापितरि आराधनं दानानुगत्यसान्त्ववादादिना सम्माननम् इत्येव विपरीतमित्यर्थः। त्वं तथाविधोऽपि अशास्त्रीयां तां समाजरीतिमननुरुन्धन् केवलसरलतौदार्य्यगुणेन बन्धुजनसम्मानकारकः कालेन समयेन अपहृतः लोकान्तरं प्रापितः, अपीति निन्दासूचकमव्ययम्। भवादृशमतपुरुषापहरणं कालस्य नितान्तमनुचितमिति भावः। तथा तत् सीतारूपं सम्बन्धवीजम् आवयोर्वैवाहिकत्वसम्बन्धमूलञ्च कालेनापहृतमित्यन्वयः। अतएव अस्मिन् घोरे अशेषक्लेशकारणत्वात् भयङ्करे जीवलोको नरक इव जीवलोक एव नरको वा तस्मिन्

প্রিয় ছিলেন এবং চারিটী বধূ থাকিলেও কন্যা শান্তা যেমন প্রিয়া ছিলেন, সীতা ইঁহার তেমনই প্রিয়া ছিলেন॥১৭॥

(থ) জনক। হা প্রিয়সুহৃদ! মহারাজ দশরথ! আপনি সর্ব্বপ্রকারে এইরূপ প্রিয়তম ছিলেন; কি প্রকারে আপনাকে বিস্মৃত হইব?

' कौशल्या। जादे जाणइ! किं करेमि, दढ़वज्जलेव घड़िअबन्धणिच्चलं ज्जेव हदजोविदं मं मन्दभाइणीं ण परिच्चअइ (द)।

---

(द) जाते जानकि। किं, करोमि, दृढवज्रलेपघटितबन्धनिश्चलमिव हतजीवितं मां मन्दभागिनी न परित्यजति।

---

पापस्य पापवतः पापं विना दुःखभोगी न स्यादिति भावः। मम जीवितं जीवितावस्थया अवस्थानं धिक् निन्दामौत्यर्थः। इदानी मम मरणमेव श्रेय इति भावः।

अत्रोपमारूपकयोः सन्देहसङ्करालङ्कारः उभयोरपि साधकबाधकप्रमाणाभावात् काव्यलिङ्गञ्च। तथा पूजयन्तीत्यभिधाय पुनराराधनमित्यभिधानात प्रक्रमभङ्गः, तथा सम्बन्धबीजमित्यत्र समुच्चयार्थकचकार आवश्यकः किन्तु नोक्त इति वाच्यानभिधानञ्चेति दोषद्वयम्, आराधनमित्यत्र 'सम्पूजनम' सम्बन्धबीजन्तु इत्यत्र च "सम्बन्धबीजञ्चे"ति पाठेन समाधेयम्।

"वार्त्ता सम्भाव्ययोः किल।" "आमः प्रत्ययितस्त्रिषु।" "गर्हासमुच्चयप्रश्नशङ्कासम्भावना-स्वपी"ति चामरः।

शार्दूलविक्रीडितं वृत्तम्॥१७॥

(द) कौशल्येति। जाते। पुत्रि। दृढेन दीर्घकालस्थायिना वज्रलेपेन वज्रनिर्म्मितलेपेन घटितो विहितो यो बन्धः संयोगः तेन निश्चलं सुस्थिरं गन्तुमसमर्थ मित्यर्थः, हतजीवितमिव दुर्भाग्यप्राणा एव कर्त्तृ मां मन्दभागिनो न परित्यजति। अहन्तु जीवनं त्यक्तुमिच्छाम्येव सीताभावे जीवनधारणस्य निष्फलत्वादिति भावः।

কন্যার পিতৃপক্ষ, জামাতার বন্ধুজনের পূজা করিয়া থাকে; কিন্তু আমাদের সম্বন্ধে তাহা বিপরীতই হইয়াছিল, আপনিই আমার পূজা করিতেন। আপনি সেইরূপ হইলেও কাল আপনাকে এবং সম্বন্ধের মূলকারণ সীতাকে অপহরণ করিয়া নিয়াছে; সুতরাং এই ভয়ঙ্কর জীবলোক-রূপ নরকে, পাপিষ্ঠ আমার জীবিত থাকাকেই ধিক্॥১৭॥

अरु। आश्वसिहि राजपुत्रि ! वाष्पविश्रामोऽप्यन्तराले (१) कर्त्तव्य एव, अन्यच्च किं न स्मरसि, यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुः, तदुपजातमेव, (२) किन्तु कल्याणोदर्कं भविष्यति (ध)।

कौशल्या। भअवदि ! अदिक्कन्तो मणोरहो (३) (न)।

(न) भगवति ! अतिक्रान्तो मनोरथः।

(ध) अरु इति। अन्तराले अवसरे मध्ये मध्ये इत्यर्थः, वाष्पविश्रामोऽपि अश्रुविसर्जनविरामोऽपि। केवलमविरतं रोदनं न कर्त्तव्यमित्यर्थः तथात्वे चक्षुर्नाशाद्यनिष्टसम्भावनासत्त्वादिति भावः। अन्यच्च वाष्पविसर्जनविरामकारणमित्यर्थः ब्रवीमीति शेषः। कुलगुरुः वशिष्ठः। उपजातमेव जातप्रायमेव नात्र सन्देह इत्येवशब्दार्थः। कल्याणं मङ्गलम् उदर्कं उत्तरफलं यस्य तत् कल्याणोदर्कं भविष्यति एतदवस्थान्तरमिति शेषः। ऋष्यशृङ्गाश्रमे तस्य यज्ञसम्पादनाय गतो भगवान् वशिष्ठः लोकपरम्पराश्रुतसीताविसर्जनव्यापारो भृशशोकाकुलां कौशल्यामिदमाह स्म—"भद्रे। समाश्वसिहि, पुत्रपूर्णोत्सङ्गामिव जानकीं पुनर्द्रक्ष्यसि" इति वाक्यस्य सत्यताविश्वासवशादरुन्धत्याः सान्त्ववादोऽयमिति मन्तव्यम्। "उदर्कः फलमुत्तर"मित्यमरः।

(ন) কৌশল্যা। কন্যে ! জানকি ! কি করিব পোড়া জীবনের বন্ধন বজ্রলেপদ্বারা দৃঢ়ভাবে যেন যোজিত হওয়ায় একেবারে নিশ্চল হইয়া গিয়াছে ; তাই মন্দভাগিনী আমাকে পরিত্যাগ করিতেছে না।

(ধ) অরুন্ধতী। রাজকন্যে ! আশ্বস্ত হও ; মধ্যে মধ্যে অশ্রুবিসর্জনের বিরামও করিতে হইবে ; তাহার আরও কারণ আছে ; তুমি কি স্মরণ করিতেছ না ? ঋষ্যশৃঙ্গের আশ্রমে তোমাদের কুলগুরু যে বলিয়াছিলেন ; তাহা হইয়াছেই ; কিন্তু ভবিষ্যৎ ফল মঙ্গলময় হইবে।

(१) अन्तरे इति पाठभेदः। (२) तत्तथैवोपजातमेव इति पाठान्तरम्। (३) कुदो अदिक्कन्दमणोरहाए मह एदं इति क्वचित् पाठः।

अरु। तत् किं मन्यसे राजपुत्रि! (१) मृषोद्यं तदिति, नहीदं सुक्षत्रिये! अन्यथा मन्तव्यम्, भवितव्यमेव तेन (प)।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥१८॥

(न) कौशल्येति। मनोरथ: अभिलाष: सीतापुनर्दर्शनाकाङ्क्षेति यावत् अतिक्रान्त: अतीत: चिराय नष्ट इत्यर्थ:। नानाश्वापदसङ्कुलारण्ये निर्वासनेन सीताया एव अभावादिति भाव:।

(प) अरु इति। तत् तदेतदर्थ: तत कुलगुरोर्वचनं मृषोद्यं मिथ्यावाक्यम् इति किं मन्यसे? हे सुक्षत्रिये! सत्क्षत्रियवंशजाते। इदं गुरुवचनम् अन्यथा मिथ्याभूतं नहि मन्तव्यम्, तेन गुरुवचनेन भवितव्यमेव सत्येन भाव्यमेव। अवश्यमेव सपुत्रामेव सीतां पुन: द्रक्ष्यसि युष्मत्कुलगुरुमहर्षीणां त्रिकालज्ञानामृषीणां महासत्यवादित्वादिति भाव:।

मृषा उद्यते मिथ्या उच्यत इति मृषोद्यं "नाम्नि वद: क्यप् चे"ति क्यप्।

तेषां महासत्यवादितां प्रतिपादयति आविरिति। आविर्भूतं प्रकाशितं ज्योति: ब्रह्माख्यं तेजो येषां तेषां कृतब्रह्मसाक्षात्काराणामित्यर्थ: ब्राह्मणानां ये व्याहारा उक्तय: तेषु संशय: वाक्यमिदं सत्यं मिथ्या वेति सन्देहो माभूत् न भवतु तवेति शेष:। हि यस्मात् एषां ब्राह्मणानां वाचि वाक्ये भद्रा कल्याणी निर्दोषेत्यर्थ: लक्ष्मी: यथार्थता

(न) কৌশল্যা। ভগবতি! মনের আশা লোপ পাইয়াছে।

(প) অরুন্ধতী। রাজপুত্রি! তবে কি তাহা মিথ্যা কথা বলিয়া মনে করিতেছ? হে সৎক্ষত্রিয়বংশজাতে! ইহা মিথ্যা বলিয়া মনে করিও না; তাহা হইবেই। (কারণ,)

(१) राजपुत्रि! इति पाठान्तरम्।

(नेपथ्ये कलकलः)। (फ)

(सर्वे आकर्णयन्ति)। (ब)

जनकः। अद्य खलु शिष्टानध्याय इत्युद्धतं खेलतां वटूनां कलकलः (भ)।

---

सम्पत्तिः निषक्ता नियतलग्ना। अन्यच्च एते ब्राह्मणाः विप्लुताम् अर्थविप्लवशालिनीं मिथ्याभूतामिति यावत् वाचं वाक्यं न व्याहरन्ति न वदन्ति।

अत्र ब्राह्मणानां वाक्ये संशयकर्त्तव्यत्वाभावरूपकार्य्यस्य तदीयसत्यरूपकारणेन समर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

"व्याहार उक्तिर्लपितम्।" "सम्पत्तिः श्रीश्च लक्ष्मीश्च" इति चामरः।

एतत्तृतीयचरणानुरूपं वाक्यं पाणिनिमहाभाष्येऽपि दृश्यते। यथा—

"भद्रैषां लक्ष्मीर्निहिताधि वाचि।"

एकादशीतत्त्वधृतं विष्णुवचनञ्च—

"ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः।

ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित्॥"

शालिनी वृत्तम्॥१८॥

(फ) नेपथ्य इति। नेपथ्ये वेशरचनास्थाने, कलकलः कोलाहलः।

(ब) सर्वे इति। आकर्णयन्ति उत्कर्णाः सन्त इति शेषः।

(भ) जनक इति। 'कुतस्त्योऽयं कलकल' इति कौशल्यादीनामनुमितं संशयं निराकर्त्तुमाह अद्येति। शिष्टानां वंशपरम्परया वेदाध्यायिनाम् अनध्यायो अध्ययनाध्यापनाविरामः, इति हेतोः, उद्धतम् उल्लम्फन-द्रुतधावनादिरूपं यथा स्यात्तथा खेलतां

---

যাঁহাদের ব্রহ্মসাক্ষাৎকার হইয়াছে ; সেই সকল ব্রাহ্মণদিগের যে সকল উক্তি, তাহাতে যেন সংশয় না হয়। কারণ, ইঁহাদের বাক্যে উৎকৃষ্ট সত্যসম্পদ লাগিয়াই থাকে ; উঁহারা মিথ্যা কথা বলেন না॥১৮॥

(ফ) (নেপথ্যে কোলাহল।)

(ব) (সকলে শুনিতে লাগিলেন।)

कौशल्या। सुलहसोक्खं दाव बालत्तणं होदि। (निरूप्य) अम्महे। एदाणं मज्झे को एसो रामभद्दलच्छीपरिसोहिदेहिं सावट्टम्भमुद्धललिदेहिं अङ्गेहिं अम्हाणं वि लोअणाइं सोदलावेदि (म)।

(म) सुलभसौख्यं तावत् बालत्वं भवति। अहो! एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्धललितैरङ्गैः अस्माकमपि लोचनानि शीतलयति।

क्रीड़ां कुर्वतां वटूनां ब्राह्मणकुमाराणाम्। अद्य वशिष्ठादीनामागमनेन अनध्यायी जात इति पाठाभावात् निरुद्वेगोत्फुल्लचित्ता ऋषिकुमाराः कोलाहलं कुर्वन्त उल्लम्फनद्रुतधावनादिरूपां खेलां कुर्वन्तीत्यर्थः।

जनसमागमादनध्यायमाह मनुः—"अनध्यायो रुद्यमाने समवाये जनस्य च।"

शिष्टमाह वशिष्ठः—"पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः।

ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥"

(म) कौशल्येति। बालत्वं शैशवम्, सुलभं सांसारिककार्य्यकलापचिन्ताभावात् अनायासलभ्यं सौख्यं सुखं यत्र तत्। शैशवसमये हि यतः कुतश्चिदेव कारणात् सुखमुत्पद्यत इति मनः स्फूर्त्तिमन्त एते अनध्यायसुखमेव कलकलेन प्रकटयन्तीति भावः। रामभद्रस्य या लक्ष्मीः शरीरशोभा तया तत्सदृशशोभयेत्यर्थः इति निदर्शनालङ्कारः, अवष्टम्भेन सौष्ठवेन सह विद्यमानानि सावष्टम्भानि सुघटितत्वात् अतीवप्रशस्तानीत्यर्थः मुग्धानि सुन्दराणि, ललितानि मनोहरविन्यासभङ्गियुक्तानि च तैः अङ्गैः हस्तपदाद्यवयवैः, अस्माकमपि ससम्पर्काणां का कथा निःसम्पर्काणामप्यस्माकमित्यर्थः। शीतलयति सुखशीतलानि करोति।

"सौष्ठवं स्यादवष्टम्भ" इति हलायुधः। ललितमाह उज्ज्वलनीलमणिः—

"विन्यासभङ्गिरङ्गानां भ्रूविलाससमनोहरा।

सुकुमारा भवेद्यत्र ललितं तदुदीरितम्॥"

(ভ) জনক। আজ বেদপাঠীদিগের অনধ্যায়; এই জন্য যাহারা উদ্ধতভাবে খেলা করিতেছে, সেই ব্রাহ্মণবালকগণের কোলাহল।

अरु। (अपवार्य्य सहर्षोत्कण्ठं स्वगतम्) इदं नाम तद्भागीरथीनिवेदितरहस्यं कर्णामृतम्, न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति (य)।

जनकः। कुवलयदलश्यामस्निग्धः (१) शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्लोकः श्रियेव सभाजयन्।

(य) अरु इति। अपवार्य्य देहपरिवर्त्तनेन कौशल्यादीनां श्रवणायोग्यतामदत्त्वेत्यर्थः। तल्लक्षणमाह साहित्यदर्पणे—

"—तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते॥"

भागीरथ्या गङ्गया निवेदितं ज्ञापितं रहस्यं गुप्तविवरणं जन्मावस्थित्यादिकं यस्य तत् तथोक्तम्, कर्णयोरमृतं पीयूषवदामोदजनकम् इदं तत् वचनं वचनाभिधेयः कुशलवयोः कश्चिदित्यर्थः वाच्यवाचकयोरभेदविवक्षयोपपत्तिः तु किन्तु आयुष्मतोः दीर्घजीविनोः कुश लवयोर्मध्ये अयं कतरः क इत्येवं न विद्मः न जानीमः। भागीरथीकथितानुरूपाकृतिदर्शनात् कुशलवयोरेकोऽयमिति सामान्यतो निश्चेतुं शक्नोमि, किन्तु कुशोऽयं किंवा लवोऽयमिति विशेषेण निश्चेतुं न शक्नोमि पूर्वमदर्शनादिति भावः। कर्णामृतमिति निरङ्गं केवल-रूपकमलङ्कारः।

---

(ম) কৌশল্যা। বাল্যকালে সুখটা সুলভই হইয়া থাকে। (নিরূপণ করিয়া) ওমা! ইহাদের মধ্যে এটী কে, রামভদ্রের শোভায় পরিশোভিত, সুলক্ষণ, সুন্দর এবং সুন্দরভঙ্গিসমন্বিত অঙ্গদ্বারা আমাদের নয়নও শীতল করিতেছে?

(য) অরুন্ধতী। (ফিরিয়া, আনন্দ ও উৎকণ্ঠার সহিত স্বগত) গঙ্গাদেবী যে গুপ্ত বৃত্তান্ত জানাইয়াছিলেন, আমি মনে করি, ইহাই সেই কর্ণের অমৃতরূপ বৃত্তান্ত; কিন্তু আয়ুষ্মান কুশ ও লবের মধ্যে এটী কে? ইহা বুঝিতেছি না।

---

(१) स्निग्धश्याम इति पाठान्तरम्।

पुनरिव शिशुर्भूतो (१) वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥१८॥

कञ्चुकी। नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये (२)।

कुवलयेति। कुवलयस्य उत्पलस्य दलवत् पत्रवत् श्यामः श्यामलः तथा स्निग्धः मसृणः स तथोक्तः, तथा शिखण्डकः काकपक्षः मण्डनं भूषणं यस्य सः, तथा पुण्या पवित्रा श्रीः शोभा यस्य सः, तथा श्रिया देहशोभया वटुपरिषदं ब्राह्मणकुमारवर्गं सभाजयन् अलङ्कुर्वन्निव स्थित इति शेषः, पुनः शिशुर्भूतः शैशवमापन्नः स मे वत्सो रघुनन्दनो राम इव कोऽयं बालकः दृष्टः अवलोकितः सन् झटिति द्रुतं दर्शनमात्रमेवेत्यर्थः दृशोश्चक्षुषोः अमृताञ्जनं सुधाया मक्षणं कुरुते अमृतेन चक्षुषी लिम्पतीवेत्यर्थः।

अत्र अमृताञ्जनं कुरुत इति भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः, सभाजयन्निवेति वाच्या क्रियोत्प्रेक्षा, तथा पुनः शिशुर्भूतो रघुनन्दन इवेति वाच्या द्रव्योत्प्रेक्षा, तथा कुवलयदलश्यामस्निग्ध इति लुप्तोपमा च इत्येतेषां परस्परनिरपेक्षस्थितेः संसृष्टिः। शिखण्डकमण्डन इत्यत्र छेकानुप्रासः।

"अञ्जनं। मक्षणम्" इति शब्दकल्पद्रुमः। हरिणी वृत्तम् ॥१८॥

(२) कञ्चुकीति। अयं दृश्यमानो दारको बालकः ब्रह्म चरतीति ब्रह्मचारी नवोपनीतो गुरुकुले निवसन् वेदमधीयान इत्यर्थः। क्षत्रियश्चासौ ब्रह्मचारी चेति सः। नूनं निश्चितं भवेदिति शेषः, इति मन्ये सम्भावयामि।

---

জনক। নীলোৎপলদলের ন্যায় শ্যামবর্ণ, স্নিগ্ধ, কাকপক্ষশোভিত এবং পবিত্র শোভাসম্পন্ন, আর সেই দেহশোভাদ্বারা ব্রাহ্মণবালকগণকে যেন অলঙ্কৃত করিতেছে; সুতরাং আমার বৎস সেই রামচন্দ্র যেন পুনরায় বালক হইয়াছেন; আর দৃষ্টিগোচর হইয়া, হঠাৎ নয়নযুগলে অমৃতলেপের কার্য্য করিতেছে; অতএব এই বালকটী কে? ॥১৮॥

(২) কঞ্চুকী। আমি মনে করি, এই বালকটী নিশ্চয়ই ক্ষত্রিয়ব্রহ্মচারী হইবে।

---

(१) भूत्वा इति पाठभेदः।

जनकः। एवमेतत् (१)। तथाहि—(ल)

चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोम-(२) पवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्म्मुकमक्षसूत्रवलयं दण्डं तथां (३) पैप्पलम् ॥२०॥

---

(ल) जनक इति। एतत् क्षत्रियब्रह्मचारीति यदुक्तं तदेव सत्यमित्यर्थः। स्वयमपि तत् समर्थयति तथाहीति।

चूड़ेति। अयं बालकः, पृष्ठतः अभितः पृष्ठस्य उभयोः पार्श्वयोः चूड़ाभिः शिखाभिः केशाग्रैरित्यर्थः चुम्बितानि स्पृष्टानि कङ्कपत्राणि कङ्कनामकपक्षिपक्षाः सरलशीघ्रगमनार्थं बाणमूलभागे दत्ता यस्य तत्तथोक्तं तूणीद्वयं तूणीरयुगलम्, लम्बितकेशाग्रसंस्पृष्टबाणान्वितरतूणीरद्वयमित्यर्थः। तथा भस्मनां स्तोमेन पुञ्जेन पवित्रं लाञ्छनं चिह्नं यत्र तादृशम्, पवित्रहोमवह्निभस्मना चिह्नितमित्यर्थं उरो वक्षःस्थलम्। तथा रुरोर्मृगविशेषस्येयम् इति रौरवी तां त्वचं चर्म्म, मृगचर्म्मरूपमुत्तरीयमित्यर्थः। मूर्वायाः तृणविशेषस्येयमिति मौर्वी तया, मूर्वासूत्रनिर्म्मितयेत्यर्थः मेखलया काञ्च्या कटिसूत्रेणेति यावत् नियन्त्रितं निबद्धं मञ्जिष्ठया संसृष्टमिति माञ्जिष्ठकं मञ्जिष्ठानामलतारञ्जितमित्यर्थः अधोवासः परिधेयवसनञ्च। तथा पाणौ करे कार्म्मुकं धनुः तथा अक्षसूत्रवलयं वलयीकृतां सूत्रग्रथितजपमालामित्यर्थः, तथा पिप्पलस्य अश्वत्थस्य अश्वत्थशाखाया इत्यर्थः अयमिति पैप्पलः तं दण्डञ्च धत्ते बिभर्त्ति। वामपाणौ धनुः, दक्षिणमणिबन्धे जपमालां दक्षिणपाणौ च दण्डं धत्ते इत्यर्थः। एभिश्चिह्नैः क्षत्रियब्रह्मचारी अयमिति निर्णीयत इति भावः।

अत्र धत्त इत्येकया क्रियया तूणीद्वयादीनां कर्म्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः।

---

(ল) জনক। ইহা সত্য। দেখ—

---

(१) एवमेव इति भिन्नः पाठः। (२) भस्मस्तोक इति क्वचित् पाठः।
(३) दण्डोऽपर इति पाठभेदः।

ভগবত্যরুন্ধতি! কিমুৎপ্রেক্ষসে কুতস্ত্যোয়মিতি। (ব)
অরু। অদ্যৈব বয়মপ্যাগতাঃ (১) (য)।

ক্ষত্রিয়ব্রহ্মচারিণো রৌরবীত্তরীয়াদিধারণমাহ মনুঃ—

"কার্ষ্ণরৌরববাস্তানি চর্ম্মাণি ব্রহ্মচারিণঃ।
বসীরন্নানুপূর্ব্বেণ শাণক্ষৌমাবিকানি চ॥
মৌঞ্জী ত্রিবৃৎ সমা শ্লক্ষ্ণা কার্য্যা বিপ্রস্য মেখলা।
ক্ষত্রিয়স্য তু মৌর্ব্বীজ্যা বৈশ্যস্য শণতান্তবী॥"

গৌতমঃ—"বৈল্বপালাশৌ ব্রাহ্মণস্য দণ্ডৌ, অশ্বত্থপৈলবৌ শেষে।"

"সমীপোভয়তঃ শীঘ্রসাকল্যাভিমুখ্যেঽভিতঃ।" "বোধিদ্রুমশ্চলদলঃ পিপ্পলঃ কুঞ্জরাশনঃ। অশ্বত্থে" ইতি চামরঃ। "অক্ষসূত্রং। জপমালা" ইতি শব্দকল্পদ্রুমঃ।

অভিত ইতি "পর্য্যভিভ্যাং সর্ব্বোভয়ার্থে"মিতি তসিঃ। পৃষ্ঠত ইতি "তসোভয়াভি-পরিসর্ব্বে"ত্যুপসংখ্যায়া দ্বিতীয়ায়াঃ "সর্ব্ববিভক্তিভ্যস্তস্" ইতি তস্।

শার্দ্দূলবিক্রীড়িতং বৃত্তম্॥২০॥

(ব) ভগবতীতি। অয়ং বালকঃ কুত আগত ইতি কুতস্ত্যঃ, ইতি অস্মিন্ বিষয়ে কিমুৎপ্রেক্ষসে বুধ্যসে কিমনুমিনোষীত্যর্থঃ। তদ্‌ব্রূহীতি ভাবঃ।

কুতস্ত্য ইতি "অব্যয়াত্ত্যপ্" ইতি ত্যপ্‌প্রত্যয়ঃ।

পৃষ্ঠের দুই দিকে দুইটী তূণীর ধারণ করিতেছে; তাহার ভিতরের বাণগুলির কঙ্কপক্ষ সকল, লম্বিত কেশকলাপকর্তৃক স্পৃষ্ট হইতেছে; বক্ষঃস্থলে পবিত্র ভস্মরাশির চিহ্ন রহিয়াছে; রুরুর (হরিণ বিশেষের) চর্ম্ম ধারণ করিয়াছে; পরিধেয় বসন, মঞ্জিষ্ঠারাগে রঞ্জিত এবং তাহা, মৌর্ব্বী মেখলাদ্বারা বদ্ধ; আর বামহস্তে ধনু এবং দক্ষিণহস্তে জপের মালা ও অশ্বত্থের দণ্ড রহিয়াছে॥২০॥

(ব) ভগবতি! অরুন্ধতি! এ বালকটী কোথা হইতে আসিয়াছে, এ বিষয়ে আপনি কি মনে করেন?

---

(১) অদ্যৈব বয়মাগতা ইতি বিভিন্নঃ পাঠঃ।

जनकः। आर्य्यगृष्टे! अतीव मे कौतुकं वर्त्तते, तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ, इमञ्च बालकं ब्रूहि, केऽप्येते प्रवयसस्त्वां दिदृक्षव इति (ष)।

कञ्चुकी। यदाज्ञापयसि। (इति निष्क्रान्तः।) (स)

कौशल्या। किं भणाध, एव्वं भणिदो आगमिस्सदित्ति (ह)।

---

(ह) किं भणत, एवं भणित आगमिष्यतीति।

---

(श) वयमिति। न केवलं भवन्तः, अपि तु वयमप्यद्यैवागता इत्यर्थः। अतएव भवत्समाना वयं पूर्वमदर्शनात् नैनं परिचिनुम इति भावः।

वयमिति "वास्मदश्चे"ति बहुवचनम्। अहमिति तदर्थः। नैनं परिचिनुम इत्यस्मी मिथ्योक्तिः स्यादित्यतः अद्यैतायुक्ता कलेन वृत्तान्तगोपनं कृतमिति बोध्यम्।

(ष) जनक इति। केऽपि त्वया अपरिचिता इत्यर्थः, एते दृश्यमानाः, प्रकृष्टं प्रचुरं वयो येषां ते प्रवयसः स्थविराः। दिदृक्षवः द्रष्टुमिच्छवः। इति ब्रूहीत्यर्थः।

(स) कञ्चुकीति। यदाज्ञापयसि तदेवानुतिष्ठामीत्यर्थः।

(ह) कौशल्येति। एवं भणितः कञ्चुकिना जनकोपदिष्टप्रकारेणोक्तः आगमिष्यति किमित्यर्थः, इति विषये यूयं किं भणथ इत्यर्थः।

---

(শ) অরুন্ধতী। আমরাও অদ্যই আসিয়াছি।

(ষ) জনক। আর্য্যগৃষ্টি! আমার বড়ই কৌতূহল হইয়াছে; অতএব আপনি ভগবান্ বাল্মীকির নিকট যাইয়া জিজ্ঞাসা করুন এবং এই বালকটীকে বলুন যে, "তোমার অপরিচিত এই বৃদ্ধগণ তোমাকে দেখিতে ইচ্ছা করেন।"

(স) কঞ্চুকী। যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেলেন।)

(হ) কৌশল্যা। এইরূপ বলিলে আসিবে কি? এ বিষয় আপনারা কি বলেন?

अरु। भिद्येत किं सदृत्तमीदृशस्य निर्म्माणस्य (१)? (घ)

कौशल्या। (निरूप्य) कहं सविणअं णिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इदो अहिमुहं पसरिदो ज्जेव सो वच्छो (क)।

जनकः। (चिरं निर्वर्ण्य।) भोः! किमप्येतत् (ख)।

---

(क) कथं सविनयं निशामितगृष्टिवचनः विसर्जितऋषिदारक इतः अभिमुखं प्रसृत एव स वत्सः।

---

(घ) अरु इति। ईदृशस्य अद्भुतसौन्दर्य्यशालिनः निर्म्माणस्य सृष्टेः।

"क्रचिद्धितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् विधात्रा परमसुन्दरीकृत्य निर्म्मितस्येत्यर्थः, सद्वृत्तं सच्चरित्रं किं भिद्येत वियुज्येत, अपि तु कथमपि नेत्यर्थः। "यत्राकृतिस्तत्र गुणा वसन्ती"ति न्यायात् सुन्दराकृतिमान् विनयान्न प्रच्यवत इति भावः।

(क) कौशल्येति। निरूप्य विशेषेणावलोक्य। निशामितं श्रुतं गृष्टेस्तदाख्यस्य कञ्चुकिनः वचनं येन सः। विसर्जिताः त्यक्ताः ऋषीणां मुनीनां दारका बालका येन सः, मुनिबालकवृन्दान्निःसृत्य इत्यर्थः, इतोऽभिमुखम् अस्मान् प्रतीत्यर्थः प्रसृतः प्रस्थितः।

विसर्जितऋषिदारक इति "ऋत्यनित्यसमासेऽनुपसर्गसमानस्य ह्रस्वश्चे"ति सन्धिप्रकृतिः।

(ख) जनक इति। भो इति कौशल्यादीनां सम्बोधने। एतत् बालकरूपं वस्तु किमपि अनिर्वचनीयमाश्चर्य्यमित्यर्थः।

---

(घ) অরুন্ধতী। এইরূপ আকৃতির কি সদ্ব্যবহার নষ্ট হয়?

(ক) কৌশল্যা। (দেখিয়া) সেই বৎসটী, বিনয়ের সহিত গৃষ্টির (কঞ্চুকীর) বাক্য শুনিয়া, ঋষিবালকদিগকে পরিত্যাগ করিয়া, এই আমাদের অভিমুখেই আসিতেছে।

(খ) জনক। (বহুকাল যাবৎ দেখিয়া) ওহে! এ কোন্ অনির্বচনীয় বস্তু!

---

(१) भिद्येत वा इति पाठान्तरम्।

महिम्नामेतस्मिन् विनय-शिशुता-मौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो (१) न पुनरविदग्धैरतिशयः।
मनो मे सम्मोदः (२) स्थिरमपि हरत्येव बलवान्
अयोधातुं यद्वत् परिलघुरयस्कान्तशकलः ॥२१॥

---

तदाश्चर्यं समर्थयति महिम्नामिति। एतस्मिन् शिशौ विदग्धैर्निपुणैः लोकनिर्वाचनदक्षैरिति यावत् निर्ग्राह्यः निश्चेयः बोद्धुं शक्य इति यावत्, पुनः किन्तु अविदग्धैरनिपुणैर्जनैः न निर्ग्राह्य इत्यर्थः, तथा विनयो नम्रभावः शिशुता बालकत्वं ताभ्यां यत् मौग्ध्यं सरलता तेन मसृणः कोमलः स्नेहोत्पादक इत्यर्थः महिम्नां माहात्म्यानां दयादाक्षिण्यशौर्य्यवीर्य्यादिव्यञ्जकमहापुरुषभावानामित्यर्थः अतिशय आधिक्यं वर्त्तत इति शेषः। अतएव परिलघुर्नितान्तक्षुद्रोऽपि अयस्कान्तस्य लौहाकर्षकपदार्थविशेषस्य (चुम्बुक लोहा इति ख्यातस्य) शकलः खण्डः यद्वत् यथा अयोधातुं लौहं हरति आकृष्य नयति, तद्वत् बलवान् विशालः सम्मोदः एतद्बालकदर्शनजनितानन्दः मे मम स्थिरमपि योगाभ्यासेन निश्चलमपि मनः हरत्येव आकर्षत्येव। मादृशयोगिनोऽपि मनोहरणादनिर्वचनीय आश्चर्य्य एवायं बालक इति भावः।

अत्र प्रथमपादे विनयशिशुतामौग्ध्यरूपाणां गुणानां यौगपद्यात् समुच्चयः, द्वितीयपादे शाब्दी परिसंख्या, द्वितीयार्द्धे च श्रौती उपमा, एतेषां परस्परनिरपेक्षस्थितेः संसृष्टिरलङ्कारः। तथा मौग्ध्येत्यत्र दुःश्रवत्वदोषः, स च 'विनयशिशुभावार्जवमृदु'रिति पाठेन समाधेयः।

"मसृणः।—अकर्कशः।" "विदग्धः।—निपुणः" इति च शब्दकल्पद्रुमः। "भित्तं शकलखण्डे वा" इत्यमरः।

"शङ्खः पाण्डर एवे"त्यादिवत् हरत्येवेति एवशब्दस्य स्वयोगव्यवस्थापनार्थाम् अनियमे नियमाख्यदोषः। शिखरिणी वृत्तम् ॥२१॥

---

এই বালকটীতে সাতিশয় মাহাত্ম্য রহিয়াছে; সে মাহাত্ম্যটী আবার

---

(१) निग्राह्य इति पाठान्तरम्। (२) सम्मोह इति भिभिन्नः पाठः।

(প্রবিশ্য) লবঃ। (স্বগতম্) অজ্ঞাতনামক্রমাভিজনান্ পূজ্যানপি নঃ স্বতঃ কথমভিবাদয়িষ্যে। (বিচিন্ত্য) অয়ং পুনরবিরুদ্ধঃ প্রকার ইতি বৃদ্ধেভ্যঃ শ্রূয়তে। (সবিনয়মুপসৃত্য) এষ বো লবস্য শিরসা প্রণামপর্য্যায়ঃ (গ)।

অরুন্ধতীজনকৌ। কল্যাণিন্! আয়ুষ্মান্ ভূয়াঃ (ঘ)।

---

(গ) প্রবিশ্যেতি। নোঽস্মাকং পূজ্যানপি বৃদ্ধত্বদর্শনাৎ পূজনীয়তয়া অভিবাদন যোগ্যানপি, নাম নামধেয়ম্, ক্রমঃ পৌর্বাপর্য্যম্, অভিজনঃ কুলঞ্চ তে, অজ্ঞাতা অবিদিতা নামক্রমাভিজনা যেষাং তান্, এতান্ বৃদ্ধানিত্যর্থঃ। স্বতঃ স্বয়ং কথমভিবাদয়িষ্যে প্রণমামি। এতেষাং মধ্যে কঃ খল্বধিকো গুরুঃ, কো বা ততোন্যূন ইতি প্রণামবিষয়ে গুরুত্বপৌর্বাপর্য্যং ন জানামি; যেন তদনুসারেণাভিবাদনং স্যাৎ ন বা নাম জানামি, যেন শর্ম্মবর্ম্মান্তনামজ্ঞানেন ব্রাহ্মণক্ষত্রিয়নিশ্চয়াৎ তৎক্রমেণ নমস্কারঃ স্যাৎ; ন বা কুলং জানামি, যেন প্রধানকৌলীন্যানুসারেণাপি প্রণামঃ সম্ভবেৎ; আত্মবুদ্ধিনিশ্চিতক্রমানুসারেণ নমস্কারে তু বৈপরীত্যস্যাপি সম্ভবাৎ মূর্খতা প্রকাশ্যতে; তদত্র কিং করোমীতি ভাবঃ। পুনঃ কিন্তু, অয়ং মনসা নিশ্চীয়মানঃ প্রকারঃ কল্পঃ রীতিরিতি যাবৎ, অবিরুদ্ধঃ লোকে শাস্ত্রে চ অনিন্দনীয় ইত্যর্থঃ। বো যুষ্মাকম্, প্রণামপর্য্যায়ঃ পর্য্যায়েণ নমস্কারঃ পূজ্যতাক্রমেণ অভিবাদনমিতি যাবৎ। নমস্কাররীতয়ো মনুসংহিতাদৌ দ্রষ্টব্যাঃ।

বিনয় ও শিশুতার সরলতায় কোমল হইয়াছে এবং সে মাহাত্ম্য বিচক্ষণেরই বোধগম্য; কিন্তু অবিচক্ষণের বোধগম্য নহে। যেমন ক্ষুদ্র চুম্বকলোহার খণ্ড লোহাকে আকর্ষণ করে, সেইরূপ গুরুতর আনন্দ, আমার নিশ্চল হৃদয়কেও আকর্ষণ করিতেছে ॥২১॥

(গ) লব। (প্রবেশ করিয়া, স্বগত) ইঁহারা আমার পূজনীয় হইলেও ইঁহাদের নাম বা বংশ কিংবা কাঁহাকে পূর্ব্বে বা পরে নমস্কার করিতে হইবে তাহা জানি না; সুতরাং কি প্রকারে ইঁহাদিগকে নিজে ঠিক্ করিয়া নমস্কার করিব? (চিন্তা করিয়া) কিন্তু এই রকমটা বিরুদ্ধ নহে—ইহা

कौशल्या। जाद! चिरं जीव (१) (ङ)।

अरु। एहि वत्स! (इति लवमुत्सङ्गे कृत्वा स्वगतम्) (२) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथो मे सम्पूर्णः (च)।

कौशल्या। जाद! इदोवि दाव एहि। (उत्सङ्गे कृत्वा) (३) अम्महे! ण केवलं दरविअसन्तणीलुप्पलसामलुज्जलेण देह-बन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददीहर-

---

(ङ) जात! चिरं जीव।

(छ) जात! इतोऽपि तावदेहि। अहो! न केवलं दरविकसन्नीलोत्पल-श्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण

---

(घ) अरु इति। आयुष्मान् प्रशस्तायुर्दीर्घायुरित्यर्थः।

(ङ) कौशल्येति। जात! सन्तान! पुत्रतुल्येत्यर्थः।

(च) अरु इति। दिष्ट्या भाग्येन। उत्सङ्गः क्रोड़ः। मनोरथः सीतायाः पुत्रं क्रोड़े करिष्यामीत्यभिलाषः।

---

প্রাচীনদিগের নিকট শুনিয়া থাকি। (বিনয়ের সহিত নিকটে যাইয়া) লবের মস্তকদ্বারা এই আপনাদের পূজ্যতাক্রমে নমস্কার।

(ঘ) অরুন্ধতী ও জনক। কল্যাণভাজন! আয়ুষ্মান্ হও।

(ঙ) কৌশল্যা। বৎস! চিরজীবী হও।

(চ) অরুন্ধতী। আইস বৎস! (এই বলিয়া লবকে ক্রোড়ে করিয়া স্বগত) ভাগ্যবশতঃ কেবল আমার ক্রোড় নহে, দীর্ঘকালের পর অভিলাষও পূর্ণ হইল।

---

(१) जाद! मे चिरं जीव इति पाठभेदः। (२) उत्सङ्गे कृत्वा अपवार्य्य। क्रोड़े कृत्वा। उत्सङ्गे गृहीत्वा। इति त्रयः पाठभेदाः।

(३) क्रोड़े कृत्वा। उत्सङ्गे गृहीत्वा। इति विभिन्नौ पाठौ।

**दोहरेण सरेण अ रामभद्दमणुहरदि, णं कठिण-(१) कमलगब्भपक्खलो सरीरप्फंसोवि तादिसो ज्जेव वच्छस्स।**

---

च रामभद्रमनुहरति, ननु कठिनकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य।

---

(छ) कौशल्येति। इतोऽपि मम क्रोड़ेऽपि। केवलमस्या एव क्रोड़े स्थातव्यमिति नास्ति नियमः, ममाप्युत्सङ्गे किञ्चिदेहीति भावार्थः। उत्सङ्गे कृत्वा क्रोड़े स्थापयित्वा।

दरम् अल्पं विकसत् प्रस्फुटत् यत् नीलोत्पलम् इन्दीवरं तद्वत् श्यामलः श्यामवर्णः, उन्नतः लभ्यमानश्च तेन तथोक्तेन देहबन्धेन शरीरघटनेन अयं बालकः केवलं रामभद्रमनुहरति इति न; अपि तु, कवलिता मुखमध्ये प्रवेशिता ये अरविन्दकेसराः पद्मकिञ्जल्कास्तैः कषायो मधुरः सुश्राव्य इति यावत् कण्ठः स्वरो यस्य स तथोक्तः, यः कलहंसः मधुरास्फुटध्वनिकारी राजहंसः तस्य निनादः शब्द इव दीर्घदीर्घो दीर्घप्रकारः तेन उच्चैः स्वरेणेत्यर्थः स्वरेण कण्ठध्वनिना च रामभद्रम् अनुहरति अनुकरोति।

अत्र लुप्तोपमाद्वयम्।

"दर ( अ ) ईषदर्थः।"—"कषायः ( पुं ) सुरभिः।" "कण्ठः ( पुं )—ध्वनिः।" इति शब्दकल्पद्रुमः। सौरभार्थकोऽपि कषायशब्दोऽत्र माधुर्य्यार्थे लाक्षणिकः।

कवलो ग्रासः कृत इतीनन्तात् कवलशब्दात् कर्म्मणि क्तः।

नन्वित्यवधारणे। कठिनः पूर्णावयवत्वात् दृढ़ः यः कमलस्य पद्मस्य गर्भः बीजकोषः (बीखल, चाका इत्यादिप्रसिद्धः) तद्वत् पक्ष्मलः कठिनकोमलः वीरत्वव्यञ्जक इति भावः। तादृश एव रामभद्रतुल्य एव।

अत्रापि लुप्तोपमालङ्कारः।

द्वितीयं जातेत्यादिवाक्यं वात्सल्यानुभयप्रार्थनाव्यञ्जकम्।

---

(ছ) কৌশল্যা। বৎস! এই দিকেও একবার আইস। (ক্রোড়ে করিয়া) ওমা! ঈষৎ বিকশিত নীলোৎপলের ন্যায় শ্যামবর্ণ, অথ চ উন্নত দেহদ্বারাই যে কেবল রামভদ্রের অনুকরণ করিতেছে, তাহা নহে; মুখের

---

(१) कठोरेति पाठान्तरम्।

जाद! (१) पेक्खामि दाव दे मुहचन्दं (२)। (चिवुकमुन्नमय्य निरूप्य सवाष्पाकूतम्) गएसि! किं ण पेक्खसि, णिउणं णिरुविज्जमाणं मे मुहं वच्छाए मुहचन्देण संवददि ज्जेव (छ)।

जनकः। पश्यामि सखि! पश्यामि (ज)।

कौशल्या। अम्मो! उम्मत्तीभूदं विश्र मे हिअअं किम्पि चिन्तअन्तो बहु विप्पलवदि (झ)।

---

जात! प्रेक्षे तावत्ते मुखचन्द्रम्। राजर्षे! किं न प्रेक्षसे, निपुणं निरूप्यमाणम् अस्य मुखं वत्सायाः मुखचन्द्रेण संवदति एव।

---

चिवुकम् अधरनिम्नभागम्, उन्नमय्य उत्तोल्य, वाष्पेण आनन्दाश्रुणा आकूतेन अभिप्रायेण अभिप्रायव्यञ्जकभङ्गिविशेषेण सह वर्त्तत इति सवाष्पाकूतं पुनराहेत्यर्थः।

अस्य बालकस्य मुखं निपुणं सनैपुण्यं सूक्ष्मरूपेणेति यावत् निरूप्यमाणम् अवलोक्यमानं सत् वत्सायाः सीतायाः मुखचन्द्रेण सह संवदति एव आकृत्या सम्मिलत्येव, न तु किञ्चिद्वैषम्यं यातीत्येवशब्दार्थः।

अत्र निपुणशब्दः सनैपुण्यार्थे लाक्षणिकः।

(ज) जनक इति। पश्यामि पश्यामीति अवधारणार्थे द्विरुक्तिः। पश्याम्येवेत्यर्थः।

---

ভিতরে পদ্মের কেসর থাকায় যাহার স্বর সুমধুর হয়, সেই কলহংসের শব্দের ন্যায় দীর্ঘ দীর্ঘ কণ্ঠস্বরদ্বারাও রামভদ্রের অনুকরণ করিতেছে, আর পূর্ণাবয়ব পদ্মকোষের ন্যায় এই বৎসটীর শরীরস্পর্শও রামভদ্রেরই তুল্য। বৎস! দেখি তোমার মুখচন্দ্রখানি। (চিবুক উত্তোলন করিয়া, বিশেষরূপে দেখিয়া, অশ্রু ও বিশেষ অভিপ্রায়ের সহিত) রাজর্ষি! দেখিতেছেন না কি, নিপুণভাবে দেখিলে, ইহার মুখখানি, বৎসা সীতার মুখচন্দ্রের সহিত মিলিতই হয়।

(জ) জনক। দেখিতেছি, সখি! দেখিতেছি।

---

(१) जीव जाद इति भिन्नः पाठः। (२) मुहं इति क्वचित् पाठः।

जनकः। (निरूप्य) (ञ)

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पूर्णप्रतिविम्बितेव (१) निखिला सैवाकृतिः सा द्युतिः।
सा वाणी, विनयः स एव, सहजः पुण्यानुभावोऽप्यसौ,
हा हा दैव! किमुत्पथैर्मम मनः पारिप्लवं धावति ॥२२॥

(झ) अहो! उन्मत्तीभूतमिव मे हृदयं किमपि चिन्तयत् बहु विप्रलपति।

---

(झ) कौशल्येति। मे मम हृदयम् उन्मत्तीभूतमिव अस्मिन् बालके सीतारामयोराकृतिसौसादृश्यदर्शनात् उन्मादग्रस्तमिव सत् किमपि अनिर्वचनीयं चिन्तयत् बहु नानाप्रकारं विप्रलपति विशेषेणासम्बद्धं ब्रवीति। सीता जीवति, तस्या एवायं पुत्र इत्यादिकं प्रकाशयतीति भावः।

(ञ) जनक इति। निरूप्य विशेषेणावलोक्येत्यर्थः।

वत्साया इति। अस्मिन् शिशौ वत्सायाः सीतायाश्च रघूद्वहस्य रघुवंशधुरन्धरस्य रामचन्द्रस्य च निखिला समग्रा सैवाकृतिः तत्सदृश एवाकारः, सा द्युतिः तत्सदृश्येव देहकान्तिः सम्पूर्णम् अविकलं यथा स्यात्तथा प्रतिविम्बितेव प्रतिफलितेव सती अभिव्यज्यते प्रकाशते। किञ्च वा वाणी तत्सदृशमेव वाक्यम्, स एव विनयः तदनुरूप एव नम्रभावः, तथा असौ स एव सीतारामतुल्य एव सहजः स्वाभाविकः पुण्यानुभावः पवित्रो देहप्रभावः अभिव्यज्यत इत्यनेनान्वयः। तर्हि किं सीतारामयोरेवायं पुत्र? तदपि न, बहुकालमेव सीताया अभावात्; हन्त! तदियं दुराशैवेत्याह हा हेति। हा हा दैव! अदृष्ट! पारिप्लवं सीतारामसमानाकृतिरयं बालकः कस्य पुत्र इति निर्णेतुमसामर्थ्यात् चञ्चलीभूतं

---

(ঝ) কৌশল্যা! অহে! আমার চিত্ত যেন উন্মত্ত হইয়া, কোন বিষয় চিন্তা করতঃ, বহু রকম প্রলাপ বলিতেছে।

(ঞ) জনক। (বিশেষভাবে দেখিয়া)

---

(१) सम्पूर्णप्रतिविम्बतेव इति, सम्पूर्णप्रतिविम्बितेव इति च पाठान्तरम्।

কৌশল্যা। অত্থি দে মাদা, সুমরসি বা তাদং (ট)?

লবঃ। নহি নহি (ঠ)।

কৌশল্যা। তদো কস্স তুমং (ড)?

---

(ট) অস্তি তে মাতা, স্মরসি বা তাতম্?

---

মম মনঃ কিং কথং কেন হেতুনেত্যর্থঃ উৎপথৈঃ অসম্ভবকল্পনামার্গৈঃ ধাবতি দ্রুতং গচ্ছতি। সীতায়াঃ প্রাগেবাভাবাৎ সীতাপুত্রোঽয়মিত্যাশা দুরাশৈবেতি ভাবঃ।

অত্র অভিব্যজ্যত ইত্যেকয়া ক্রিয়য়া আকৃতি-দ্যুতি-বাণী-বিনয়-পুণ্যানুভাবানাং কর্ত্তৃতয়া অভিসম্বন্ধাৎ তুল্যযোগিতালঙ্কারঃ। তথা সৈবাকৃতিঃ তৎসদৃশ্যাকৃতিরিত্যেবং সর্ব্বত্র সাদৃশ্যাক্ষেপাৎ অসম্ভবদ্বস্তুসম্বন্ধরূপাঃ পঞ্চ নিদর্শনাঃ, তথা উৎপথৈরিতি ভঙ্গ্যা গম্যস্য সীতায়া অভাবস্যাভিধানাৎ পর্য্যায়োক্তঞ্চ এতেষামলঙ্কারাণামঙ্গাঙ্গিভাবেন সঙ্করঃ। এবশব্দস্য সা দ্যুতিরিত্যাদৌ সর্ব্বত্রানুষঙ্গেণান্বয়ান্ন নিয়মে অনিয়মাখ্যদোষঃ।

রঘুবংশে এতদনুরূপঃ শ্লোকো যথা—"রূপং তদোজস্বি তদেব বীর্য্য"মিত্যাদি।

"অনুভাবঃ প্রভাবেঽপি।" "চঞ্চলং তরলঞ্চৈব পারিপ্লবপরিপ্লবে" ইতি চামরঃ।

অভিব্যজ্যত ইতি কর্ম্মকর্ত্তরি প্রত্যয়ঃ।

শার্দ্দূলবিক্রীড়িতং বৃত্তম ॥২২॥

(ট) কৌশল্যেতি। স্মরসি বা তাতমিতি পিতুরস্তিত্বস্যৈব ভঙ্গ্যন্তরেণ প্রশ্নঃ।

(ঠ) লব ইতি। নহি নহীত্যবধারণে দ্বিরুক্তিঃ। মাতা নাস্তি, তাতঞ্চ ন স্মরামীত্যর্থঃ।

বৎস! সীতা ও রামচন্দ্রের সমস্তই সেই আকৃতি এবং সেই কান্তি, এই বালকটীতে অবিকল প্রতিবিম্বিত হইয়াই প্রকাশ পাইতেছে এবং সেই বাক্য, সেই বিনয়, আর স্বাভাবিক সেই পবিত্র প্রভাব ব্যক্ত হইতেছে। হা হা বিধাতঃ! আমার চঞ্চল মন, কেন উৎপথে ধাবিত হইতেছে ॥২২॥

(ট) কৌশল্যা। তোমার মা আছে? বাপকে স্মরণ করিয়া থাক?

(ঠ) লব। না না।

लवः। भगवतो वाल्मीकेः (ढ)।

कौशल्या। अइ जाद! कहिदव्वं कहेहि [ण]।

लवः। एतावदेव जानामि [त]।

नेपथ्ये। भो भोः सैनिकाः! एष खलु कुमारश्चन्द्रकेतुराज्ञापयति, न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति [थ]।

---

(ड) ततः कस्य त्वम्?

(ण) अयि जात! कथयितव्यं कथय।

---

(ड) कौशल्येति। ततस्तदा मातापित्रोरसत्त्व इत्यर्थः, कस्य त्वं कस्य तत्त्वावधानेन रक्षितस्त्वम् इत्यर्थः।

(ढ) लव इति। भगवतो वाल्मीकेस्तत्त्वावधानेन रक्षितोऽस्मीति वाक्यशेषः।

(ण) कौशल्येति। कथयितव्यं यदस्ति तत् कथयेत्यर्थः, न तु गोपयेति भावः।

(त) लव इति। एतावदेव जानामि, न तु एतदतिरिक्तं मातापितृविषयकं किमपि जानामीति भावः।

(थ) नेपथ्य इति। केनचित् केनापि जनेन आश्रमस्य वाल्मीकेस्तपोवनस्य अभ्यर्णभूमिः निकटवर्त्ति स्थानम्। तरुलताविनाशादिना तपोवनक्षतिनिवारणार्थं मुनीन् प्रति सम्मानप्रदर्शनार्थञ्च उक्तिरियम्।

"उपकण्ठान्तिकाभ्यर्णा" इत्यमरः।

---

(ড) কৌশল্যা। তবে, কার তুমি?

(ঢ) লব। ভগবান্ বাল্মীকির।

(ণ) কৌশল্যা। বৎস! বলিতে হইবে, বল।

(ত) লব। এতটুকু মাত্রই জানি।

(থ) নেপথ্যে। ওহে ওহে সৈন্যগণ! কুমার চন্দ্রকেতু আদেশ করিতেছেন যে, কেহই যেন আশ্রমের নিকটবর্ত্তী স্থান আক্রমণ না করে।

अरुन्धतीजनकौ। अये! मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्स-श्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः [१] [द]।

कौशल्या। वच्छलक्खणस्स पुत्तको आणवेदित्ति अमिअ-विन्दुसुन्दराइं अक्खराइं सुणीअन्ति [ध]।

लवः। आर्य्य! क एष चन्द्रकेतुर्नाम? [न]

जनकः। जानासि रामलक्ष्मणौ दाशरथी? [प]

(ध) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीति अमृतविन्दुसुन्दराणि अक्षराणि श्रूयन्ते।

(द) अत इति। अये इति सन्निहितजनसम्बोधनम्। मेध्यः हिंसनीयः अश्वमेध-यज्ञे छेदनीय इति यावत् योऽश्वस्तस्य स्वेच्छया विचरत इत्यर्थः रक्षाप्रसङ्गात् अपरा-क्रमणकारिजननिवारणेन पालनार्थमित्यर्थः। द्रष्टव्यः अस्माभिरिति शेषः। इति हेतोः, अहो प्रशस्तः अयं सुदिवसः शुभदिनम्। यत्र प्रियजनदर्शनादिना महानानन्दो भवेत् तत् शुभदिनमेवेति भावः।

"अहो। (अव्य)—प्रशंसा" इति शब्दकल्पद्रुमः।

(ध) कौशल्येति। अमृतस्य विन्दवः कणा इव सुन्दराणि मधुराणि श्रुतिसुख-कराणीत्यर्थः, अक्षराणि वचनानि। पौत्रस्याप्याधिपत्यश्रवणे कस्य न सुखं जायते इति भावः। अत्र लुप्तोपमालङ्कारः।

(न) लव इति। चन्द्रकेतुर्नाम चन्द्रकेतुरिति नाम्ना प्रसिद्धः।

---

(দ) অরুন্ধতী ও জনক। ও! যজ্ঞীয় অশ্বরক্ষার জন্য, বৎস চন্দ্রকেতু উপস্থিত হইয়াছে, আজ তাহাকে দেখা যাইবে; সুতরাং আজ শুভ দিন বটে।

(ধ) কৌশল্যা। বৎস লক্ষ্মণের পুত্র আদেশ করিতেছে—এই অক্ষরগুলি অমৃতবিন্দুর ন্যায় সুন্দর শুনা যাইতেছে।

(ন) লব। আর্য্য! চন্দ্রকেতু নামে ইনি কে?

---

(१) द्रष्टव्यः, अहो सुदिवसः। इति पाठान्तरम्।

लवः। एतावेव [१] रामायणकथापुरुषौ ? [फ]

जनकः। अथकिम् [१] [ब]।

लवः। तौ कथं न जानामि [भ]।

जनकः। तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः [म]।

लवः। ऊर्म्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः [य]।

---

(प) जनक इति। दशरथस्यापत्ये पुमांसाविति दाशरथी। काकुवशात् प्रश्नो व्यज्यते, जानासि किमित्यर्थः।

(फ) लव इति। एतावेव दाशरथी एव न तु अपराविल्येवशब्दार्थः, रामलक्ष्मणौ रामायणकथायाः वाल्मीकिकृतरामायणनामकाख्यानस्य पुरुषौ प्रधानपात्रभूतौ किमित्यर्थः। अत्रापि काकुवशात् प्रश्नो व्यज्यते।

(ब) जनक इति। अथकिमिति स्वीकारसूचकमव्ययम्। (ह्याँ इति वङ्गभाषा। औरक्या इति हिन्दीभाषा।)

(भ) लव इति। तौ रामलक्ष्मणौ। अतीवप्रथितत्वात् अधीतरामायणाख्यानस्य प्रधानपात्रत्वाच्च जानाम्येवेति भावः।

(म) जनक इति। तस्य प्रथितनाम्नः। आत्मजः पुत्रः।

(প) জনক। দশরথের পুত্র রাম ও লক্ষ্মণকে জান ?

(ফ) লব। উঁহারাই ত রামায়ণ-উপাখ্যানের প্রধান পাত্র ?

(ব) জনক। হাঁ।

(ভ) লব। তাঁহাদিগকে কেন জানিব না ?

(ম) জনক। ইনি সেই লক্ষ্মণের পুত্র চন্দ্রকেতু।

(য) লব। তাহা হইলে, উর্ম্মিলার পুত্র এবং রাজর্ষি মিথিলাধিপতির দৌহিত্র।

---

(१) तावेवेति पाठभेदः। (२) तत् कथं न जानासि लक्ष्मणस्यायमात्मज-श्चन्द्रकेतुरिति विभिन्नः पाठः, किन्त्वेतत्पाठे तौ कथं न जानातीति परवाक्यं नास्ति।

अरु। [विहस्य] आविष्कृतं कथाप्रावीण्यं वत्सेन [१] [र]।

जनकः। [विचिन्त्य] यदि त्वमीदृशः कथायामभिज्ञस्तद्-ब्रूहि तावत्, पृच्छामस्तेषां दशरथात्मजानां किन्नामधेयान्यपत्यानि केषु केषु दारेषु प्रसूतानि [२] [ल]।

लवः। नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः [व]।

(य) लव इति। तर्हि चन्द्रकेतोर्लक्ष्मणस्यात्मजत्वे सति, स चन्द्रकेतुरित्यर्थः ऊर्म्मिलायास्तदाख्यलक्ष्मणभार्य्यायाः पुत्रः लक्ष्मणस्य दारान्तराश्रवणादिति भावः, मैथिलस्य मिथिलानगरीपतेः राजर्षेर्जनकस्य।

(र) अरु इति। वत्सेन लवेन, कथाया रामायणाख्यानस्य प्रावीण्यम् अभिज्ञत्वम्, आविष्कृतं प्रकटितम्, चन्द्रकेतोर्मातृपितृमातामहानां यथावदुल्लेखादिति भावः। एतेन बालकोऽयमतीव मेधावीत्याश्चर्य्यमिति वस्तुना वस्तुध्वनिः।

(ल) जनक इति। किं नामधेयं नाम येषां तानि, अपत्यानि सन्तानाः, दारेषु भार्य्यासु, प्रसूतानि उत्पन्नानि। सुधातोरकर्म्मकत्वविवक्षया कर्त्तरि क्तः। यदि बालकोऽयं दशरथात्मजानामपत्यविवरणप्रसङ्गेन 'रामात् सीतायामुत्पन्नोऽहं'मिति वदेत् तदा अनायासेनैव ज्ञातव्यविज्ञानं स्यादित्यभिप्रायेणायं प्रश्नः।

(व) लव इति। अयं भवता पृच्छ्यमानः रामादीनामपत्यविवरणरूपः कथाप्रविभागः

(র) অরুন্ধতী। (হাস্য করিয়া) বৎস! রামায়ণ-উপাখ্যানের অভিজ্ঞতা প্রকাশ করিয়াছে।

(ল) জনক। (চিন্তা করিয়া) যদি তুমি উপাখ্যানে এইরূপ অভিজ্ঞ হইয়া থাক, তবে বল দেখি, জিজ্ঞাসা করিতেছি, সেই দশরথের পুত্রদিগের কোন্ কোন্ ভার্য্যাতে কি কি নামে কতগুলি সন্তান জন্মিয়াছে?

---

(१) कुमारेणेति पाठान्तरम्।

(२) कस्मिंश्चित् पुस्तके केषु केष्विति विद्यते नास्ति।

जनकः। किं न प्रणीत एव कविना? [श]।

लवः। प्रणीता न तु प्रकाशितः। तस्यैव खलु कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः, तञ्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्य्यत्रिकसूत्रकारस्य (ष)।

---

ख्यानांशः। अन्येन मद्भिन्नजनेन। अस्माभिः साचात् न श्रुतः, अन्यस्यापि श्रवणाभावात् परम्परयापि न श्रुत इति नोत्तरं दातुमस्य समर्थ इति भावः।

(श) जनक इति। कविना वाल्मीकिना, प्रणीतो विरचितः। किंवा प्रणीत एव न तु त्वया श्रुत इत्येवशब्दार्थः।

(ष) लव इति। प्रकाशितः समचं नीतः श्रुतिविषयं प्रापितो वा। तस्यैव रामादीनामपत्यविवरणांशस्यैव न त्वन्यस्येत्येवशब्दार्थः, एकदेशः अवान्तरांशः केवलरामसन्ततिविवरणांश इत्यर्थः इति बोध्यं सन्दर्भान्तरेण अन्येन केनचित् प्रबन्धेन अश्वमेधविवरणेन महेत्यर्थः इति ग्रन्थम्, प्रचुरकरुणाद्युतरसान्वितः अभिनेयः अभिनययोग्यः अर्थः वस्तु स्वरूपमिति यावत् यस्य स अभिनेयार्थः किमप्येकं दृश्यकाव्यमित्यर्थः कृतः। आद्योपान्तमेव रामचरितमादाय रामायणाभिधानं किमपि ग्रन्थं महाकाव्यमुपनिबद्धम्, अधिकन्तु तदन्तर्गतं सीतानिर्वासनादिपुनःसंयोगान्तमंशमादाय किमपि दृश्यकाव्यं प्रणीतमिति निष्कर्षश्चात्र बोद्धव्यः। इदन्तु अस्यैव नाटकस्य समस्ताङ्गानुसारेणोक्तं रामायणे तु अन्यथा द्रष्टव्यम्। मुनिः वाल्मीकिः। स्वहस्तलिखितं न तु शिष्यादिनेत्यर्थः। एतेन तदंशस्य गोपनीयत्वं व्यज्यते। तौर्य्यत्रिकस्य नृत्यगीतवाद्यस्य सूत्रकारः व्यवस्थापकग्रन्थकारस्तस्य भरतस्य तदाख्यस्य मुनेः समीप इत्यर्थः व्यसृजत् प्रेरितवान्।

"तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रय"मित्यमरः। "तूर्य्यं मुरजादि तत्र भवं तौर्य्यम्। तौर्य्योपलक्षितं त्रिकमिति तौर्य्यत्रिक"मित्यमरटीकायां महेश्वरः।

(ব) লব। উপাখ্যানের এই অংশটী, আমি বা অন্য কেহ পূর্ব্বে শুনে নাই।

(শ) জনক। কবি (বাল্মীকি) কি রচনাই করেন নাই?

जनकः। किमर्थम्? [स]

लवः। स किल भगवान् भरतस्तमप्सरोभिः प्रयोजयिष्यतीति (ह)।

जनकः। सर्वमिदमस्माकमाकूतकरम् (१) (क्ष)।

लवः। महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था, केषाञ्चिदन्तेवासिनां हस्तेन तत् पुस्तकं भरताश्रमं प्रति

(स) जनक इति। किमर्थमिति व्यसृजदिति क्रियाविशेषणम्।

(ह) लव इति। तमेकदेशम्। अप्सरोभिरभिनेत्रीभिरित्यर्थः। प्रयोजयिष्यति अभिनाययिष्यति, इति हेतोर्व्यसृजदित्यन्वयः।

(क्ष) जनक इति। इदं त्वयोक्तं सर्वं तदंशस्य दृश्यकाव्यरूपेण विरचनं स्वहस्तेन लिखनं भरतान्तिके प्रेरणञ्चेत्यर्थः। आकूतकरं कौतुकजनकम्। तत्र कस्यापि महाद्भुतस्य स्थितिसम्भवादिति भावः।

(क) लव इति। तस्मिन् गर्भे दृश्यप्रबन्धे। आस्था यत्न आदर इति यावत्। महती आस्था इति कथमवगतमित्याह केषाञ्चिदिति। अन्तेवासिनां छात्राणाम्। अनु

(য) লব। রচনা করিয়াছেন ; কিন্তু প্রকাশ করেন নাই। তাহারই কোন এক অংশকে অন্য সন্দর্ভের সহিত মিলাইয়া, অভিনয়ের উপযোগী সরস করিয়াছেন এবং ভগবান্ মুনি (বাল্মীকি) তাহা নিজ হস্তে লিখিয়া, নৃত্য, গীত ও বাদ্যের সূত্রকার ভরতমুনির নিকট পাঠাইয়া দিয়াছেন।

(স) জনক। কি জন্য?

(হ) লব। সেই ভগবান্ ভরতমুনি, অপ্সরাদের দ্বারা তাহার অভিনয় করাইবেন ; এই জন্য।

(ক্ষ) জনক। এ সমস্তই, আমাদের কৌতুকজনক।

(१) तत् सर्वमस्माकमिदमाकूतकरमिति पाठान्तरम्।

प्रेषितम् (१)। तेषामानुयात्रिकश्चापपाणिः प्रमादापनोदनार्थम् (२) अस्मद्भ्राता प्रेषितः (क)।

कौशल्या। जाद! भादावि दे अत्थि? (ख)

लवः। अस्ति आर्य्यः कुशो नाम (ग)।

कौशल्या। जेट्ठोत्ति भणिदं होदि (घ)।

---

(ख) जात! भ्रातापि ते अस्ति?

(घ) ज्येष्ठ इति भणितं भवति?

---

पश्चात् यात्रायां गमने नियुक्त इत्यानुयात्रिकः अनुगामीत्यर्थः। चापपाणिः कार्म्मुकहस्तः। प्रमादस्य अनवधानतायाः अनवधानताजन्यविपत्तेरित्यर्थः अपनोदनार्थं दूरीकरणार्थं दस्युतस्करहिंस्रभयनिवारणार्थमित्यर्थः। चापपाणिरित्यनेन प्रमादापनोदनार्थमित्यनेन च भ्रातुर्वीरत्वविस्मयकारित्वप्रकाशादमीषां वृत्तान्तज्ञानं प्रति कौतुकं वर्द्धितम्।

"आस्थानीयत्नयोरास्था" इत्यमरः।

(ग) लव इति। आर्य्यः पूज्यः। एतेन ज्येष्ठत्वं व्यज्यते।

(घ) कौशल्येति। ज्येष्ठ इति भणितम् उक्तं भवति, स किं त्वत्तो ज्येष्ठ इत्यर्थः।

---

(क) লব। ভগবান্ বাল্মীকির কিন্তু সেই অংশটীতে গুরুতর যত্ন রহিয়াছে; কতকগুলি ছাত্রের হাত দিয়া, সেই পুস্তকখানিকে ভরতের আশ্রমে পাঠাইয়া দিয়াছেন, আর তাহাদের বিপদ নিবারণের জন্য, ধনুষ্পাণি অবস্থায় আমার ভ্রাতাকে তাহাদের অনুগামী করিয়া পাঠাইয়াছেন।

(খ) কৌশল্যা। বৎস! তোমার ভাইও আছে?

(গ) লব। আছেন; সেই আর্য্যের নাম কুশ।

(ঘ) কৌশল্যা। জ্যেষ্ঠ ইহা বলা যায়?

---

(१) कस्मिंश्चित् पुस्तके 'प्रति'शब्दो नास्ति। (२) अप्रमादार्थमिति पाठान्तरम्।

लव। एवमेतत्, प्रसवक्रमेण स किल ज्यायानिति (ङ)।

जनकः। किं यमजावायुष्मन्तौ ? (च)

लवः। अथकिम् (छ)।

जनकः। कथय, कथाप्रबन्धस्य कीदृशः पर्य्यन्तः (ज)।

---

(ङ) लव इति। प्रसवस्य क्रमेण पौर्वापर्य्येण स कुशः ज्यायान् ज्येष्ठः। इतिशब्दो वाक्यसमाप्तौ। यमजयोः प्राक् प्रसूतस्य ज्येष्ठत्वमाह देवलः—

"बह्विर्वर्षेषु चारित्रात् यमयोः पूर्वजन्मतः।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्।
सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्॥"

"जन्मप्राथम्यात् ज्यैष्ठ्यं यमजयोर्न तु निषेकप्राथम्या"दिति स्मार्त्तश्च।

(च) जनक इति। आयुष्मन्तौ युवां किं यमजौ युग्मजातौ।

(छ) लव इति। अथकिं सत्यमित्यर्थः। कुशलवेति नामकारणं तयोर्यमजत्वञ्चाह रामायणम्—

"यस्तयोः प्रथमं जातः स कुशैर्मन्त्रसंस्कृतैः।
निर्म्मार्जनीयो नाम्ना हि भविता कुश इत्यसौ॥
यश्चावरज एवासीत् लवनेन समाहितः।
निर्म्मार्जनीयो वृद्धाभिर्नाम्ना स भविता लवः॥
एवं कुशलवौ नाम्ना यमौ तौ संबभूवतुः।
भगवत्कृतनामानौ सुखिनावभयौ च तौ॥"

(ज) जनक इति। कथाप्रबन्धस्य रामायणाख्यानसन्दर्भस्य पर्य्यन्तः शेषभागः। यदि च 'सीताया अपत्यं जातम्, तच्च एवमेव परिपालितं परिवर्द्धितञ्च' इत्यंशोऽपि

---

(ঙ) লব। ইহা এইরূপই বটে ; প্রসবক্রমে তিনি জ্যেষ্ঠ।

(চ) জনক। তোমরা কি যমজ ?

(ছ) লব। হাঁ।

(জ) জনক। বল, উপাখ্যানের শেষটা কি রকম ?

लवः। अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति (झ)।

कौशल्या। हा वच्छे! मुद्धचन्दमुहि! को दाणिं दे कुसुमभूदस्स सरीरस्स (१) देव्वदुव्विलासपरिणामो एक्कलिआए णिवड़िदो (ञ)।

(ञ) हा वत्से! मुग्धचन्द्रमुखि! क इदानीं ते कुसुमभूतस्य शरीरस्य दैवदुर्विलासपरिणाम एकलिकाया निपतितः।

तत्कथापर्य्यन्तमध्ये परिगणितः स्यात्, तदापि तत्कथनेन ज्ञातव्यज्ञानं स्यादित्यभिप्रायेणेयमप्युक्तिरिति बोध्यम्।

(झ) लव इति। अलीकः अयथार्थो यः पौराणां प्रवादोऽपवादः तेन उद्विग्नेन अस्थिरचित्तेन कार्य्याकार्य्यविवेकशून्यमनसेत्यर्थः। राज्ञा रामचन्द्रेण निर्वासितां परिवर्जिताम्। आसन्ना सन्निहिता उपस्थितप्रायेत्यर्थः प्रसववेदना यस्यास्ताम्। परित्यज्य रथादवतार्य्य। प्रतिनिवृत्तः पुनरयोध्यां गतः। इति एष कथाप्रबन्धस्य पर्य्यन्त इत्यर्थः।

"अलीकन्त्वप्रियेऽनृते" इत्यमरः।

(ञ) कौशल्येति। मुग्धः सुन्दरो यश्चन्द्रः स इव मुखं यस्यास्तत्सम्बोधनम्। कुसुमभूतस्य पुष्पतुल्यस्य अतीवकोमलस्येत्यर्थः। कोऽनिर्वचनीयः अतीवभयङ्कर इत्यर्थः। दैवस्य नियतेः दुष्टो दुःखदायी विलासो व्यवहारो यस्मिन् स चासौ परिणामः शेषावस्था चेति स तथोक्तः। जगति सुखं दुःखं वा दैवस्यैव कार्य्यम्, लोकस्तु तत्र निमित्त-

(ঝ) লব। রাজা পুরবাসিবর্গের মিথ্যাপ্রবাদে উদ্বিগ্ন হইয়া, যজ্ঞভূমিসমুৎপন্না সীতাদেবীকে নির্ব্বাসিত করিলেন; আর লক্ষ্মণ, আসন্নপ্রসববেদনা অবস্থায় একাকিনী সেই সীতাদেবীকে বনে পরিত্যাগ করিয়া, ফিরিয়া আসিলেন (ইহাই শেষ।)

(१) शरीरकुसुमस्य इति पाठान्तरम्।

जनकः। हा वत्से!

नूनं त्वया परिभवश्च नवश्च घोरं
ताञ्च व्यथां प्रसवकालकृतामवाप्य।
क्रव्यादगणेषु परितः परिवारयत्सु
सन्त्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि ॥२३॥

---

मात्रमिति भावः। एकलिकाया एकाकिन्याः, सहायसत्त्वे दुःखं कथमपि सह्यं स्यादिति भावः। निपतितं उपस्थितं आसीदिति शेषः।

"भूतं (त्रि) सदृशम्।" "एकलः (त्रि) एकाकी। एकला इति भाषे"ति च शब्दकल्पद्रुमः।

एकलिकेति एकलाशब्दादनुकम्पायां कप्रत्ययः।

नूनमिति। हा वत्से! त्वया नवं नूतनम् इतः पूर्वं कदापि न त्वया ईदृशः परिभवोऽनुभूत इति भावः, घोरं दारुणञ्च स्त्रीणां चरित्रदोषापवादादधिको भयङ्करश्च अपवादो नास्तीति भावः, परिभवं निर्वासनात् तिरस्कारम् अपमानमित्यर्थः, तथा प्रसवकालेन कृतां तां सर्वत्र प्रसिद्धां व्यथां वेदनाञ्च अवाप्य अनुभूय क्रव्यादगणेषु मांसभोजिश्वापदजन्तुसमूहेषु परितः सर्वतः परिवारयत्सु परिवेष्टमानेषु सत्सु सन्त्रस्तया अतीवभीतया सत्या, अस्मि अहं शरणं रक्षिता इति कृत्वा भयेषु नितान्तवात्सल्येन पित्रादेरेव प्राथमिकस्मरणस्य सार्वलौकिकत्वादिति भावः, नूनं निश्चितम् असकृत् वारं वारं स्मृतः चिन्तितः अभवमित्यर्थः। 'हा पितः! रक्ष रक्ष माम्' इत्यादि बहुशः क्रन्दितवतीति निष्कर्षः। यद्यपि भयेषु लोके मातापि अर्थ्यते आह्वयते च तथापि सीतायाः मातुः पृथिव्याः जड़त्वेन तत्स्मरणमनर्थकमिति जनकमात्रमेव स्मृतमिति बोध्यम्।

पदार्थानां प्रस्तुतानामिति बहुवचनस्याविवक्षितत्वात् अत्र अवाप्येत्येकया क्रियया

---

(এ) কৌশল্যা। হা বৎসে! মনোহরচন্দ্রবদনে! একাকিনী অবস্থায় তোমার কুসুমকোমল শরীরের এই সময় দৈবদুর্নিয়োগবশতঃ কি ভয়ঙ্কর পরিণামই উপস্থিত হইয়াছিল!

लवः। (अरुन्धतीं प्रति) आर्य्ये! काविती?

अरु। इयं कौशल्या, अयं जनकः।

लवः। ( सबहुमानखेदकौतुकं पश्यति ) (ट)।

जनकः। अहो! दुर्मर्य्यादता दुरात्मनां पौराणाम्, अहो! रामस्य राज्ञः क्षिप्रकारिता (ठ)।

---

व्यथापरिभवयोः कर्म्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः। किन्तु नूनशब्दसत्त्वेऽपि नोत्प्रेक्षा, प्रकृतस्य परात्मना सम्भावनायां एव उत्प्रेक्षारूपत्वात्, अत्र तु स्मरणस्यैव वास्तविकत्वेन तादृशसम्भावनाया एवाभावादिति ध्येयम्। किञ्च तृतीयचरणे परिपरीति सजातीयात् छेकानुप्रासश्चेति संसृष्टिः। घोरं नवञ्चेति चकारौ घोरनवयोः समुच्चये, अपरौ चकारौ तु इतरेतरयोगे; तेन न निरर्थकत्वदोषः।

"क्रव्यात्। मांसाशिनि त्रि" इति शब्दकल्पद्रुमः। "असकृदिति अहमर्थे अव्ययम्" इति मल्लिनाथः। "शरणं गृहरक्षित्रो"रित्यमरः। वसन्ततिलका वृत्तम् ॥२३॥

(ट) लव इति। बहुमानः महापुरुषस्य रामस्य मातृत्वात् श्वशुरत्वाच्च अतिगौरवम्, कौशल्याजनकयोर्विषाददर्शनात् खेदो विषादः, रामायणवर्णितमहोदारचरितयोः कौशल्याजनकयोः साक्षाद्दर्शनात् कौतुकम्; तैः सहेति सबहुमानखेदकौतुकम्।

(ठ) जनक इति। अत्राहोशब्दद्वयमसूयार्थे। दुरात्मनाम् अलीकापवादकारित्वेन पापदूषितचित्तानां पौराणां पुरवासिजनानां दुर्मर्य्यादता न्याय्यपथातिक्रमः। जनस्य

---

জনক। হা বৎসে! তুমি নূতন অথ চ দারুণ অপমান এবং প্রসব-কালকৃত সেই বেদনা অনুভব করিয়া, মাংসভোজী জন্তুগণ চারিদিকে পরিবেষ্টন করিতে লাগিলে; অত্যন্ত ভীত হইয়া, আমি রক্ষক এই জন্য, নিশ্চয়ই বারং বার আমাকে স্মরণ করিয়াছিলে ॥২৩॥

লব। (অরুন্ধতীর প্রতি) আর্য্যে! ইঁহারা কে?

অরুন্ধতী। ইনি কৌশল্যা, ইনি জনক।

(ট) লব। (বিশেষ আদর, বিষাদ ও কৌতুকের সহিত দেখিতে লাগিল।)

एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा।

हि परेषां यथार्थगुणकीर्त्तनमेव न्याय्यं विशेषतस्तु राजादेः, अत्र तु राजमहिष्या एव अलीकापवादकीर्त्तनमतीवान्याय्यं जातमिति भावः।, रामस्य राज्ञः भूपतेः विशेषविवेचनापूर्वकसदसद्विचारानुसारेणैव दण्डविधातुः सत इत्यर्थः क्षिप्रकारिता शीघ्रकार्य्यकरणम् अविमृश्यकारितेत्यर्थः। तथा च रामो यदि पौराणामपवादोऽयमयथार्थो यथार्थो वा इति किञ्चिद्विलम्ब्य वृद्धैः सह समालोच्य कर्त्तव्यावधारणमकरिष्यत् तदा कथमपि सीता निर्वासिता नाभविष्यत्, अतएव लोकानामेकमात्रनिग्रहानुग्रहकर्त्तुः राज्ञ ईदृशी क्षिप्रकारिता सीतानिर्वासनवत् महानर्थकारित्वादतीवदोषावहेति भावः।

"असूया (स्त्री) असूया।" "मर्य्यादा (स्त्री) न्याय्यपथस्थिति"रिति च शब्दकल्पद्रुमः।

दुर्दुष्टा राजमहिष्या एवालीकापवादकारित्वात् मर्य्यादा येषां ते दुर्मर्य्यादास्तेषां भावः दुर्मर्य्यादता।

* अतः पौराणां रामस्य च दण्डविधानं मया कर्त्तव्यमित्याह एतदिति। एतत् सीतानिर्वासनरूपं यत् वैशसं हिंसा तदेव घोरवज्रपतनं दारुणवज्राघातः, तत् शश्वत् सदा उत्पश्यतः विजानतो मम क्रोधस्य चापेन धनुर्द्वारा शापेन अभिसम्पातद्वारा वा धगिति 'धक्' इति शब्दं कृत्वा ज्वलितुम् अवसरः समयः उपस्थित इति शेषः। इदानीमेव अरुन्धतीकौशल्याकञ्चुकिभिरपि अलीकपौरापवादमात्रस्यैव सीतानिर्वासनकारणत्वकथनात् कदलीफलचौर्य्येण प्राणदण्डकरणमिव नितान्ततुच्छकारणात् सीताया निर्वासनं कृतमिति निश्चयो जातः, अतएवाधुनैव अस्त्रेण शापेन वा सपौरं रामं निहन्मीति भावः।

अत्र सीताहिंसने वज्रपतनत्वारोपात् निरङ्गं केवलरूपकमलङ्कारः। ज्वलितुमित्यनेन क्रोधस्य वह्निरूपत्वं व्यज्यते।

विशसति हिनस्तीति विशसो हिंसकः पचाद्यच्, विशसस्येदं कार्य्यमिति वैशसं हिंसेति बोध्यम्। अविषयत्वात् चापस्य क्षत्रियत्वाच्च शापस्योक्तिरिति ज्ञेयम्।

(ঠ) জনক! দুরাত্মা পুরবাসিগণের কি মর্য্যাদাহীনতা! রাজা রামের কি হঠাৎ কার্য্যকারিতা!

कौशल्या। भअवदि! परित्ताहि परित्ताहि, पसादेहि कुविदं राएसिं (ङ)।

अरु। एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम्।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः ॥२४॥

---

(ङ) भगवति! परित्रायस्व, परित्रायस्व, प्रसादय कुपितं राजर्षिम्।

---

(ङ) कौशल्येति। प्रसादय कोपहीनं कुरु इत्यर्थः। तत्प्रसादनमेव परित्राणमिति भावः।

एतदिति। मनस्विनां प्रशस्तमनसां सज्जनानामित्यर्थः परिभूतानाम् अपमानितानां दुष्कार्य्यकरणात् लोकैस्तिरस्कृतानां सतामित्यर्थः एतद्धि एतदेव ईदृशं पुनर्गर्जनकर्त्तृकभर्त्सनमेवेति तात्पर्य्यम, प्रायश्चित्तं दोषक्षालनकारणमित्यर्थः। केनचिन्मनस्विना प्रमादवशात् कस्मिंश्चिदपराधे कृते लोकतिरस्कृतमपि तं यदि पुनर्गर्जनाभर्त्सयन्ति, तदा तदेव तस्य योग्यो दण्डो भवति; अतो मिथ्यापौरापवादेन रामेण प्रमादात् सीता निर्वासितेति साधुजनास्तं पौरवर्गश्च निन्दन्त्येव तथापि यत् भवन्तोऽपि भर्त्सयन्ति, एतदेव रामस्य पौरवर्गस्य च महान् दण्डो जात इति भावः। विशेषतस्तु, हे राजन्! रामस्ते तव अपत्यं जामातृत्वात् मित्रपुत्रत्वाच्च सन्तानरूपः, तथा प्रजाः पौरजनाः कृपणाः दीनाः क्षुद्रबुद्धय इति यावत् अतएव पाल्या रक्षणीयाः, अतएव चापेन शापेन वा प्राणदण्डो नोचितः, किन्तु पौराणामलीकापवादापराधः रामस्य च सीतानिर्वासनापराधो भवता मार्ज्जनीय इति भावः। एतद्व्याख्यानस्य व्याख्यानान्तरस्य च सदसत्त्वं सुधीभिर्विवेचनीयम्।

अत्र पूर्वार्द्धे अप्रस्तुतात् मनस्विसामान्यात् प्रस्तुतस्य विशेषरामस्य प्रतीतेरप्रस्तुतप्रशंसा-

---

* আমি সর্ব্বদাই এই হিংসাকর দারুণ বজ্রপাত জানিতেছিলাম; কিন্তু ধনুর্দ্ধারাই হউক কিংবা অভিশাপদ্বারাই হউক, 'ধক্' করিয়া ক্রোধের জ্বলিয়া উঠিবার ইহাই সময়।

(ঙ) কৌশল্যা। ভগবতি! অরুন্ধতি! রক্ষা করুন, রক্ষা করুন; ক্রুদ্ধ রাজর্ষিকে প্রসন্ন করুন।

जनकः । शान्तं वा रघुनन्दने तदुभयं तत् पुत्रभाण्डं हि मे
　　भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥२५॥
(प्रविश्य सम्भ्रान्ता) वटवः । कुमार ! अश्वोऽश्व इति कोऽपि

---

लङ्कारः रामभर्त्सने प्रायश्चित्तत्वारोपात् निरङ्गं केवलरूपकश्च त्युभयोरेकाश्रयानुप्रवेशरूपः सङ्करः, द्वितीयार्द्धे च पदार्थहेतुकं काव्यलिङ्गमिति संसृष्टिः ।

"पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म्म प्रायश्चित्त"मिति स्मार्त्तः ।

"हि हेताववधारणे ।" "कदर्थ्यक्तपणक्षुद्रकिम्पचानमितम्पचा" इति चामरः ।

पथ्यावक्त्रं वृत्तम् ॥२४॥

शान्तमिति । रघुनन्दने रामे तदुभयं चापधारणं शापदानञ्च शान्तं विरतं भवत्विति शेषः, हि यस्मात्, तत् राम इत्यर्थः प्रक्रान्तसमानलिङ्गत्वात् क्लीवत्वं पुत्रः पुत्रत्वेनेत्यर्थः भाण्डं भाजनम् । वात्सल्यात् पुत्रसदृशो जनो न नाशयितुं शक्यत इति भावः । तथा पौरो जनः सीताया अलीकापवादप्रवर्त्तयिता पुरवासिवर्गश्च, भूयिष्ठाः प्रचुराः, द्विजा ब्राह्मणाः, बाला बालकाः, वृद्धाः जरन्तः, विकलाः हीनेन्द्रियाः काणखञ्जादयः, स्त्रैणं स्त्रीसमूहश्च यस्मिन् स तथोक्तः, अतः पौरेऽपि तदुभयं शान्तमित्यर्थः । अतएव पौरान्तर्गतब्राह्मणादीना-मवध्यत्वात्, साधारणपौरोऽपि नाशयितुं न शक्यत इत्यगत्या क्षमैव क्रतेति भावः ।

अत्र चतुर्थचरणे पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

ब्राह्मणादीनामवध्यत्वमनुसन्धेयं विस्तरभयादुपेक्षितम् ।

शार्दूलविक्रीडितं वृत्तम् ॥२५॥

---

অরুন্ধতী। গুরুজনকৃত এই তিরস্কারই, অপমানিত মনস্বীদিগের প্রায়শ্চিত্ত ; বিশেষতঃ, রাজন্ ! রাম আপনার সন্তান এবং ক্ষুদ্র প্রজারাও আপনার রক্ষণীয় ॥২৪॥

জনক। অথবা, রামচন্দ্রে সে উভয়ই (ধনু ধারণ এবং শাপ) বিরত হউক ; কারণ, তিনি আমার পুত্রস্নেহের পাত্র ; আর পুরবাসীদিগের মধ্যেও বহু পরিমাণেই ব্রাহ্মণ, বালক, বৃদ্ধ, বিকলাঙ্গ এবং স্ত্রীলোক রহিয়াছে ॥২৫॥

भूतविशेषो जनपदेषु श्रूयते, सोऽयमधुनाऽस्माभिः प्रत्यक्षीकृतः (ढ)।

लवः। अश्वोऽश्व इति पशुसमाम्नाये सांग्रामिके च पठ्यते, तद्ब्रूत कीदृशः (ण)।

---

(ढ) प्रविश्येति। सम्भ्रान्ताः त्वरया व्यग्राः, वटव ऋषिकुमाराः। अश्वोऽश्व इति वीप्सायां द्विर्वचनम्। इति प्रसिद्धः। कोऽपि वनवासिभिरस्माभिरदृष्टपूर्व इत्यर्थः भूतविशेषः प्राणिविशेषः, जनपदेषु प्राकृतलोकालयदेशेषु, श्रूयते लोकपरम्परया शास्त्रे चेत्यर्थः। प्रत्यक्षीकृतः चक्षुषेति शेषः।

अश्वस्य ग्राम्यपशुत्वादेव जनपदेष्वित्युक्तम्। तथा च पैठीनसिः—"गौरविरजोऽश्वोऽश्वतरो गर्द्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः।"

"श्रुधातोः शाब्दबोधे शक्ति"रिति नैयायिकमतानुसारेण 'अश्वोऽश्व इति कोऽपि भूतविशेषः श्रूयते' इति प्रयोगः सङ्गच्छते; अश्वशब्दजन्यं ज्ञानं क्रियत इति तदर्थः। "श्रवणेन्द्रियजन्यप्रत्यक्षे श्रुधातोः शक्ति"रिति मीमांसकमते तु अत्र श्रुधातोस्तादृशशाब्दबोध एव लक्षणेति संक्षेपः।

(ण) लव इति। पशुसमाम्नाये पशुनामसंग्रहशास्त्रे प्रागुक्तपैठीनसिवचनादौ सांग्रामिके धनुर्वेदादौ युद्धशास्त्रे च। एतेनास्य शास्त्रज्ञानाधिक्यं व्यज्यते।

धनुर्वेद इदानीं दुर्लभ एव, किन्तु तत्संग्राहकं भोजराजकृतयुक्तिकल्पतरुप्रभृति शास्त्रं दृश्यते। तथा च युक्तिकल्पतरौ—

"ये शुद्धवर्णा भृशवेगयुक्ता अश्रान्तिभाजो बहुभोगिनश्च।
अक्रोधशीलाः समरेऽतिहृष्टास्ते सात्त्विका भूपतुरङ्गमाः स्युः॥"

---

(ঢ) ব্রাহ্মণবালকগণ। (ব্যস্ত অবস্থায় প্রবেশ করিয়া) কুমার! লোকালয়ে 'অশ্ব' অশ্ব' বলিয়া কোন প্রাণিবিশেষ শুনা যায়; এখন আমরা সেই প্রাণীকে এই প্রত্যক্ষ করিলাম।

(ণ) লব। পশুশাস্ত্রে ও যুদ্ধশাস্ত্রে 'অশ্ব' 'অশ্ব' এইরূপ পাঠ করিয়াছি; তা বল কি রকম?

बटवः। श्रूयताम्—

पश्चात् पुच्छं वहति विपुलं, तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति ; खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥२६॥

---

पश्चादिति। सः अस्माभिः प्रत्यक्षीकृतोऽश्वः पश्चात् देहपश्चाद्भागे विपुलं विशालं पुच्छं लाङ्गूलं वहति धारयति, तच्च पुच्छम् अजस्रम् अविरतं धूनोति कम्पयति, दीर्घा लम्बमाना ग्रीवा गलो यस्य स तथोक्तो भवति, तथा तस्य अश्वस्य चत्वार एव खुराः। तथा शष्पाणि नूतनतृणानि अत्ति खादति, तथा आम्रस्य चूतफलस्येव मात्रा प्रत्येकं परिमाणं येषां तान् आम्रमात्रान् शकृत्पिण्डकान् गूथपिण्डान् प्रकिरति विसृजति। व्याख्यातैस्तस्याकृतिवर्णनैः किं वा फलम् अपि तु किमपि नेत्यर्थः पुनः किन्तु सः अश्वः दूरं व्रजति वर्णनकालमध्य एव विप्रकृष्टो भवतीत्यर्थः, अतएव एह्येहि आगच्छागच्छ यामो गच्छाम-स्तमवलोकयितुमित्यर्थः।

अत्र वहतिप्रभृतीनामनेकक्रियाणां सोऽश्व इत्येककर्तृकारकत्वात् दीपकमलङ्कारः, स च उपमार्थापत्तिकाव्यलिङ्गैः स्वभावोक्त्या च सङ्कीर्यते। तथा पूर्वापरकर्तृप्रयोगमध्ये 'खुरास्तस्य चत्वार एव' इति सम्बन्धनिर्देशात् प्रक्रमभङ्गदोषः, किञ्च एवशब्दोपादानात् अनियमे नियमाख्यदोषश्च, "खुरान् वेदसंख्यान् बिभर्त्ती"ति पाठेन तयोः समाधानं स्यात्।
ईदृशस्थानविशेषे निवेशवशेन श्रोतृणामयं श्लोकः परमचमत्कारमावहति। प्रहेलिकावदिममपि प्रायेण पृच्छन्ति च बालकाः।

मन्दाक्रान्ता वृत्तम् ॥२६॥

---

ব্রাহ্মণবালকগণ। শোন—

পিছনের দিকে বৃহৎ লাঙ্গূল ধারণ করিতেছে ; তাহা আবার অনবরত সঞ্চালিত করিতেছে ; তাহার গ্রীবা দীর্ঘ এবং চারিখানাই খুর ; নবতৃণ ভক্ষণ করে, আমের মত বড় বড় বিষ্ঠাপিণ্ড ত্যাগ করে ; এ সব বলিয়া কি হইবে ; সে কিন্তু দূরে যাইতেছে ; সুতরাং আইস আইস, আমরা যাই ॥২৬॥

(इत्युपसृत्याजिने हस्तयोश्चाकर्षन्ति) (त)।

लवः। (सकौतुकोपरोधविनयम्) आर्य्याः! पश्यत पश्यत, एभिर्नीतोऽस्मि। (इति त्वरितं परिक्रामति) (थ)।

अरुन्धतीजनकौ। पूरयतु कुतूहलं वत्सः (१) (द)।

कौशल्या। भअवदि! जाणामि, एदं अणालोअअन्ती ण जीआमि विअ, अदो अक्षदो भविअ पेक्खह्म दाव गच्छमाणं दीहाउं (ध)।

---

(ध) भगवति। जानामि, एतमनालोकयन्ती न जीवामीव, अतोऽन्यतो भूत्वा पश्यामस्तावद्गच्छन्तं दीर्घायुषम्।

(त) इतीति। उपसृत्य आसन्नीभूय, अजिने उत्तरीयभूतमृगचर्म्मणि हस्तयोः करयोश्च गृहीत्वा आकर्षन्ति लवं वटव इति शेषः।

(थ) लव इति। कौतुकम् अश्वदर्शनकौतूहलम्, उपरोधो बालकानामनुरोधः, विनयो गमनानुमतिप्रार्थनया निर्जौद्धत्यपरिहारस्तैः सह विद्यमानमिति तत् तथोक्तम्। आर्य्याः पूज्याः। एभिर्बालकैः नीतोऽस्मि, न त्वहं युष्माननादृत्य स्वेच्छया गच्छामि, अत्र किं ब्रुवन्ति भवन्त इति भावः।

(द) अरु इति। कुतूहलम् आत्मनोऽश्वावलोकनकौतुकमित्यर्थः। यातुमिच्छसि याहीति भावः।

---

(ত) (বালকগণ এই বলিয়া, নিকটে যাইয়া, লবের উত্তরীয় কৃষ্ণসারের চর্ম্মে এবং হস্তযুগলে ধরিয়া আকর্ষণ করিতে লাগিল।)

(থ) লব। (কৌতুক, বাধা ও বিনয়ের সহিত) আর্য্যগণ! দেখুন দেখুন; ইহারা আমাকে নিয়া চলিল। (এই বলিয়া তাড়াতাড়ি পদক্ষেপ করিতে লাগিল।)

---

(१) कौतुकं वत्स इति पाठान्तरम्।

अरु। अतिजवेन दूरमतिक्रान्तः स चपलः, कथं दृश्यते (१) (न)।

(प्रविश्य) कञ्चुकी। भगवान् वाल्मीकिराह, ज्ञातव्यमेतदवसरे भवद्भिरिति (प)।

जनकः। अतिगम्भीरमेतत् किमपि भविष्यति। भगवत्यरुन्धति! सखि कौशल्ये! आर्य्यगृष्टे! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः। (इति निष्क्रान्तो वृद्धवर्गः) (फ)।

(ध) कौशल्येति। जानामि बुध्ये अनुमानं करोमीति यावत्। एतं बालकम्। अन्यतो भूत्वा अन्यत्र गता भूत्वा दर्शनयोग्यस्थाने गत्वेत्यर्थः। दीर्घायुषं चिरायुर्विशिष्टमेनं बालकम्।

(न) अरु इति। चपलः चञ्चलप्रकृतिः स बालकः अतिजवेन महावेगेन दूरं पन्थानम् अतिक्रान्तः अतीत्य गतः, अतएव कथं दृश्यते द्रष्टुं शक्यते त्वयेति शेषः, चक्षुर्विषयातिक्रमादिति भावः।

(प) प्रविश्येति। एतत् 'कस्यायं बालक' इति युष्माभिर्जिज्ञास्यं वृत्तम्। अवसरे यथासमये। इति एवं वाक्यं वाल्मीकिराहेत्यर्थः। नैतदिदानीं वक्तव्यमिति भावः।

(দ) অরুন্ধতী ও জনক। বৎস কৌতুক পূর্ণ করুক।

(ধ) কৌশল্যা। ভগবতি! আমি বুঝিতেছি যে, ইহাকে না দেখিয়া যেন, বাঁচিব না; অতএব অন্য স্থানে যাইয়া গমনকারী এই দীর্ঘায়ুকে দেখি।

(ন) অরুন্ধতী। সেই চঞ্চলস্বভাব বালকটী, অতিবেগে দূর পথ অতিক্রম করিয়াছে; তুমি দেখিবে কিরূপে।

(প) (প্রবেশ করিয়া) ভগবান্ বাল্মীকি বলিলেন—"আপনারা ইহা (লবের বৃত্তান্ত) যথাসময়ে জানিতে পারিবেন।"

(१) कथं दृश्यत इति पाठः पुस्तकान्तरे नास्ति।

वटवः। पश्यतु हि कुमारस्तदाश्चर्य्यम् (ब)।

लवः। दृष्टमवगतञ्च नूनमाश्वमेधिकोऽयमश्व इति (भ)।

वटवः। कथं ज्ञायते ? (म)

---

(फ) जनक इति। एतत् 'कस्याय' पुत्रः' इत्यस्माभिर्जिज्ञास्यं वृत्तं विषय इति यावत्, अतिगम्भीरं दुरवगाहं दुर्बोधमित्यर्थः, अतएव किमपि अनिर्वचनीयम्। अत्र 'भवतु ताव'दिति वाक्यं गन्तव्यम्। स्वयमिति बहुवचनान्तं पदम्; स्वयं स्वयमेवेत्यर्थः न तु प्रतिनिधिभिरित्येवशब्दार्थः, तथात्वे अनादरप्रकाशेन महर्षेर्गौरवहानिः कृता स्यादिति भावः। प्राचेतसं वाल्मीकिम्।

(ब) वटव इति। कुमारो लवो भवान्। तदाश्चर्य्यं तदद्भुतरूपमश्वमित्यर्थः। यो हि यत् प्रथमं पश्यति, स तदाश्चर्य्यमेव मन्यत इति बोध्यम्। हिशब्दोऽवधारणे, पश्यत्वेन न तूपेक्षतामित्यर्थः।

(भ) लव इति। दृष्टं युष्माभिरुच्यमानं तदाश्चर्य्यं तदश्वरूपमद्भुतं वस्तु अवलोकितं तथा अयमश्वः नूनं निश्चितम् अश्वमेधो यज्ञः प्रयोजनमस्येति आश्वमेधिको भवेदित्यर्थः। इति अवगतं बुद्धञ्च ममेति शेषः। नूनमिति भवेदित्यध्याहार्य्यक्रिया विशेषणम्।

(म) वटव इति। कथं केन प्रकारेणेत्यर्थः।

---

(ফ) জনক। ইহা অতিশয় দুর্ব্বোধ; সুতরাং অনির্ব্বচনীয় ঘটনা হইবে। ভগবতি! অরুন্ধতি! সখি! কৌশল্যে! আর্য্যগৃষ্টে! আমরা নিজেরাই যাইয়া ভগবান্ বাল্মীকিকে দেখি। (ইহার পর প্রাচীনগণ চলিয়া গেলেন।)

(ব) ব্রাহ্মণবালকগণ। কুমার! সেই আশ্চর্য্য প্রাণীকে দেখ।

(ভ) লব। দেখিয়াছি, বুঝিয়াছিও নিশ্চয়ই এই অশ্ব অশ্বমেধ-যজ্ঞের।

(ম) ব্রাহ্মণবালকগণ। কি প্রকারে জানিলে?

लवः। ननु मूर्खाः! पठितमेव युष्माभिस्तत्काण्डे। किं न पश्यथ, प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारस्तत्प्रायमेवेदमपि दृश्यते, यदीह न प्रत्ययस्तद्गत्वा पृच्छत (य)।

वटवः। भो भोः! किम्प्रयोजनोऽयमश्वः परिवृतः पर्य्यटति? (र)

---

(य) लव इति। तत्काण्डे अश्वमेधपरिपाटीकथनप्रकरणे पठितमेव तथापि अस्मानामिव पुनः प्रश्नकरणात् मूर्खत्वमिवायातीति भावः। एकानेकान् प्रतीति प्रत्येकम्, शतं संख्या येषां ते, कवचं वर्म्म एषामस्तीति कवचिनः असियोद्धारः, दण्डो यष्टिरेषामस्तीति दण्डिनः दण्डयोधिनः, निषङ्गस्तूणीरमेषामस्तीति निषङ्गिणो धनुर्द्धराश्च रक्षितारः अश्वस्य रक्षका विद्यन्त इति शेषः तेषां प्रायो बाहुल्यं यत्र तत्प्रायम्, इदमपि बलम्। अतएवायमश्वमेधीयोऽश्व इति निश्चीयत इति भावः। इह मम वाक्ये न प्रत्ययो न विश्वासो यदि युष्माकमभूदित्यर्थः, तत् तदा, पृच्छत सैन्यान् जिज्ञासध्वं यूयमित्यर्थः।

एतेन अन्यऋषिकुमारेभ्यो लवस्य मेधावित्वं व्यज्यते।

"निषङ्ग्यस्त्री धनुर्द्धरः।" "प्रायो भूम्यन्तगमने" इति चामरः।

(र) वटव इति। भो भो इति सैन्यसम्बोधने, किं प्रयोजनं यस्य सः, परिवृतः सैन्यैः परिवेष्टितः पर्य्यटति भ्रमति।

---

(য) লব। ওহে মূর্খগণ! তোমরা সেই অশ্বমেধকাণ্ডে ত পড়িয়াছই। দেখিতেছ না কি? একশতসংখ্যক কবচধারী, একশতসংখ্যক দণ্ডধারী এবং একশতসংখ্যক ধনুর্দ্ধারী রক্ষক থাকিবে; এই সৈন্যগুলিও প্রায় সেই রকমই দেখিতেছি। যদি ইহাতে বিশ্বাস না কর, তবে যাইয়া জিজ্ঞাসা কর।

(র) ব্রাহ্মণবালকগণ। ওহে! ওহে! পরিবেষ্টিত অবস্থায় এই অশ্ব, কি প্রয়োজনে ভ্রমণ করিতেছে?

लवः। (सस्पृहमात्मगतम्) अये! अश्वमेध इति, विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महानुत्कर्षनिकर्षः (१) (ल)।

नेपथ्ये। अयमश्वः पताकेयमथवा वीरघोषणा।

सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥२७॥

---

(ल) लव इति। स्पृहया अश्वमेधेच्छया सहेति सस्पृहम्। लवस्य क्षत्रियत्वादादावेव अश्वमेधकरणकामना जाता, तथा च यो हि यज्जातीयः, स अङ्कुर एव तद्भावं व्यनक्तीति बोध्यम्। विश्वं भुवनं विजयन्त इति विश्वविजयिनस्तेषाम्। ऊर्जो बलमस्यास्तीति ऊर्जस्वलो बलवान् अन्यैरनिरोधनीय इत्यर्थः। सर्वान् क्षत्रियान् परिभवितुं लङ्घयितुं तिरस्कर्त्तुमिति यावत् शीलं यस्य स सर्वक्षत्रियपरिभावी सकलक्षत्रियपराजयचिह्नभूत इत्यर्थः। उत्कर्षस्य सर्वप्राधान्यस्य निकषः परीक्षास्थानमित्यर्थः। अश्वमेधस्य सार्वभौमानुष्ठेयतया तत्र क्षत्रियमात्रस्यैव स्पृहा जायत इति भावः। तथा च आपस्तम्बः—

"राजा सार्वभौमोऽश्वमेधेन यजेत नाप्यसार्वभौमः।"

ऊर्जस्वल इति "ज्योत्स्नादिभ्यो वलच्" इति अस्त्यर्थे वलच्प्रत्ययः।

स्वर्णपरीक्षकपाषाणे रूढस्य निकषशब्दस्यात्र परीक्षकमात्रे उपादानलक्षणा।

वटुभिर्जिज्ञासितमर्थं केचिदश्वरक्षकाः सैनिकाः नेपथ्यादाहुः अयमिति। सप्तसु भूरादिषु लोकेषु भुवनेषु एकः अद्वितीयः वीरः शूरः तस्य, दशकण्ठकुलद्विषः रावणवंशप्रविध्वंसिनो रामस्येत्यर्थः अयमश्वः अश्वमेधयज्ञीयो घोटकः, तथा इयञ्च पताका जयपत्राङ्किता वैजयन्ती ; अथवा वीरघोषणा अश्वपताकात्मिका रामस्य वीरत्वप्रख्यापनवाणी ;

(ল) লব। (স্পৃহার সহিত স্বগত) ও! 'অশ্বমেধ' ইহা বিশ্ববিজয়ী ক্ষত্রিয়দিগের তেজের সূচক এবং সমস্ত ক্ষত্রিয়ের ন্যূনতাজনক স্বকীয় উৎকর্ষের গুরুতর পরীক্ষাস্থান।

---

(१) उत्कर्षनिष्कर्ष इति पाठान्तरम्।

लवः। (सव्यथमिव) अहो! सन्दीपनान्यक्षराणि (व)।

वटवः। किमुच्यते, प्राज्ञः खलु कुमारः (श)।

---

अयमश्व इयञ्च पताका शास्त्रानुसरणात् सामान्यमात्रं यत्किञ्चित्, किन्तु सप्तलोकमध्ये राम एव सर्वप्रधानो वीर इति घोषणैव मुख्यं प्रयोजनमित्यर्थः।

अत्र अश्वपताकाभ्यां वीरघोषणाया भेदेऽपि अभेदाध्यवसायादतिशयोक्तिरलङ्कारः। सप्तलोकविजयिनो रावणस्य विजेतृत्वात् तेषु राम एवाद्वितीयो वीर इति शब्दशक्तिमूलो वस्तुध्वनिः।

सप्तलोकानाह अग्निपुराणम्—

"भूर्भुवः स्वर्महश्चैव जनस्य तप एव च।
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः॥" ॥२७॥

(व) लव इति। व्यथया उक्तोक्तिश्रवणान्मनोवेदनया सहेति सव्यथम्। अक्षराणि वर्णाः 'अयमश्व' इत्यादिवाक्यमित्यर्थः सन्दीपनानि उत्तेजकानि कोपोत्साहवर्द्धकानीति यावत्। "प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यये"ति न्यायेन वीरस्य वीरान्तर-वीरत्वघोषणाश्रवणे कोपोत्साहयोरुत्तेजनास्वभावसिद्धैवेति भावः। स्वगतवदुक्तिरियम्।

(श) वटव इति। किमुच्यते किं वक्तव्यमस्तीत्यर्थः, कुमारः खलु प्राज्ञः सर्वेषा-मस्माकं मध्ये लव एव विशेषाभिज्ञः, अस्मिन् विषये किं पुनर्वक्तव्यमस्तीति समुदायार्थः। अधीतवेदिकाश्वमेधकाण्डा अपि वयं प्रागिममश्वमवलोकमाना अपि अश्वमेधीयत्वेन न निश्चितवन्तः, किन्तु लवो दर्शनमात्रमेव निश्चितवानिति अस्माकं मध्ये लवस्यैव प्राज्ञ-तमत्वमत्याहतमेवेति भावः। केचित्तु एभिः सैन्यैः किमुच्यते तद्वयं न बुध्यामहे किन्तु कुमारः प्राज्ञः, तेन स बुध्यत इति भाव इति व्याख्यानमाचक्षते।

---

নেপথ্যে। রাবণবংশধ্বংসকারী এবং সপ্তলোকের মধ্যে অদ্বিতীয় বীর রামচন্দ্রের এই অশ্ব এবং এই পতাকা; অথবা ইহা বীরত্বের ঘোষণা-মাত্র ॥২৭॥

(ব) লব। (ব্যথার সহিতই যেন) ও! কি উত্তেজক বাক্য!

(শ) ব্রাহ্মণবালকগণ। বলিব কি, কুমার অভিজ্ঞই বটে।

लवः। भो भोः! तत्किमक्षत्रिया पृथ्वी? यदेवमुद्धत-मुद्घोष्यते (१) (ष)।

नेपथ्ये। अरे! महाराजं प्रति कुतः क्षत्रियाः (स)।

लवः। धिग्जाल्मान् (ह)।

यदि ते सन्ति सन्त्येव, केयमन्या विभीषिका।
किमुक्तैः सन्निपत्यैव पताकां वो हराम्यहम् (२) ॥२८॥

(ष) लव इति। यद्यस्मात् एवमीदृशम् उद्धतं सदर्पम् उद्घोष्यते रामस्य वीरत्वं प्रख्याप्यते, तत् तस्मात् किं पृथ्वी पृथिवी अक्षत्रिया क्षत्रियरहिता वीरशून्येत्यर्थः मन्यते युष्माभिरिति शेषः। पृथिवीमं क्षत्रियवती अतएव नेदृशं पुनरुद्घोषणीयमिति भावः।

(स) नेपथ्य इति। अरे इति नीचसम्बोधने। महाराजं रामचन्द्रम्। तथा च रावणविजयिनो रामचन्द्रस्यान्तिके वीर्य्यविषये रावणविजितविदलितक्षत्रियाणामुल्लेख एव निर्बोधतापरिचय इति भावः।

(ह) लव इति। जाल्मान् असमीक्ष्यकारिणः अविवेचकानिति यावत् युष्मान् 'अरे' इत्यादिवादिनः सैनिकानिति शेषः, धिक् निन्दामि। ये वीराणां बलाबलमपरीक्ष्यैव तारतम्यं निर्द्दिशन्ति, ते निन्दनीया एवेति भावः।

"जाल्मोऽसमीक्ष्यकारी स्या"दित्यमरः।

यदीति। ते रामचन्द्राः रावणादिविजयिन इति भावः। महावीरत्वेन गौरवाद्बहु-वचनम्, यदि सन्ति तिष्ठन्ति, सन्त्येव तिष्ठन्तु तावत्। न तेनास्माकं किमप्यायाति याति वेति भावः। किन्तु अन्या का इयं विभीषिका भयप्रदर्शनम्, रामस्य महावीरत्व-

(ষ) লব। ওহে! ওহে! তবে কি পৃথিবী ক্ষত্রিয়শূন্য? যে এই রকম দর্পের সহিত ঘোষণা করিতেছ।

(স) নেপথ্যে। ওরে! মহারাজের প্রতি আবার ক্ষত্রিয় কোথায়?

(হ) লব। অবিবেচকদিগকে ধিক্।

(१) यदेवमुदीर्य्यत इति पाठान्तरम्। (२) एभिरधुना, तां पताकां हरामि वः।—भरतस्याश्वां पताकां वो हराम्यहमिति पाठान्तरम्।

भो भो बटवः! परिवृत्य लोष्टैरभिघ्नन्तो नयतैनमश्वम् (१)। एष रोहितानां मध्ये वराकश्चरतु (ख)।

(प्रविश्य सक्रोधदर्पः) पुरुषः। धिक् चापलम्, किमुक्तवानसि, तीक्ष्णनीरसा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते, (२)

प्रकाशपूर्वकं कथं भयप्रदर्शनं क्रियत इत्यर्थः। न तेन क्षमां करोमीति भावः। अथवा उक्तैरत्रविषये वागाड़म्बरैः किं प्रयोजनमस्ति, अपि तु किमपि नेत्यर्थः, कर्त्तव्यमेव मया करणीयमिति भावः। तथा च सन्निपत्यैव वेगेन गत्वैव न तु किञ्चिद्विविच्यैवेत्यर्थः। अहं वो युष्माकं पताकां जयपताकिनीं वैजयन्तीं हरामि बलप्रकाशेन गृह्णामि; यदि भवन्तः शक्नुवन्ति तर्हि रक्षन्त्विति भावः।

अत्र अर्थापत्तिरलङ्कारः॥२८॥

(ख) भो भो इति। परिवृत्य परिवेष्ट्य, लोष्टैः शुष्कमृत्पिण्डैः पाषाणखण्डैर्वा अभिघ्नन्तः ताड़यन्तः एनमश्वं नयत आश्रमाभिमुखं चालयत। एष वराकः क्षुद्रोऽश्वः रोहितानाम् आश्रमस्थमृगविशेषाणां मध्ये चरतु भ्रमतु।

"रोहित।—मृगविशेषः।" "वराकः।—अवरः" इति च शब्दकल्पद्रुमः।

(क) प्रविश्येति। चापलं चञ्चलता धिक्, बालस्वभावसुलभचपलतया यदेनमश्वं ताड़यन् हर्त्तुमिच्छसि, तन्निन्दामीत्यर्थः अविवेकप्रयुक्तत्वादिति भावः। किमुक्तवानसि

---

রাম যদি সেইরূপ মহাবীরই হন, হউন; কিন্তু অন্য প্রকার এই ভয় প্রদর্শনটা কি। এ সব বলিয়া কি হইবে; আমি উপস্থিত হইয়াই তোমাদের পতাকা হরণ করিলাম॥২৮॥

(ক) ওহে ব্রাহ্মণবালকগণ! তোমরা এই অশ্বটাকে পরিবেষ্টন করিয়া লোষ্ট্রদ্বারা তাড়ন করিতে করিতে নিয়া যাও; এই ক্ষুদ্র অশ্বটা হরিণগণের মধ্যে বিচরণ করুক।

---

(१) परावर्त्त्यतैनमश्वमिति विभिन्नः पाठः। (२) न दृप्तां वाचमनुसहन्ते इति क्वचित् पाठः।

राजपुत्रश्चन्द्रकेतुररिविमर्द्दनः (१) सोऽप्यपूर्वारण्य-(२) दर्शन-कौतूहलाच्छिन्नहृदयो न यावदायाति (३) तावत् (४) त्वरितमनेन तरुगहनेनापसर्पत (क)।

बटवः। कुमार! कृतमनेनास्त्रेन, तर्जयन्ति विस्फुरित-

परिवत्थेत्यादि किं कथितवान् त्वम्, तादृशं न पुनर्वाच्यमिति भावः। तत्र कारणमाह हि यस्मात् तीक्ष्णाः प्रचण्डाश्चामी नीरसा निर्दयाश्चेति तीक्ष्णनीरसाः, आयुधीयश्रेणयः शस्त्रास्त्रधारिणो योद्धृवर्गाः शिशोरपि युवादिषु का कथा बालकस्यापि दृप्तां सगर्वां वाचं न सहन्ते श्रुत्वा न क्षमन्त इत्यर्थः। अतएव बालकत्वेनापि न ते परित्राणमस्तीति भावः। विशेषतश्च, सोऽपि न केवलमायुधीयश्रेणयः अस्माकं सेनापतित्वेन प्रसिद्धः चन्द्रकेतुरपीति अपिशब्दस्यार्थः। अरिविमर्द्दनः शत्रुनिर्यातनकारी, अतएव तेन सह शत्रुताचरणे कस्यापि नास्ति परित्राणमिति भावः। अपूर्वस्य आश्चर्यस्य अरण्यस्य वनस्य दर्शनकौतूहलेन आच्छिन्नम् आकृष्टं हृदयं मनो यस्य स तथोक्तः। अनेन सन्निहितेन तरुगहनेन वृक्षवनेन निविड़वनपथेनेत्यर्थः अपसर्पत पलायध्वम्।

गहनशब्देनैव प्रकृतार्थनिर्वाहेऽपि तरुपदोपादानं तस्य निविड़त्वसूचनार्थं तेन च पलायने अन्येषां दर्शनासम्भवेन महती सुविधास्तीति विज्ञापितमिति बोध्यम्।

(ख) बटव इति। कृतम् अलम्। विस्फुरितानि उत्तोलनेन विकसितानि शस्त्राणि

(क) ক্রোধ ও দর্পসমন্বিত কোন পুরুষ। (প্রবেশ করিয়া) এ চপলতাকে আমি ধিক্কার দি; কি বলিলে? অস্ত্রধারী লোক সকল উগ্রস্বভাব অথচ নির্দ্দয়প্রকৃতি; সুতরাং তাঁহারা বালকেরও গর্ব্বিত বাক্য সহ্য করেন না। প্রসিদ্ধ বীর শত্রুহন্তা রাজপুত্র চন্দ্রকেতুও আশ্চর্য্য বনদর্শনের কৌতুকে আকৃষ্টচিত্ত হইয়া পড়িয়াছেন; যে পর্য্যন্ত তিনিও না আসেন, ইহার মধ্যেই তোমরা এই ঘন ঘন গাছগুলির ভিতর দিয়া তাড়াতাড়ি পলাইয়া যাও।

(१) आकृष्टशरासनः। (२) सौम्यपूर्वारण्य—। (३) परापतत्यद्यापि। (४) तत् इति चत्वारि-पाठान्तराणि।

शस्त्राः कुमारमायुधीयश्रेणयः, दूरे चाश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे (ख)।

लवः। (स्मितं कृत्वा) किं नाम विस्फुरन्ति शस्त्राणि। (धनुरारोपयन्) (ग)।

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारि घोरघन-घर्घरघोषमेतत्।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥२८॥

शस्त्रा ता', आयुधीयश्रेणयः योद्धृवर्गाः कुमारः त्वां तर्जयन्ति भर्त्सयन्ति। कौतुककरणार्थमश्वग्रहणेऽपि यदमी क्रुध्यन्ति तदेतदश्वग्रहणेन नास्ति प्रयोजनमिति भावः। नन्वेषु आक्रामत्सु अस्माकं चीत्कारमाकर्ण्य भगवान् वाल्मीकिरागत्य सैनिकान्निवारयेदित्याह दूरे चेति। किञ्चेति चार्थः। आश्रमपदं तपोवनम्। अतएवास्माकं चीत्काराश्रवणेन ऋषेरागमनासम्भवात् सैनिकानां निवारणसम्भावनापि नास्तीति भावः। तत्तस्मात् एहि त्वमागच्छ, हरिणप्लुतैः हरिणवत् उल्लम्फनप्रलम्फनैः। अलसभीरुस्वभावानां ब्राह्मणकुमाराणामनुरूपैवेयमुक्तिरित्यतीवमनोहरेयं कविकल्पना।

(ग) लव इति। क्रोधे नामशब्दः। विस्फुरन्ति उत्तोलनेन विकसन्ति। तदा अहमप्येतत्प्रतिविधानं करोमीति भावः। आरोपयन् गुणं ग्राहयन् सज्यं कुर्वन्नित्यर्थः।

ज्येति। ज्या मौर्वी गुण इति यावत जिह्वा रसनेव तया वलयिते वलयाकारं

(খ) ব্রাহ্মণবালকগণ। কুমার! এই ঘোড়া দিয়া আমাদের দরকার নাই; অস্ত্র চকমক্ করিতেছে, এই অবস্থায় অস্ত্রধারী লোকগুলি কুমারকে ভর্ৎসনা করিতেছে; আশ্রমও দূরে; অতএব আইস, আমরা হরিণের ন্যায় লাফাইয়া পলাইয়া যাই।

(গ) লব। (ঈষৎ হাস্য করিয়া) কি অস্ত্র চকমক্ করিতেছে! (ধনুতে গুণ আরোপণ করতঃ)

प्रापिते नवीकृते इत्यर्थः उत्कटे अत्युग्रां भयङ्करे कोटी अग्रभागद्वयं दंष्ट्रे विशाली दन्ताविव यस्य तत्तथोक्तम्, भक्षणलोलुपः कृतान्तो यथा दीर्घया रसनया सृक्कणीद्वयं प्रान्तवर्त्ति विशालदन्तद्वयञ्च मुहुरजस्रञ्च परिलेढ़ि, तथा अयं चापोऽपि लभ्यमानेन गुणेन अजस्रबाणवर्षणात् अविरतमग्रदेशद्वयं स्पृशतु इति तात्पर्य्यार्थः। तथा उद्‌गारी उत्तिष्ठन्, घोरो भयङ्करः, घनो निरन्तरः, घनस्य मेघस्येव वा, घर्घरघोषो घर्घरेत्येवं गम्भीर-टङ्कारध्वनिर्यस्मात् तत् तथोक्तम्, एतत् मदीयं चापं धनुः कर्त्तृ, कृतान्तो यथा 'मड़मड़' इत्येवं चर्वणशब्दं करोति, तथा अयमपि चापः घर्घरटङ्कारध्वनिं करोत्विति तात्-पर्य्यार्थः; ग्रासे प्रलयकालीनजगत्कवलीकरणे प्रसक्तस्य प्रवृत्तस्य, हसतो विकटहास्यं कुर्वतः, अन्तकस्य कालस्य यत् वक्त्रं मुखं यन्त्रमिव तस्य जृम्भां व्यादानं विड़म्बयितुम् अनुकर्त्तुं शीलं यस्य तत् ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविड़म्बि, तादृशं विकटं दारुणम् उदरं मध्यं यस्य तत् तथोक्तम् अस्तु भवतु। प्रलयकाले कृतान्तो यथा प्रचुर-भक्ष्यलाभादानन्देन विकटहास्यकरणात् मुखव्यादानं करोति, तथा अयमपि चापः प्रचुरविनाशनीयलाभेन गुणारोपणात् विपुलायतनमुदरं करोत्विति तात्पर्य्यम्।

अत्र रेखाङ्कितस्थलवर्त्तिनीनां पञ्चानां लुप्तोपमानाम् अङ्गाङ्गिभावेन सङ्करः। तेन च क्षणेनैव सर्वमेव सैन्यसमूहमहं व्यापादयिष्यामीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः, तथा कदापि न खलु कालो लोलरसनामुखव्यादानादिकं विधाय जगद्ग्रासं करोति, तथापि तत्सम्बन्धोक्तेः "उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेता"-मित्यादिवदसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारश्च व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरपि। तथा प्रथमे पादे कटकोटीत्येतयोरनेकधा सकृत् साम्यात् छेकानुप्रासः, द्वितीये एकस्य धकारस्य असकृत् साम्यात् वृत्त्यनुप्रासः, तृतीये सकारस्य असकृत् साम्यात् वृत्त्यनुप्रासः, तथा चतुर्थे विशब्दस्य सकृत् साम्यात् वृत्त्यनुप्रासश्च इत्येतेषां संसृष्टिः। तथात्र दुःश्रवत्वदोषः सन्नपि गुणायते, वक्तुः क्रुद्धत्वात् वीररसाश्रयत्वाच्च। तथा चोक्तं साहित्यदर्पणे—

"वक्तरि क्रोधसंयुक्ते वाच्ये ऽत्यन्तं समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥"

तथात्र युद्धवीरो रसः, ओजो गुणः, गौड़ी च रीतिः।

(इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।) (घ)

## इति कौशल्याजनकयोगो नाम चतुर्थोऽङ्कः । (ङ)

चापशब्दस्य "धनुश्चापौ" इत्यमरकोषे पुंसा निर्द्देशेऽपि साहचर्य्यात् क्लीवत्वमपि ज्ञेयम् । वलयितेति करोत्यर्थेनन्तात् कर्म्मणि क्तः ।

वसन्ततिलका वृत्तम् ॥२९॥

(घ) इतीति । यथोचितम् उचितमनतिक्रम्य । एकेन द्वारेण लवादिमुनिकुमाराः, अन्येन च द्वारेण सैनिका निष्क्रान्ता इत्यर्थः प्रवृत्तवैराणां विभिन्नपथेनैव गमनौचित्यात् ।

(ङ) इतीति । इतिशब्दोऽङ्कसमाप्तौ । कौशल्याजनकयोर्योगः मिलनं साक्षात्कार इति यावत् यत्र सः । नाम कौशल्याजनकयोग इति नाम्ना प्रसिद्धः, चतुर्थोऽङ्कः समाप्त इति शेषः ।

इति महामहोपाध्याय-महाकवि-भारताचार्य्य-
श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचिताया-
मुत्तररामचरितटीकायां सर्वार्थबोधिनीसमाख्यायां
चतुर्थाङ्कविवरणं समाप्तम् ॥०॥

---

জিহ্বার ন্যায় গুণ, আমার এই ধনুখানাকে গোলাকার করুক, দন্তদ্বয়ের ন্যায় ইহার অগ্রদ্বয় ভয়ঙ্কর হউক এবং ইহা হইতে ঘন ঘন ভয়ঙ্কর টঙ্কারধ্বনি উঠিতে থাক ; এই অবস্থায় আমার এই ধনুর ভীষণ অভ্যন্তরভাগ প্রলয়-কালে জগৎ গ্রাস করিতে প্রবৃত্ত যমের মুখমণ্ডল ব্যাদানের অনুকরণ করুক ॥২৯॥

(ঘ) (ইহার পর উপযুক্তভাবে পদক্ষেপ করিয়া সকলে চলিয়া গেল ।)

(ঙ) কৌশল্যা ও জনকসম্মেলন নামে চতুর্থ অঙ্ক
সমাপ্ত ॥০॥

———o———

# पञ्चमोऽङ्कः ।

—:०:—

नेपथ्ये । भो भोः सैनिकाः ! जातं जातमवलम्बन-मस्माकम् । (क)

नन्वेष त्वरितसुमन्त्वनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः (१)
श्रुत्वा नः (२) प्रधनमुपैति चन्द्रकेतुः ॥१॥

(क) नेपथ्य इति । अस्माकम् अनेन मुनिकुमारेण निहन्यमानानामिति भावः अवलम्बनम्, रक्षकत्वेनाश्रयः आश्वासकारणमित्यर्थः, जातं भूतम् । हर्षे द्विरुक्तिः ।

कथमित्याह नन्वेष इति । नन्विति सैनिकसम्बोधने । एषः अनतिदूरे दृश्यमानः चन्द्रकेतुः अस्माकं सेनापतिः लक्ष्मणपुत्रः चन्द्रकेतुनामा वीरः नोऽस्माकं प्रधनं केनचि-न्मुनिकुमारेण सह युद्धं श्रुत्वा संवाददातुर्मुखादाकर्ण्य त्वरितेन त्वरान्वितेन सुमन्त्रेण सुमन्त्रनामकेन सारथिवरेण नुद्यमानाः प्रेर्यमाणाः व्यावल्गन्तः प्रधावन्तः अतएव प्रजवना महावेगा वाजिनो घोटका यस्य तेन तथोक्तेन रथेन करणेन उद्घातेन उन्नताव-नतभूमितया मुहुः प्रतिघातेन प्रचलितः कम्पितः कोविदारकेतुः रक्तकाञ्चनवृक्षनिर्म्मित-ध्वजदण्डो यस्य स तथोक्तः सन् उपैति समरभूमिमागच्छति, अस्मान् परिरक्षन् युद्धार्थमिति शेषः । अतएव यूयमाश्वसितेति भावः ।

---

(क) নেপথ্যে। ওহে ওহে সৈন্যগণ! হইয়াছে, আমাদের অবলম্বন হইয়াছে।

---

(१) उद्घातप्रचलितकोविदारकेतु इति विसर्गहीनं क्रियाविशेषणरूपं पाठान्तरम् ।

(२) श्रुत्वा वः इति पाठभेदः ।

(ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुत-हर्षसम्भ्रमश्चन्द्रकेतुः) (ख)।

चन्द्र। आर्य्य! सुमन्त्र! पश्य पश्य—(ग)

---

अत्र प्रजवनत्वं प्रति व्यावल्गनं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा द्वितीयार्द्धे केतुः केतुरिति चान्त्ययमकञ्च शब्दालङ्कारः, अनयोः संसृष्टिः।

"कोविदारः। रक्तकाञ्चनरञ्च" इति शब्दकल्पद्रुमः। "युद्धमायोधनं जन्यं प्रधनं प्रविदारणा"मित्यमरः।

त्वरा अस्य सञ्जातेति तारकादित्वादितच् प्रत्ययः।

प्रहर्षिणी वृत्तम्।

भो भो इत्यादिः श्लोकस्थचन्द्रकेतुरित्यन्तः सन्दर्भश्चूलिका नाम विष्कम्भकादिवदर्थोपक्षेपकः। तथा च साहित्यदर्पणः—

"अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका।" ॥१॥

(ख) तत इति। असंख्यदुर्द्धर्षसैनिकैः सह एकाकिनो बालकस्य समरदर्शनात् अद्भुतम् आश्चर्य्यम्, वीराणां समानवीरान्तरलाभस्य आनन्दकारणत्वात् हर्षं आनन्दः, स्वकीयसैन्यविनाशदर्शनात् सम्भ्रमः त्वरा तैः सह विद्यमान इति साद्भुतहर्षसम्भ्रमः।

(ग) चन्द्रेति। स्वपितामहदशरथस्य मन्त्रित्वेन ततसहचरत्वात् आर्य्येति गौरवसम्बोधनम्। पश्य पश्येति विस्मये द्विरुक्तिः।

---

ওহে! চন্দ্রকেতু আমাদের যুদ্ধ শুনিয়া, রথে (আরোহণ করিয়া) এই উপস্থিত হইতেছেন; ত্বরান্বিত সুমন্ত্র অশ্বগণকে চালাইতেছেন; তাহাতে অশ্বগণ ধাবিত হইয়া অত্যন্ত বেগবান হইয়াছে এবং উন্নত অবনত স্থানে চলিতে থাকায়, রক্তকাঞ্চনবৃক্ষনির্ম্মিত রথের ধ্বজ কম্পিত হইতেছে ॥১॥

(খ) (তদনন্তর সুমন্ত্র-সারথি-চালিত রথে, ধনুষ্পাণি অবস্থায় বিস্ময়, আনন্দ ও ব্যস্ততার সহিত চন্দ্রকেতুর প্রবেশ।)

(গ) চন্দ্রকেতু। আর্য্য! সুমন্ত্র! দেখুন দেখুন—

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनिगुञ्जत्कोटिना कार्म्मुकेण।
समरशिरसि चञ्चत्पञ्चचूड़श्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः॥२॥

---

किरतीति। कलितेन कृतेन "कलिः कामधेनु"रिति मल्लिनाथः। किञ्चित्कोपेन बहुसंख्यकानामपि चमूतसैनिकानामतितुच्छतयावज्ञानात् अथ च आक्रमणात् ईषत्कोपेन रज्यन्ती लोहितायमाना मुखश्रीर्वदनकान्तिर्यस्य स कलितकिञ्चित्कोपरज्यन्मुखश्रीः, तथा चञ्चन्त्यः सर्वासु दिक्षु अविरतपरिभ्रमणात् मस्तककम्पनेन कम्पमानाः पञ्चचूडाः शिखा यस्य स चञ्चत्पञ्चचूडः मस्तककम्पनात् चलितकाकपक्ष इत्यर्थः अयं दृश्यमानः कोऽपि अपरिचितः वीरश्चासौ पोतः शिशुश्चेति वीरपोतः शूरबालकः समरशिरसि युद्धमूर्द्धनि संग्रामभूमावित्यर्थः अनवरतम् अजस्रं निगुञ्जन्त्यौ टङ्कारं कुर्वत्यौ कोटी अटन्यौ अग्रदेशाविति यावत्, यस्य तेन तथोक्तेन कार्म्मुकेण धनुषा चमूनामश्वतसेनानाम् उपरि शरो बाणस्तुषारः असंख्यत्वात् हिममिव तं किरति विक्षिपति। एतदेवाश्चर्य्यमिति भावः।

अत्र शरतुषार इति लुप्तोपमालङ्कारः, तथा प्रथमार्द्धे ककारस्य तृतीयपादे चकारस्य चतुर्थपादे च रेफस्यासकृत् पाठात् वृत्त्यनुप्रासः, किञ्च तृतीयपादे चञ्चत्पञ्चेति छेकानुप्रासः, तेन च तृतीयपादे वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः। इन्द्रधनुः-परिशोभितः शब्दायमानो नवजलधरो यथा वारि वर्षति, तद्वदयं बाणान् वर्षतीति व्यज्यते, तेन च वस्तुनालङ्कारध्वनिः। शराणामसंख्यत्वांश एव तुषारसादृश्यं तेन न उपमानस्य प्रमाणगतन्यूनत्वरूपानुचितार्थत्वदोषः।

मालिनी वृत्तम्॥२॥

---

অপরিচিত এই বীর বালক, সমরাঙ্গনে সৈন্যগণের উপরে শিশিরের ন্যায় শর নিক্ষেপ করিতেছে, অবলম্বিত কিঞ্চিৎ কোপে ইহার মুখশ্রী রক্তবর্ণ হইয়াছে এবং পাঁচটী চূড়াই কম্পিত হইতেছে, আর ধনুর দুই দিক্ই অনবরত শব্দ করিতেছে॥২॥

आश्चर्य्यम् (घ)।

मुनिजनशिशुरेकः सर्व्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः।
दलितकरिकपोलग्रन्थिटङ्कारघोरं (१)
ज्वलितशरसहस्रः कौतुकं मे करोति (२) ॥३॥

आश्चर्य्यमाश्चर्य्यम् (ङ)।

---

(घ) आश्चर्य्यमिति। आश्चर्य्यं परश्लोके व्यक्तीभविष्यति।

मुनीति। नवो नूतनः अतएव अप्रसिद्धः लोके अप्रथितः रघुकुलस्य रघुवंशस्य प्ररोहः अङ्कुर इव एकः द्वितीयरहितः निःसहाय इति यावत् मुनिजनशिशुः ऋषिबालकः सर्व्वतः सर्व्वस्मिन् सैन्यकाये सैनिकसमूहे। ज्वलितक्रियाया अधिकरणे सप्तमीयम्, दलिता विमर्द्दिता ये करिकपोलग्रन्थयः हस्तिगण्डसन्धिभागाः तेषु टङ्कारेण टं टमित्येवंरूपेण विदारणशब्देन घोरं भयङ्करं यथा स्यात्तथा ज्वलितानि दीप्तानि शरसहस्राणि बाणसमूहा यस्य स तथोक्तः सन् मे मम कौतुकं कौतूहलं करोति विदधाति। असौ मुनिबालकः सुधारशरसमूहेन हस्तिकपोलास्थीनि सशब्दं विदारयन् निखिलसैनिकपुरुषांश्च निपीड़यन् यत् स्वयमकुतोभयः सुस्थ एवास्ते तदेवाश्चर्य्यमिति भावः।

अत्रोपमालङ्कारः, इवशब्दसत्त्वेन प्ररोहत्वारोपाभावान्न रूपकमिति भाव्यम्।

"कायः।—संघः।" "प्ररोहः। अङ्कुरः" इति च शब्दकल्पद्रुमः।

मालिनी वृत्तम्॥३॥

---

(ঘ) কি আশ্চর্য্য! রঘুবংশের অপ্রসিদ্ধ নূতন অঙ্কুরের ন্যায়, একটী-মাত্র মুনিবালক, সকল সৈন্যের দেহে, প্রজ্বলিত বহুতর শর প্রবেশ করাইয়া, আমার কৌতুক জন্মাইতেছে; হস্তিগণের গণ্ডের অস্থি মর্দ্দন করিবার সময় 'টং টং' শব্দে ঐ শরাঘাত ভয়ঙ্কর হইতেছে ॥৩॥

---

(१) टङ्कारघोरेति अनुस्वारहीनं पाठान्तरम्। (२) कस्मिंश्चित् पुस्तके मुनिजने-त्यादिश्लोकात् परं किरतीत्यादिश्लोकसन्निवेशो दृश्यते। प्राथमिकमाश्चर्य्यमिति च नास्ति।

सुमन्त्रः। आयुष्मन्! (च)

अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तवैव तुल्यरूपम् (१)।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥४॥

---

(ङ) आश्चर्य्यमिति। आश्चर्य्यम् एकेन शिशुना दुर्द्धर्षबहुसैन्यनिपीडनमित्यर्थः। अतिशये द्विरुक्तिः।

(च) सुमन्त्र इति। आयुष्मन्निति रथिनः सम्बोधनं सारथेः कर्त्तव्यतया नियमितम्। तथा च साहित्यदर्पणः—

"आयुष्मन् रथिनं सूतः।" वदेदिति पूर्व्वेणान्वयः।

अतीति। अतिशयितः अतिक्रान्तः सुरासुराणां देवदैत्यानां प्रभावो माहात्म्यं विक्रम इति यावत् येन तम् अतिशयितसुरासुरप्रभावम्। ननु तर्हि किं मत्तोऽप्यसौ प्रधानवीर इत्याह तवैव तुल्यरूपं समानस्वरूपं समानवीर्य्यमिति यावत् अमुं शिशुं मुनिबालकमवलोक्य कुशिकसुतस्य विश्वामित्रस्य मखद्विषां यज्ञविघ्नकारिणां सुबाहु-मारीचादिराक्षसानामित्यर्थः प्रमाथे विमर्द्दने धृतधनुषं धनुर्द्धरं रघुनन्दनं रामं स्मरामि। पराक्रमेण आकारेण च सर्व्वथैव शिशुरसौ रामसमानः तव च समान इति भावः।

अत्र सुरासुरप्रभावातिक्रमासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तवैव तुल्यरूपमिति आर्थी उपमा, तथा सादृश्ये रामचन्द्रस्मरणात् स्मरणनामालङ्कारश्च, एतेषामङ्गाङ्गिभावेन सङ्करः।

विश्वामित्रेण स्वकीयतपोवनं नीतो रामभद्रः तदीययज्ञविघ्नकारिणः सुबाहुमारीचादीन् शरजालैरमर्द्दयदिति रामायणवार्त्ता।

पुष्पिताग्रा वृत्तम् ॥४॥

---

(ঙ) আশ্চর্য্য আশ্চর্য্য!

(চ) সুমন্ত্র। আয়ুষ্মন! দেবগণ এবং দানবগণেরও বিক্রমলঙ্ঘনকারী

---

(१) वतैव तुल्यरूपमिति पाठभेदः।

चन्द्र। इममन्त्वेकमुद्दिश्य (१) भूयसामारम्भ इति हृदय-मपत्रपते (छ)।

अयं हि शिशुरेककः समरभारभूरिस्फुरत्-(२)
करालकरकन्दलीकलितशस्त्रजालैर्बलैः।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्द्दिनद्विरदवारिदैरावृतः ॥५॥

(छ) चन्द्रेति। तु किन्तु, एकं द्वितीयसहायरहितं इमं बालकमुद्दिश्य प्रति-पक्षत्वेन लक्ष्यीकृत्य भूयसां प्रभूतानामस्मत्सैन्यानामित्यर्थः आरम्भः युद्धोपक्रमो वर्त्तते इति शेषः। इति हेतोः, हृदयं मदीयं मनः अपत्रपते लज्जते। अस्माकं प्रत्येकस्य दुर्ब्बलताप्रकाशादिति भावः। एतेन चन्द्रकेतोर्महत् वीर्य्यम् औदार्य्यञ्च व्यज्यते।

अयमिति। समरभारे संग्रामरूपदुर्वहव्यापारे तुमुलयुद्धकार्य्ये इत्यर्थः भूरि प्रचुरं सातिशयमित्यर्थः यथा स्यात्तथा स्फुरन्ति दीप्यमानानि करालाणि भयानकानि करकन्दलीभिः स्तम्बसमानविशालहस्तैः कलितानि गृहीतानि शस्त्रजालानि आयुधवृन्दानि येषां तैः तथोक्तैः, तथा क्वणन्त्यः शब्दायमाना याः कनककिङ्किण्यः स्वर्णनिर्म्मितक्षुद्रघण्टाः ताभिः झणझणायिताः 'झण झण' इत्येवं शब्दं कुर्व्वन्तः स्यन्दना रथा येषां तैः तथोक्तैः, तथा क्वणन्त्यः शब्दायमाना याः कनककिङ्किण्यः स्वर्णनिर्म्मितक्षुद्रघण्टाः ताभिः 'झण झण' इत्येवं शब्दं कुर्व्वन्तः स्यन्दना रथा येषां तैः तथोक्तैः, तथा अमन्दा अनल्पाः प्रचुरा इति यावत् मदा दानजलानि दुर्द्दिनानि वृष्टय इव येषां ते अमन्दमददुर्द्दिना द्विरदा हस्तिनः वारिदा मेघा इव येषु तैस्तथोक्तैः बलैः अस्मत्सैनिकैः अयम् एककः हि एकाकी एव न

এবং তোমারই তুল্য আকৃতি এই বালকটীকে দেখিয়া আমি বিশ্বামিত্রের যজ্ঞধ্বংসকারী রাক্ষসগণের বিনাশের সময় ধনুর্দ্ধারী রামচন্দ্রকে স্মরণ করিতেছি ॥৪॥

(ছ) চন্দ্রকেতু। কিন্তু এই একজনকে লক্ষ্য করিয়া, বহুলোকের যুদ্ধারম্ভ হইয়াছে; ইহাতে আমার চিত্ত লজ্জিত হইতেছে।

(१) मम त्वेकमुद्दिश्येति पाठान्तरम्। (२) समररेणुभूरिस्फुरदिति पाठभेदः।

सुमन्त्रः। वत्स! एभिः समस्तैरपि किमस्य, किं पुनर्व्यस्तैः (ज)।

त्वपरसहायशालीत्यर्थः शिशुर्बालक आवृतः हन्त परिवेष्टितः। पदातिरथिहस्त्यारोहिभिर्मम सैन्यैः हन्तुमयमेको बालकः समावृत इत्येतन्महदनुचितमिति भावः।

अत्र करकन्दलीत्यत्र लुप्तोपमा, तथा चतुर्थपादे लवस्य परिवेष्टनरूपावरणक्रिया उपमायाः साधिका रूपकस्य च बाधिकेति लुप्तोपमैव, अनयोः संसृष्टिः, वृत्त्यनुप्रासश्च नन्वस्मान् प्रति करुणाकरणाय अलङ्कारनिपुणा मनस्विनः कारणममीषामनुसन्दधीरन्, इतरथा प्रतिपदमशेषहेतुमनिर्देशवशेन नितान्तमुपचीयमानकलेवरा किल टीकेयं नवीनानां विशालविरागमावहेतेति समुपेक्षितम्।

"हि हेताववधारणे।" "किङ्किणी क्षुद्रघण्टिका।" "मूढाल्पापटु निर्भाग्या मन्दाः स्युः।" इति चामरः। "कन्दली। लम्बः।" इति शब्दकल्पद्रुमः। "घनान्धकारे वृष्टौ च दुर्द्दिनं कवयो विदु"रिति साम्बः। एतेन "दुर्द्दिनं लक्षणया वर्षण"मिति यत् केनचिदुक्तं तत् परिहार्य्यम्।

झणझणेत्यव्यक्तानुकरणशब्दात् "अव्यक्तानुकरणा"दित्यादिना डाच्, "डाज् लोहितादिभ्यश्च" इत्यादिः, ततः कर्त्तरि क्तः।

पृथ्वी वृत्तम्—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु"रिति लक्षणात् ॥५॥

(ज) सुमन्त्र इति। एभिरस्मत्सैनिकैः समस्तैरपि मिलितैरपि एकयोगेन सकलैर्युध्यमानैरपि सद्भिरित्यर्थः, अस्य बालकस्य किं क्रियतामिति शेषः पुनः किन्तु व्यस्तैः एकैकशो युद्धप्रवृत्तैः किं क्रियतामिति शेषः। महायोद्धायं बालक इति भावः।

अत्र "एभिः समस्तैरपि किमस्ये"त्यनेनैव वक्तव्यार्थनिर्वाहेऽपि पुनः किं पुनर्व्यस्तै-

কদলীবৃক্ষের ন্যায় বিশাল হস্তে ধৃত ভয়ঙ্কর অস্ত্রসমূহ চক্‌মক্ করিতেছে, স্বর্ণের কিঙ্কিণীগুলি শব্দ করিতেছে, রথগুলি 'ঝণ ঝণ' শব্দ করিতেছে এবং এই সৈন্যগণের মধ্যে মেঘের ন্যায় প্রচুর মদজলবর্ষী হস্তীও রহিয়াছে; এই অবস্থায় সকল সৈন্য সম্মিলিত হইয়া, সমরাঙ্গনে এই একটীমাত্র শিশুকে পরিবেষ্টন করিয়াছে ॥৫॥

चन्द्र। आर्य्य! त्वर्य्यतामनेन हि महानाश्रितजन-प्रमाथोऽस्माकमारब्धः। तथाहि—(झ)

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवः (१)
तृप्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा इव ॥६॥

---

रित्युक्त्या "सहसा विदधीत न क्रिया"मित्यादिवदर्थगतपुनरुक्तत्वदोषः, 'किं पुनर्व्यस्तै'-रित्येतत्परिहारेण तत्समाधानं विधेयम्।

(झ) चन्द्रेति। त्वर्य्यतां सत्वरेण भूयतां त्वयेति शेषः, शीघ्रं रथः प्रेर्य्यतामित्यर्थः। हि यस्मात्, आश्रितजनानाम् अस्मदुपजीविसैन्यानां प्रमाथो विमर्द्दनं विनाश इति यावत्। तथाहि तमेवार्थं जानीहीत्यर्थः।

आगुञ्जदिति। वीर एष शूरो बालकः, आगुञ्जन्तः लवस्य ज्याघोषश्रवणेन भयवशात् गम्भीरध्वनिं कुर्व्वन्तः ये गिरिकुञ्जकुञ्जराः पार्व्वत्यलतादिसमाच्छादितस्थानवर्त्तिनो हस्तिनः तेषां या घटा समूहस्तस्या विस्तीर्णः बाहुल्येनोत्पादितः कर्णज्वरः नितान्तदीर्घकर्कशतया श्रुतिपीड़ा तेन तं तथोक्तम्, यस्य दूरगामिनो ज्याघोषस्य श्रवणाद्भीता वन्यहस्तिनो व्याकुलतया गर्ज्जन्ति कर्णपीड़ाञ्चानुभवन्ति तमित्यर्थः, तथा अमन्दा अनल्पा बहुला इत्यर्थः ये दुन्दुभिरवाः अस्मत्पक्षीयवाद्यविशेषध्वनयस्तैः आध्मातं परिवर्द्धितं ज्याघोषम् अविरत-बाणवर्षणेन मुहुर्मुहुः सञ्चालनात् मौर्व्वीशब्दम् उज्जृम्भयन् उत्पादयन् सन्, वेल्लतां भूमौ स्पन्दमानानां भैरवाणां भयानकानां रुण्डानां कबन्धानां मस्तकरहितशरीराणां

(অ) সুমন্ত্র। বৎস! ইহারা সম্মিলিত হইয়াই বা ইহার কি করিবে; কিন্তু পৃথক্ পৃথক্ থাকিলে আর বলিবার কি আছে।

(ঝ) চন্দ্রকেতু। আর্য্য! ত্বরা করুন; কারণ, এ আমার আশ্রিত-জনের গুরুতর বিধ্বংস আরম্ভ করিয়াছে। দেখুন—

---

(१) भुवमिति पाठान्तरम्।

सुमन्त्रः। (स्वगतम्) कथमीदृशेन सह वत्सस्य चन्द्रकेतो-

मुण्डनिकरैः मस्तकसमूहैः करणैः भुवः समरभूभागात् तृप्यतः, प्रभूतभोजनेन सन्तुष्यतः कालस्य यमस्य यत् करालं भयङ्करं वक्त्रं मुखं तस्य विघसैः भुक्तावशिष्टद्रव्यैः व्याकीर्य्यमाणाः समाच्छाद्यमाना इव विधत्ते करोति। जगद्ग्रासे प्रवृत्तस्य प्रभूतभोजनेन सन्तुष्टस्य यमस्य व्यात्ताननाद्विगलितैः पतत्सैन्यमस्तकैः समरभूमिरियं प्रायेण समाच्छन्नेति निष्कर्षः। अतएव सत्वरं गत्वा द्वन्द्वयुद्धेन तन्निवारणं मया करणीयमिति भावः।

अत्र पार्व्वत्यगजानां तादृशकर्णज्वरोत्पत्तेरसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, तथा भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा चालङ्कारः, तयोश्च मिथो नैरपेक्ष्यात् संसृष्टिः। तथा प्रथमचतुर्थचरणयोर्वृत्त्यनुप्रासः, एवं स्तीर्णकर्ण:, मन्ददुन्दु, कण्डमुण्डेति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासश्च; अनयोरपि संसृष्टिः। गुञ्जनस्य भ्रमरादेः 'गुन् गुन्' शब्द एव ख्यातत्वाद्दत्र तु हस्तिध्वनौ तत्प्रयोगात् ख्यातिविरुद्धतादोषः, स च 'उद्गर्ज्जद्गिरिकुञ्जे'त्यादि पाठेन समाधेयः।

"गजानां घटना घटा।" "विघसो यज्ञशेषभोजनशेषयो"रिति चामरः। "कबन्धः कथ्यते दण्ड" इति हलायुधः।

विघस इति उपसर्गेऽदेरल् "घञ्लोर्घ स्त्र," इति घस्लादेशः।

शार्दूलविक्रीड़ितं वृत्तम् ॥६॥

এই বালক, জ্যাশব্দ উৎপাদন করিতেছে; আমাদের পক্ষের বিশাল দুন্দুভিধ্বনি, ঐ জ্যাশব্দকে বর্দ্ধিত করিতেছে; লতাপ্রভৃতিদ্বারা পর্ব্বতের আবৃত স্থানে যে সকল হস্তী ভয়বশতঃ রব করিতেছে; ঐ জ্যাশব্দ তাহাদেরও কর্ণপীড়া জন্মাইতেছে; এদিকে ঐ বীর বালক বহু সৈন্যের মস্তকচ্ছেদ করিয়াছে, সেই দেহগুলি স্পন্দিত হইতেছে এবং মস্তকগুলিতে ভূতল ব্যাপ্ত হইয়াছে; তাহাতে বোধ হইতেছে, যম প্রচুর আহার করিয়া সন্তুষ্ট হইয়াছেন, তাঁহারই ভয়ঙ্কর মুখ হইতে নিপতিত ভুক্তাবশিষ্ট দ্রব্যদ্বারাই যেন সমরাঙ্গন পরিব্যাপ্ত হইতেছে ॥৬॥

द्वन्द्वसम्प्रहारमनुजानीयाम् (१)। (विचिन्त्य) अथवा इक्ष्वाकु-गृहवृद्धाः खलु वयम्, प्रत्युपस्थिते (२) च का गतिः (ञ)।

चन्द्र। (सविस्मयलज्जासम्भ्रमम्) धिक् प्रतिनिवृत्तानि सर्वतः सैन्यानि मम (ट)।

---

(ञ) सुमन्त्र इति। ईदृशेन अद्भुतकर्मणा महावीरेण लवेन सहेत्यर्थः। द्वन्द्वस्य युग्मस्य सम्प्रहारं युद्धम् एकाकिनश्चन्द्रकेतोर्युद्धमिति निष्कर्षः, अनुजानीयाम् अनुमतिं दद्याम्। असंख्यसैन्यसंहारकारिणा अनेन सममेकाकिनश्चन्द्रकेतोर्युद्धे यदि अनिष्टपातः स्यादिति भावः। विचिन्त्य विविच्य। इक्ष्वाकुगृहे इक्ष्वाकुवंशोत्पन्नदशरथगृहे वृद्धाः मन्त्रित्वे सारथ्ये च यौवने नियुक्ताः सन्तः इदानीं वार्द्धक्यमुपगताः अतएव एतेषां युद्धे अनिवर्त्तित्वरूपमाचारमवगच्छन्तोऽपि कथं निवारयाम इति भावः। विशेषतश्चेति चकारार्थः, प्रत्युपस्थिते आपतिते समरे इति शेषः, का गतिः क उपायः समरं विनेत्यर्थः। इदानीमनयोरनिवार्य्य एव जातः समरः, तन्मया अनुमतिरेव दातव्येति भावः।

वयमिति "वास्मदस्त्वे"ति बहुवचनम्।

(ट) चन्द्रेति। लवस्य महाविक्रमदर्शनात् विस्मयः, स्वकीयसैन्यानां पराजयाव-लोकनात् लज्जा, तेषां रक्षणाय सम्भ्रमस्त्वरा, तैः सहेति तथोक्तम्। सर्वतः सर्वासु दिक्षु, सैन्यानि बलानि प्रतिनिवृत्तानि पराजयेन पराङ्मुखानि, धिक् निन्दामीत्यर्थः; सम्मुखसंग्रामे क्षत्रियाणां पृष्ठप्रदर्शनस्य नितान्तनिन्दनीयत्वादिति भावः।

"वरूथिनी बलं सैन्य"मित्यमरः।

(ঞ) সুমন্ত্র। (স্বগত) এইরূপ বীরের সহিত দ্বন্দ্বযুদ্ধ করিবার জন্য, বৎস চন্দ্রকেতুকে কি করিয়া অনুমতি দি? (চিন্তা করিয়া) অথবা আমরা ইক্ষ্বাকুগৃহের প্রাচীন; সুতরাং যুদ্ধ উপস্থিত হইলে আর উপায় কি?

(ট) চন্দ্রকেতু। (বিস্ময়, লজ্জা ও ব্যস্ততার সহিত) ধিক্; আমার সৈন্যগণ সকল দিকেই পরাঙ্মুখ হইল।

---

(१) अनुजानीम इति पाठभेदः। (२) रणे इत्यधिकः पाठः क्वचित्।

सुमन्त्रः। (रथवेगमभिनीय) आयुष्मन्! एष वाग्विषयीभूतस्ते स वीरः (ठ)।

चन्द्र। (विस्मृतिमभिनीय) आर्य्य! किमस्य नामधेय-(१) माख्यातमाख्यायकैः? (ड)

सुमन्त्रः। वत्स। लव इति (ढ)।

चन्द्र। भो भोः लव! महाबाहो! किमेभिस्तव सैनिकैः।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥७॥

---

(ठ) सुमन्त्र इति। रथवेगमभिनीय रथं वेगेन चालयित्वेत्यर्थः। एष दृश्यमानः, सः अस्मत्सैन्यप्रमाथी वीरः ते तव वाग्विषयीभूतः रथचालनेन सान्निध्यादालापगोचरो जातः। पूर्वं दूरवर्त्तित्वात् वाक्यं श्रावयितुमशक्य आसीत् इदानीन्तु सन्निहित इति यथेष्टमालपितुमर्हसीति भावः।

(ड) चन्द्रेति। विस्मृतिं विस्मरणसूचकमूर्द्ध्वदृष्टिपातादिकम्। आख्यायकैः युद्धवार्त्ताहरैः, अस्य महावीरशिरोमणेः, किं नामधेयं नाम आख्यातं कथितम्, स्मरसि चेत् तद्ब्रूहि, अन्यथा आलापे बलवदसुविधा स्यादिति भावः।

(ढ) सुमन्त्र इति। लव इति लव इत्यानुपूर्वीकमस्य नामधेयमित्यर्थः।

भो भो इति। महान्तौ वीर्य्यवत्तया विशालौ बाहू यस्य तत्सम्बोधनम्, भो भो लव इति सम्भ्रमे द्विरुक्तिः। एभिरस्मदीयैः सैनिकैः सैन्यैः तव किं प्रयोजनमित्यर्थः तव असमानतया एभिः सह युद्धं न करणीयमिति भावः। एषः अहमस्मि तव युद्धयोग्य

(ঠ) সুমন্ত্র। (রথের বেগ অভিনয় করিয়া) আয়ুষ্মন্! সেই বীর এই তোমার আলাপের বিষয় হইয়াছে (নিকটবর্ত্তী হইয়াছে।)

(ড) চন্দ্রকেতু। (বিস্মরণ অভিনয় করিয়া) আর্য্য! যুদ্ধের বার্ত্তাবাহীরা ইহার কি নামটা বলিয়াছিল?

(ঢ) সুমন্ত্র। বৎস! 'লব' এই নাম।

---

(१) किं तन्नामधेयमिति पाठान्तरम्।

सुमन्त्रः । कुमार ! पश्य पश्य—(ग)

व्यपवर्त्तत एष बालवीरः पृतनानिर्म्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवादिभावलीनामवमर्द्दादिव दृप्तसिंहशावः ॥८॥

इति भावः, अतएव मामेव एहि शीघ्रमागच्छ । ननु तेनापि किं भविष्यतीत्याह, तेजः त्वदीयः पराक्रमः क्षुद्रवह्निश्च तेजसि मदीये पराक्रमे वह्निपुञ्जे च शाम्यतु लयं गच्छतु । एतान् सामान्यसैनिकानवमर्द्दयन्नपि न खलु ममान्तिके पराक्रमितुमर्हसीति भावः ।

अत्र वह्निपराक्रमयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायमूला अतिशयोक्तिरलङ्कारः ।

"तेजस् ।—पराक्रमः, अग्नि"रिति शब्दकल्पद्रुमः ॥७॥

(ग) सुमन्त्र इति । पश्य पश्येति विस्मये द्विरुक्तिः ।

व्यपेति । एष दृश्यमानः बालश्चासौ वीरश्चेति बालवीरः शिशुशूरः त्वया उपहूतः युद्धकरणाय आहूतः सन् दृप्तः बलदर्पान्वितः सिंहशावः केशरिशावकः स्तनयित्नोर्मेघस्य रवात् गर्जितं श्रुत्वेत्यर्थः इभावलीनां गजश्रेणीनाम् अवमर्द्दात् मथनात् विनाशादिव पृतनाया अस्मत्सेनाया निर्म्मथनात् विदलनात् व्यपवर्त्तते निवर्त्तते ; केशरिशावको यथा मेघनिनादमाकर्ण्य गर्जार्थो बलवत्तमपरं जन्तुं मन्यमानो गजयूथविमर्द्दनान्निवर्त्तमानो मेघाभिमुखं धावति, तथायमपि बालकः स्पर्द्धया त्वया समाहूतः सन् सेनाविनाशमपहाय तवाभिमुखमागच्छतीति निष्कर्षः । अनेन तस्य कर्म्मणा विस्मितोऽस्मीति भावः ।

अत्र उपमालङ्कारः ।

स्तनयित्नुरवादिति "यपोऽधिकरणकर्म्मणोरप्रयोगिणि" इति पञ्चमी, ल्यब्लोपे पञ्चमीत्यपरे ।

मालभारिणी वृत्तम्—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीय"-मिति लक्षणात् । अस्यैव औपच्छन्दसिकमिति नामान्तरम् ॥८॥

---

চন্দ্রকেতু । ওহে ওহে মহাবাহু লব ! এই সকল সৈন্যদ্বারা তোমার কি প্রয়োজন ? এই আমি রহিয়াছি, আমার নিকটে আইস ; তেজ তেজে লীন হউক ॥৭॥

(গ) সুমন্ত্র । কুমার ! দেখ দেখ—

(ततः प्रविशति त्वरितोद्धतक्रमो लवः।) (त)

लवः। साधु, राजपुत्र! साधु, सत्यमैक्ष्वाकः खल्वसि, तदयं परागत एवास्मि (थ)।

(नेपथ्ये महान् कलकलः।) (द)

लवः। (सावेगं परावृत्य) कथमिदानीं भग्ना अपि प्रतिनिवृत्य युद्धाभिसारिणः पर्य्यवष्टभ्य निघ्नन्ति मां चमूपतयः, धिग्जाल्मान् (ध)।

(त) तत इति। त्वरितो द्रुतः, उद्धतः सगर्व्वश्च, क्रमः पादक्षेपो यस्य सः।

(थ) लव इति। साधु भद्रम्, व्यवहरसीत्यध्याहर्त्तव्यक्रियाविशेषणम्। हर्षे साधुशब्दस्य द्विरुक्तिः, वीरस्य वीरान्तरलाभे हर्षः स्वाभाविक एवेति बोध्यम्। खलु निश्चये, सत्यं खलु यथार्थमेव, ऐक्ष्वाक इक्ष्वाकुवंशोत्पन्नः असि, इक्ष्वाकुवंशोद्भवानां पीड़ितपरित्राणस्य पराक्रमप्रकाशस्य च चिरप्रथितत्वादिति भावः। तत्तस्मात् त्वादृशवीरलाभात् अयम् अस्मि अयमहम्, परागत एव त्वत्समीपे उपस्थित एव। स्वयोगव्यवस्थापने एवशब्दः। अतएव यथेष्टं व्यवहर्त्तुमर्हसीति भावः।

(द) नेपथ्य इति। कलकलः सैन्यानां कोलाहलः।

(ध) लव इति। आवेगेन उत्साहोत्तेजनया सहेति सावेगम्, परावृत्य पुनः

---

দর্পিত সিংহশাবক যেমন মেঘের গর্জ্জন শুনিয়া, হস্তিসমূহের বিনাশ হইতে নিবৃত্ত হয়, সেইরূপ এই বীর বালক, তোমাকর্ত্তৃক আহূত হইয়া, সৈন্য বিনাশ হইতে নিবৃত্ত হইয়াছে ॥৮॥

(ত) (তদনন্তর সত্বর ও দর্পিতভাবে পাদক্ষেপ করিয়া লবের প্রবেশ।)

(থ) লব। ভাল, রাজপুত্র! ভাল; সত্যই আপনি ইক্ষ্বাকুবংশীয়; তা এই আমি ফিরিয়া আসিয়াছিই।

(দ) (নেপথ্যে বৃহৎ কোলাহল।)

अयं शैलाघातक्षुभितवडवावक्त्रहुतभुक्
प्रचण्डक्रोधार्च्चिर्निचयकवलत्वं व्रजतु मे।
समन्तादुत्सर्पन् घनतुमुलसेनाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥८॥

(इति परिक्रामति।) (न)

सैन्यानामभिमुखीभूय। भग्ना अपि मया पराजिताः सन्तः पृष्ठप्रदर्शिनोऽपि प्रतिनिवृत्य ममाभिमुखीभूय युद्धमभिसर्त्तुं शीलं येषां ते युद्धाभिसारिणः पुनरपि युद्धोद्यताः सन्तः पर्य्यवष्टभ्य परितो दर्पेणावस्थाय चमूपतयः सेनापतयः माम् इदानीं निघ्नन्ति प्रहरन्ति; अतएव जाल्मान् अपसदान् नीचानिति यावत् धिक् निन्दामि, एतान् चमूपतीनिति शेषः। पराजयात् परमपि पुनर्युद्धानुसरणे निर्लज्जताप्रकाशेन नीचत्वस्यैवावधारणादिति भावः।

"निहीनोऽपसदो जाल्मः" इत्यमरः।

अयमिति। समन्तात् सकलासु दिक्षु, उत्सर्पन् उत्तिष्ठन्, अयं श्रूयमाणः घनो निरन्तरः, तुमुलः सङ्कुलः विशृङ्खलभावेनोत्पन्न इत्यर्थः सेनाकलकलः सैन्यकोलाहलः, प्रलयपवनेन युगक्षयकालीनवायुना आस्फालित आलोड़ितः पयोराशेः समुद्रस्य ओघो जलसमूह इव मे मम शैलानां समुद्रान्तर्निमग्नपर्वतानाम् आघातेन सङ्घर्षेण क्षुभितः उद्वेलितः यो वडवावक्त्रहुतभुक् तुरङ्गकान्तामुखहव्यवाहः अश्वीमुखनिर्गतवह्निः वाड़वानल इत्यर्थः स इव प्रचण्डः दारुणो यः क्रोधः कोपः स एव अर्च्चिषां निचय अग्निज्वाला-समूहस्तस्य कवलत्वं ग्रासत्वं व्रजतु गच्छतु। पर्वतसङ्घर्षणेन विसर्पिशिखाशाली वाड़वानलो यथा समुद्वेलितं समुद्रजलसमूहं शोषणेन शमयति तथा मम कोपोऽपि समुत्पन्नमिमं सैन्यकोलाहलं विमर्द्दनेन उपशमयिष्यतीति सरलार्थः।

---

(ধ) লব। (আবেগের সহিত ফিরিয়া) কি সেনাপতিগণ এখনই পরাজিত হইয়াও আবার ফিরিয়া, যুদ্ধের জন্য উদ্যত হইয়া, সকল দিকেই দর্পের সহিত দাঁড়াইয়া, আমাকে প্রহার করিতেছে! তা নীচপ্রকৃতি-দিগকে ধিক্!

चन्द्र। भो भोः कुमार!

अत्यद्भुतादसि गुणातिशयात् प्रियो मे
तस्मात् सखा त्वमसि यन्मम तत्तवैव।
तत् किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः॥१०॥

अत्र दीपमालङ्कारः, क्रोधार्च्चिर्निचय इति रूपकस्य अनयोरङ्गाङ्गिभावेन सङ्करः। तेन च इदानीमेव सर्वानेतान् विमर्द्दयामीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

पुरा किल भगवानौर्वनामा मुनिरग्नौ ऊरुं निवेश्य कुशेन ममन्थ, ततस्तस्मादुत्पन्नो वह्निर्जगन्ति दग्धुमुपचक्रमे, अथ भगवान् ब्रह्मा समागत्य समुद्रान्तर्गतवड़वामुखे तस्य वसतिं समुद्रजलस्य च भक्ष्यत्वं निर्द्दिदेश इति पौराणिकी वार्त्ता। तथा च मत्स्य-पुराणम्—

"वड़वामुखेऽस्य वसतिः समुद्रे वै भविष्यति।

* ० *

एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः॥"

शिखरिणी वृत्तम्॥९॥

(न) इतीति। परिक्रामति सेनामाक्रमितुं पुनरितस्ततः पादक्षेपं करोति।

अत्यद्भुतादिति। अत्यद्भुतात् एकाकिना महादुर्द्धर्षसेनाविमर्द्दनेन नितान्तविस्मया-वहात् गुणानां शौर्य्यादीनाम् अतिशयादतिरेकात् त्वं मे मम प्रियः सखा दयितं मित्रमसि, अखिलेन त्वामहमङ्गीकरोमीत्यर्थः, तस्माद्धेतोः यत् वस्तु मम तदेव तव, आवयोरुभयो-

প্রলয়কালীন বায়ুবেগে উদ্বেলিত সমুদ্রের জলপ্রবাহ যেমন পর্ব্বতসংঘর্ষে ক্ষুভিত বাড়বানলের কবলতা প্রাপ্ত হয়, সেইরূপ চতুর্দ্দিক্ হইতে ঘন ঘন উৎপন্ন তুমুল সৈন্যকোলাহল, আমার প্রচণ্ড ক্রোধানলের কবলতা প্রাপ্ত হউক॥৯॥

(ন) (এই বলিয়া পাদক্ষেপ করিতে লাগিল।)

চন্দ্রকেতু। ওহে ওহে কুমার!

लवः। (सहर्षसम्भ्रमं परावृत्य) अहो! महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुलकुमारस्य (१) तत्-किमेभिः, एनमेव तावत् सम्भावयामि (प)।

रैव परस्परमभिन्नहृदयत्वे नाभेदादिति भावः। तत्तस्मात् किं कथं निजे स्वकीये परिजने परिवाररूपे अस्मिन् सैन्यवर्गे कदनं विमर्द्दनं करोषि स्वजनपीड़नं नितान्तमनुचित-मिति भावः। ननु सेनाविमर्द्दनं विना मम दर्पकण्डूया न निवर्त्तत इत्याह नन्विति। ननु सम्बोधने। एष चन्द्रकेतुः तव दर्पस्य वीरत्वाभिमानस्य निकषः निकषपाषाणः परीक्षास्थानमित्यर्थः। नितान्तसामान्यतया सैन्येषु न खलु तव दर्पपरीक्षा भवेत् किन्तु अहं ते दर्पं परीक्ष्य तं चूर्णयामीति भावः।

अत्र चन्द्रकेतौ निकषत्वारोपस्य प्रकृतदर्पपरीक्षोपयोगितया परिणामालङ्कारः। तदित्यनेनान्वितस्य एवशब्दस्य तदित्यतः परमेव पाठो युक्तः, किन्तु तवशब्दात् परं पाठेन अक्रमतादोषः, स च 'यन्मम ते तदेव' इति पाठेन समाधेयः।

वसन्ततिलका वृत्तम् ॥१०॥

(प) लव इति। वीरस्य समानवीरान्तरलाभे हर्षः स्वाभाविकः, युद्धकरणाय सम्भ्रमस्त्वरा, ताभ्यां सहेति सहर्षसम्भ्रमं परावृत्य चन्द्रकेतोरभिमुखीभूय। महान् अनुभावः प्रभावो यस्य तस्य विकर्त्तनकुलकुमारस्य सूर्य्यवंशीयबालकस्य प्रसन्ना सखित्व-स्थापनोपन्यासेन स्नेहव्यञ्जिका कर्कशा वीरत्वगर्वेण परुषा वीरवचनप्रयुक्तिः 'नन्वेष दर्पनिकषः' इत्यादिवीरजनोचितवाक्यव्यवहारः अहो विस्मयावहा इत्यर्थः, स्वजन-विमर्द्दनदर्शनेऽपि सखित्वस्थापनाभिप्रायप्रकाशात् ईदृशदारुणकर्म्मदर्शनेऽपि निर्भय-हृदयत्वाच्चेति भावः। तत्तस्मात् एभिः क्षुद्रसैनिकैः किं मम प्रयोजनमित्यर्थः, एनं

---

তুমি, অত্যন্ত আশ্চর্য্য গুণাধিক্যবশতঃ আমার প্রীতিকর হইয়াছ; অতএব তুমি আমার সখা হইয়াছ; সুতরাং যাহা আমার তাহাই তোমার। তবে নিজের পরিজনের প্রতি উৎপীড়ন করিতেছ কেন? ওহে! তোমার দর্পের পরীক্ষার স্থান এই চন্দ্রকেতু ॥১০॥

---

(१) विकर्त्तनकुमारस्य इति क्वचित् पाठः।

(पुनर्नेपथ्ये कलकलः।)

लवः। (सक्रोधनिर्वेदम्) आः! कदर्थितोऽहमेभिर्वीरं वारं (१) वीरसंवादविघ्नकारिभिः। (तदभिमुखं परिक्रामति) (फ)।

---

चन्द्रकेतुमेव सम्भावयामि युद्धकरणेन सम्मानयामि। पण्डितस्य शास्त्रालापेनेव योद्धु-र्युद्धेनैव सम्माननं स्यादिति भावः।

"अनुभावः प्रभावेऽपि" इत्यमरः।

प्रसन्नकर्कशेति शेषपदस्य विशेष्यत्वविवक्षया कर्म्मधारयः।

(फ) लव इति। क्रोधेन कोपेन निर्वेदेन स्वावमाननया च सहेति सक्रोध-निर्वेदम्। एतावतापि कालेन एतान् सामान्यसैनिकान् प्रहारेण सर्वथैव अकर्म्मण्यान् कर्त्तुं न शक्तोऽस्मीति गत्वा महावीरस्य लवस्य आत्मनः शक्त्यल्पत्वप्रतीतिरवश्यं सञ्जातः एवेति बोध्यम्। "तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना" इति साहित्यदर्पणः। आ इति कोपसूचकमव्ययम्। वीरस्य चन्द्रकेतोर्यः संवादः युद्धाय सम्मेलनं युद्धकरणार्थं चन्द्रकेतुना सह सम्मेलनमित्यर्थः तस्य विघ्नकारिभिः मुहुर्मुहुर्वाधाप्रदानेन अन्तराय-विधायिभिः एभिः सामान्यसैनिकैरहं वारं वारं पुनः पुनः, कुत्सितोऽर्थः क्षुद्रसैनिकैः सह संग्रामरूपो विषयो यस्य स कदर्थः, स कृत इति कदर्थितः इनन्तात् कदर्थशब्दात् कर्म्मणि क्तः। विड़म्बितोऽस्मीत्यर्थः। तदेतेषां समुचितप्रतिविधानं मयेदानीं विधेय-मिति भावः। तदभिमुखं सैन्यान् प्रतीत्यर्थः।

---

(প) লব। (আনন্দ ও ব্যস্ততার সহিত ফিরিয়া) ওহে! মহাপ্রভাব-শালী সূর্য্যবংশীয় কুমারের বীরবাক্য প্রয়োগ, প্রসন্নও বটে, কর্কশও বটে। তা, ইহাদের দ্বারা কি হইবে, ইহাকেই সম্মানিত করি।

(নেপথ্যে পুনরায় কোলাহল।)

(ফ) লব। (ক্রোধ ও আত্মাবজ্ঞার সহিত) আঃ! বীরের সহিত সম্মিলিত হইবার বিঘ্নকারী এই সকল সৈন্যদ্বারা আমি বার বার বিড়ম্বিত হইতেছি। (সৈন্যগণের অভিমুখে পাদক্ষেপ করিতে লাগিল।)

---

(१) पुस्तकान्तरे वारं वारमिति नास्ति।

चन्द्र। आर्य्य! दृश्यतामितद्द्रष्टव्यम् (व)।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥११॥

(व) चन्द्रेति। द्रष्टव्यं दर्शनीचितम् एतत् लवस्याचरणं दृश्यताम्। अतीव-विस्मयावहं लवस्यैतदाचरणमिति भावः।

तद्विस्मयावहत्वं प्रतिपादयति दर्पेणेति। चन्द्रकेतुः कीदृशी वीर इत्यवबोधाय कौतुकम् औत्सुक्यमस्यास्तीति कौतुकवान्, तेन दर्पेण वीरत्वगर्वेण हेतुना मयि बद्धलक्ष्यः कृतदृष्टिपातः, तथा पश्चात् पृष्ठभागे बलैरस्मदीयसैन्यैः, अनुसृतः अनुधावितः समाक्रान्त इत्यर्थः उदीर्णं बाणक्षेपाय उत्तोलितं धनुर्येन स उदीर्णधन्वा अयं लवः द्वेधासमुद्धतेन द्विप्रकारेणोत्थितेन मरुता वायुना कारणेन तरलस्य चलितस्य मघवत इन्द्रस्येदमिति माघवतं चापं धनुर्धरतीति माघवतचापधरस्तस्य मेघस्य लक्ष्मीं शोभां धत्ते वहति। पूर्वदिगुत्थितवायुना पश्चिमायां दिशि एकवारं चालितः द्वितीयवारश्च पश्चिमदिगुत्थित-वायुना पूर्वस्यां दिशि चालितः इन्द्रधनुःशाली मेघो यादृशीं शोभां धत्ते नवजलधर-श्यामसुन्दरवपुरयं लवोऽपि सम्मुखवर्त्तिनं मां प्रत्येकवारं धनुरुत्तोलयन् पुनः पृष्ठदेशादा-क्रमणकारिणः सैनिकान् प्रति धनुरुत्तोलयन् तादृशीं शोभां धत्त इति सरलार्थः। अतएव आश्चर्य्यमेवैतदस्याचरणमिति भावः।

अत्र अन्यस्य लक्ष्मीं कथमन्यो धत्त इति वस्तुसम्बन्धोऽसम्भवन् मेघस्य लक्ष्मीमिव, लक्ष्मीमिति सादृश्याक्षेपान्निदर्शनालङ्कारः तथा मेघमाघेति व्यञ्जनानां सकृदनेकधा साम्यात् छेकानुप्रासस्य, अनयोः संसृष्टिः।

दर्पकौतुकयोरेकत्वात्मवृत्तिधर्म्मत्वात् दर्पस्य सामानाधिकरण्यसम्बन्धेन कौतुकवत्त्वं बोध्यम्। वसन्ततिलका वृत्तम् ॥११॥

---

(व) চন্দ্রকেতু। আর্য্য! এই দেখিবার বিষয়টী দেখুন।

দর্প ও কৌতুকবশতঃ আমার প্রতি লক্ষ্য. করিয়াছে; আবার পশ্চাৎ

सुमन्त्रः। कुमार एवैनं द्रष्टुमपि जानाति, वयन्तु केवलं परवन्तो विस्मयेन (भ)।

चन्द्र। भो भो राजानः!

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन् कवचनिचितैर्मेध्यचर्म्मोत्तरीये।
कालज्येष्ठैरभिनववयः काम्यकाये भवद्भि-
र्योऽयं बद्धा युधि परिकरस्तेन वो धिग्धिगस्मान् ॥१२॥

(भ) सुमन्त्र इति। अपिशब्दः सम्भावनायाम्। कुमारो भवानेव न तु मादृश इत्येवशब्दार्थः एनं लवं द्रष्टुं जानाति दृष्ट्वा यथार्थतया परिचेतुमर्हतीत्यर्थः अपि इत्यहं सम्भावयामीत्यर्थः। वीरो वीरेणैव परिचेतुं शक्यते न तु मादृशदुर्बलजनेनेति भावः। तु किन्तु वयम् अहमित्यर्थः। "वाऽस्मदश्चे"ति बहुवचनम्, विस्मयेन अस्याद्भुत-कर्म्मदर्शनेन परवन्तः पराधीनाः जड़भावमापन्ना जाता इत्यर्थः। अस्यैतावदद्भुतकार्य्यदर्शनेन मम चैतावान् विस्मयो जातः येन 'अयं कीदृश' इति निश्चेतुमपि न शक्नोमीति भावः।

संख्येति। संख्यामतीता इति संख्यातीतास्तैरसंख्यैः, द्विरदा गजाः, तुरगा घोटकाः स्यन्दना रथा इति द्विरदतुरगस्यन्दनं तस्मिन् तिष्ठन्तीति तैस्तथोक्तैः, कवच-निचितैः वर्म्मावृतगात्रैः कालज्येष्ठैर्वयोवृद्धैः भवद्भिः, एकस्मिन् द्वितीयसहायरहिते पदातौ पादचारिणि भूतलस्थित इत्यर्थः मेध्यं पवित्रं चर्म्म मृगाजिनम् उत्तरीयं प्रावारो यस्य तस्मिन्, अभिनवेन किशोरत्वात् नव्येन वयसा काम्यः कमनीयः कोमल इति यावत्

---

দিক্ হইতে আমাদের সৈন্যগণ অনুসরণ করিতেছে বলিয়া ধনু উত্তোলন করিয়াছে; সুতরাং এই লব, দুইভাবে উত্থিত বায়ুকর্ত্তৃক সঞ্চালিত এবং ইন্দ্রধনুসমন্বিত মেঘের শোভা ধারণ করিতেছে ॥১১॥

(ভ) সুমন্ত্র। কুমারই (তুমিই) ইহাকে দেখিতে জানে; আমি কিন্তু কেবল বিস্ময়ে অবশ হইয়াছি।

চন্দ্রকেতু। ওহে ওহে রাজগণ!

लवः। (सक्षोभम्) (१) कथमनुकम्पते नाम। (विचिन्त्य) भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि। (इति ध्यानं नाटयति।) (म)

कायः शरीरं यस्य तस्मिन्, अत अस्मिन् दृश्यमाने लवे युधि युद्धे योऽयं परिकरः आरम्भो बद्धः कृतः तेन हेतुना वो युष्मान् धिक्, तथा अस्मान् मामपि धिक् निन्दामीत्यर्थः। भवादृशामन्यायसमरप्रवृत्तानां नेतृत्वात् तथा यूयमसंख्याः अयन्तु एकः यूयं हस्त्यश्वरथारोहणात् अक्लान्तदेहाः अयन्तु चरणाभ्यां सञ्चरणात् नितान्तक्लान्तदेहः यूयं दुर्भेद्यकवचावृतगात्रा एष तु मामान्यमृगचर्ममात्रावृतगात्रः, यूयं वयोवृद्धत्वेन पूर्णावयवतया चिरायापि श्रमसहाः असौ तु बालकत्वात् कोमलकलेवरतया सहसैव श्रमक्लान्त इति युष्माकमनेन सार्द्धं समरं कथमपि न सङ्गच्छत इति भावः।

अतएवात्र विषमालङ्कारः।

"परिकरः।—समारम्भः" इति शब्दकल्पद्रुमः। मन्दाक्रान्ता वृत्तम्॥१२॥

(म) लव इति। क्षोभेण चित्तचाञ्चल्येन ममासामर्थ्यं जानता चन्द्रकेतुनाहमवज्ञात इत्यवधारणात् मनोदुःखेन सह वर्त्तत इति सक्षोभम् नामात्र क्रोधसूचकम्। कथं केन हेतुना अनुकम्पते दयते मां प्रति दयां कुरुते चन्द्रकेतुरित्यर्थः। लोके दुर्बलं प्रत्येव दया दृश्यते किन्तु न खल्वहं दुर्बल इति भावः। विचिन्त्य विविच्य। भवतु मां प्रति दया वा क्रोधो वेति शेषः न तेन किञ्चिन्ममायाति याति वेति भावः। कालहरणप्रतिषेधाय एभिः सह युद्धेन अनर्थककालविलम्बनिवृत्तये। तावत् सैन्यानि सर्वाणि बलानि

আপনারা হস্তী, অশ্ব ও রথে স্থিত, অসংখ্য বর্ম্মে আবৃত দেহ এবং বয়সে জ্যেষ্ঠ ; আর এই যোদ্ধা পাদচারী, একাকী, পবিত্র কৃষ্ণসারচর্ম্মের উত্তরীয়ধারী এবং নূতন বয়স বলিয়া কমনীয় দেহ ; এই অবস্থায় আপনারা যে যুদ্ধে উদ্যম করিয়াছে, ইহাতে আপনাদিগকেও ধিক্, আমাকেও ধিক্॥১২॥

---

(१) सोन्माथमिति विभिन्नः पाठः।

सुमन्त्रः। तत्किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति (य)।

लवः। पश्याम्येनमधुना प्रगल्भम् (१) (र)।

सुमन्त्रः। (ससम्भ्रमम्) वत्स! मन्ये कुमारेणानेन जृम्भकास्त्रमामन्त्रितम् (ल)।

चन्द्र। अत्र कः सन्देहः [व]।

---

संस्तम्भयामि मोहवैवश्येन अकर्म्मण्यानि करोमि, तदा न तथाकालक्षेपं कर्त्तुं शक्नुयुरिति भावः। ध्यानं नाटयति ध्यानभावम् अभिनयति।

(य) सुमन्त्र इति। तत्तदा लवकर्त्तृकधिक्कारमात्र एवेत्यर्थः, किं कथम् अकस्मात् हठात् अस्मत्सैन्यानां घोषः कोलाहलः प्रशाम्यति विरमति।

(र) लव इति। प्रगल्भं धृष्टं साहङ्कारं भाषमाणमित्यर्थः, एनं चन्द्रकेतुम् अधुना पश्यामि अस्य कियत्परिमितं बलमस्तीति परीक्ष्य इत्यर्थः। जृम्भकास्त्रेण मोहापन्नतया सैन्यैः कालक्षेपकरणासम्भवात् अस्य परीक्षाया अयमिवावसर इति भावः।

(ल) सुमन्त्र इति। ससम्भ्रमं त्वरया सहितम्। आमन्त्रितं मन्त्रपाठद्वारा समाहूतं प्रयुक्तमित्यर्थः।

(व) चन्द्रेति। अत्र जृम्भकास्त्रप्रयोगविषये।

(ম) লব। (ক্ষোভের সহিত) ইনি যে দয়া করিতেছেন! (চিন্তা করিয়া) হউক, কালক্ষেপ না হওয়ার জন্য, জৃম্ভকাস্ত্রদ্বারা সকল সৈন্যকে স্তব্ধ করি। (এই বলিয়া ধ্যানের অভিনয় করিতে লাগিল।)

(য) সুমন্ত্র। তা, হঠাৎ আমাদের সৈন্যের কোলাহল বিরত হইল কেন?

(র) লব। ধৃষ্টতার সহিত এখন আমি ইহাকে দেখি।

(ল) সুমন্ত্র। (ব্যস্ততার সহিত) বৎস! আমি মনে করি যে, এই কুমার (লব) জৃম্ভকাস্ত্র আহ্বান করিয়াছে।

---

(१) सप्रगल्भमिति पाठान्तरम्।

व्यतिकर इह [१] भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतममितवीर्यं [२] जृम्भते जृम्भकास्त्रम् ॥१३॥

स्वयमपि जृम्भकास्त्रप्रयोगमेव समर्थयति व्यतिकर इति। भी भी भयानकः, तमसोऽन्धकारस्यायमिति तामसः, विद्युतस्तडितोऽयमिति वैद्युतश्च व्यतिकरः समवायः तमस्तेजसोर्गाढ़संयोग इत्यर्थः, इह सैन्यमध्ये प्रणिहितमपि किमर्थमिते निस्पन्दा नीरवाश्च जाता इति निश्चयाय सावधानतया निक्षिप्तमपि चक्षुः नयनम् आदौ ग्रस्तम् अन्धकारेणावृतं दृष्टिशक्तिशून्यीकृतमित्यर्थः अनन्तरं मुक्तं परित्यक्तं तमोरूपावरणात् बहिष्कृतम् उपस्थित-दृष्टिकमित्यर्थः कृत्वा हिनस्ति निपीड़यति। अथेति वाक्यान्तरारम्भे। एतत् सैन्यम् इदमस्मदीयं बलं लिखितमिव चित्रितमिव अस्पन्दमास्ते निश्चेष्टमवतिष्ठते अतएव अमितवीर्यं महाप्रभावं जृम्भकास्त्रं नियतं जृम्भते निश्चितं प्रादुर्भवति। अन्यथा सर्वेषामीदृशी दशा न स्यादिति भावः।

अत्र लिखितमिवेत्युपमा, तस्याश्च विच्छित्तिवशात् तत्कारणीभूतजृम्भकास्त्रप्रादुर्भाव-रूपसाध्यस्य कार्य्यीभूत-सैन्यनिस्पन्दत्व-चक्षुःपीड़ाकरत्वरूपसाधनेन ज्ञानादनुमानालङ्कारः, अनयोरङ्गाङ्गिभावेन सङ्करः, जृम्भजृम्भेति च्छेकानुप्रासश्च तेन संसृष्टिः।

"व्यतिकरः। व्यतिसङ्गः" इति शब्दकल्पद्रुमः। मालिनी वृत्तम् ॥१३॥

(ব) চন্দ্রকেতু। এ বিষয়ে সন্দেহ কি।

অন্ধকার ও বিদ্যুতের ভয়ঙ্কর সংমিশ্রণ এখানে আবির্ভূত হইয়াছে; মনোযোগের সহিত চক্ষু নিক্ষেপ করিলেও তাহা প্রথম আকর্ষণ করে; পরে ছাড়িয়া দেয় এবং উৎপীড়িত করে। এই সৈন্যগণ, চিত্রিতের ন্যায় নিষ্পন্দ হইয়াছে; সুতরাং নিশ্চয়ই অমিতপ্রভাব জৃম্ভকাস্ত্র আবির্ভূত হইয়াছে ॥১৩॥

(१) व्यतिकर इवेति पाठभेदः। (२) अजितवीर्य्यमिति पाठान्तरम्।

आश्चर्यमाश्चर्यम् [अ]।
पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाकीर्य्यते [१]
मीलन्मेघ-[२] तडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥१४॥

(अ) आश्चर्य्यमिति। आश्चर्य्यमाश्चर्य्यमित्यतिशये द्विरुक्तिः।

पातालोदरेति। पातालस्य स्वाभाविकान्धकारविशिष्टस्य रसातलस्य उदरे मध्ये यानि कुञ्जानि लतादिसमाच्छादितस्थानानि तत्र पुञ्जितानि राशीकृतानि यानि तमांसि अन्धकाराः तानीव श्यामानि अतीवकृष्णवर्णानि तैः। अन्धकाराणामतीव गाढ़त्वप्रतिपादनार्थं पातालोदरादिग्रहणम्। तथा उत्तप्तं वह्नितापादुष्णीभूतम् अतएव स्फुरत् दीप्यमानं यत् आरकूटं पित्तलं तस्य तत् कपिलं पिङ्गलवर्णं ज्योतिस्तेजः तद्वत् ज्वलन्ती प्रकाशमाना दीप्तिः प्रभा येषां तैः तथाभूतैः जृम्भकैः जृम्भकास्त्रैः, कल्पं ब्रह्मणो दिनं ब्रह्मणो दिनवर्त्ति सचराचरं जगदित्यर्थः आक्षिपन्ति उत्तोलनादिना संहरन्ति ये ते कल्पाक्षेपाः कर्म्मण्यण्, कठोरा दृढ़ाः, भैरवा भयङ्करा ये मरुतः मिलितोनपञ्चाशद्वायवः तैः तथोक्तैर्मरुद्भिः व्यस्तैः विन्ध्याद्रिगात्रात् निक्षिप्तैः मीलन्तः संयुज्यमाना मेघाः कृष्णवर्णवारिदा येषु ते, तथा तडिद्भिः तेषां मेघानां विद्युद्भिः कडाराणि पिङ्गलवर्णानि कुहराणि गुहा येषां ते, मीलन्मेघाश्च ते, तडित्कडारकुहराश्चेति तैः तथोक्तैः विन्ध्याद्रेः विन्ध्यपर्वतस्य कूटैः शृङ्गैरिव नभः गगनतलम् अवाकीर्य्यते आच्छन्नं क्रियते। अतीव भीषणानि जृम्भकास्त्राणीति भावः।

अत्र भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षालङ्कारः। तथा प्रथमपादे कुञ्जपुञ्जेति च्छेकानुप्रासः अन्यपादेषु तु वृत्त्यनुप्रास इत्यनयोः संसृष्टिः।

"प्रचण्डपवनो राजन्! ततो वर्षशतं पुनः।
संवर्त्तको नाम महान् ब्रह्माण्डं चालयिष्यति॥"

---

(१) अवाकीर्य्यते इति क्वचित् पाठः। (२) लीलाम्भोद इति पाठभेदः।

सुमन्त्रः। कुतः पुनरस्य जृम्भकाणामागमः स्यात् [१]? [ष]
चन्द्र। भगवतः प्राचेतसादिति मन्यामहे [स]।

---

इति पद्मपुराणादिवचनात् प्रलयकाले वायुना शैलशृङ्गादिनिक्षेपस्य वास्तविकत्वादत्रोपमालङ्कार इति केचित् प्रलपन्ति।

"रीतिः स्त्रियामारकूटः न स्त्रियाम्।" "कुहरं सुषिरं विवरं बिलम्।" "कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ"विति चामरः। "कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने" इति मेदिनी। शार्दूलविक्रीड़ितं वृत्तम्॥१४॥

(ष) सुमन्त्र इति। अप्रथमे पुनःशब्दः "पुनरप्रथमे भेदे" इत्यमरकोषात्। प्रथमं रामभद्रो विश्वामित्रात् प्राप्तः, पुनर्द्वितीयवारम् अस्य लवस्य कुतः कस्मात् जनात् जृम्भकाणामेषां जृम्भकास्त्राणाम् आगमः प्राप्तिः।

(स) चन्द्रेति। प्राचेतसात् वाल्मीकेः, अस्य जृम्भकाणामागम इत्यन्वयः।

---

(শ) আশ্চর্য্য আশ্চর্য্য !

প্রলয়কালে উত্তোলন ও সঞ্চালনপ্রভৃতিদ্বারা জগৎসংসারকে সংহার করিতে সমর্থ, বেগবান্ ও ভয়ঙ্কর এইরূপ বায়ুকর্ত্তৃক যাহা বিক্ষিপ্ত হয় এবং সংযুক্ত মেঘসমূহের বিদ্যুতে যাহার গুহাগুলি পিঙ্গলবর্ণ হইয়া যায় ; বিন্ধ্য-পর্ব্বতের সেই সকল শৃঙ্গের ন্যায় এই জৃম্ভকাস্ত্রগুলিকে দেখা যাইতেছে ; আর এই জৃম্ভকাস্ত্রগুলি, পাতালের অভ্যন্তরে লতাদিদ্বারা আবৃত স্থানে রাশীকৃত অন্ধকারের ন্যায় কৃষ্ণবর্ণ এবং অগ্নিদ্বারা উত্তপ্ত ও উজ্জ্বল পিত্তলের ন্যায় পিঙ্গলবর্ণ তেজে ইহার (জৃম্ভকাস্ত্রের) দীপ্তি প্রকাশ পাইতেছে ; এই সকল জৃম্ভকাস্ত্র আকাশকে ব্যাপ্ত করিয়াছে ॥১৪॥

(ষ) সুমন্ত্র। ইহার আবার জৃম্ভকাস্ত্রের প্রাপ্তি হইবে কোথা হইতে ?

(স) চন্দ্রকেতু। ভগবান্ বাল্মীকি হইতে ইহা আমি মনে করি।

---

(१) जृम्भकास्त्राधिगम इति पाठान्तरम्।

सुमन्त्रः। नास्य व्यवहारोऽस्त्रेषु, विशेषतो जृम्भकेषु। यतः—[ह]

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः।
अथ तत्सम्प्रदानेन रामभद्रे व्यवस्थिताः [१] ॥१५॥

(ह) सुमन्त्र इति। अस्य वाल्मीकेः अस्त्रेषु न व्यवहारः, अस्त्रेण संग्रामं न कुरुते इत्यर्थः जृम्भकेषु अस्त्रेषु विशेषतः व्यवहारो नास्त्येवेत्यर्थः। वाल्मीकिः सर्वज्ञतया सर्वं धनुर्वेदादिकं जानात्येव किन्तु स्वयमसौ अस्त्रं प्रयुक्तवान् किंवा परस्मै समुपदिष्टवानिति न श्रूयते, अतएव यस्मात् लवस्य जृम्भकास्त्रप्राप्तिरिति न सम्भवत्येवेति भावः। वाल्मीकेर्जृम्भकव्यवहारासम्भवं दर्शयति यत इति।

कृशाश्वेति। एते जृम्भकास्त्रपदार्थाः कृशाश्वस्य प्रजापतेः तनयाः पुत्ररूपेणोत्पन्नाः, तस्माच्च कृशाश्वात् कौशिकं विश्वामित्रं गताः। अथ अनन्तरं तस्य विश्वामित्रस्य सम्प्रदानेन वितरणेन हेतुना रामभद्रे व्यवस्थिताः रामभद्रस्य प्रयोज्या इत्यर्थः। अतो वाल्मीकिव्यवहारोऽसम्भव एवेति भावः।

अत्र जृम्भकाणां कृशाश्वादिष्वनेकेषु गमनात् पर्य्यायनामालङ्कारः। तथा निष्प्रयोजनहिशब्दप्रयोगात् निरर्थकत्वदोषः, किञ्च पुनः कृशाश्वादित्युपादानात् कथितपदतादोषश्च तेन च 'कृशाश्वतनया एते तस्माच्च कौशिकं गता' इति पाठः साधीयान्।

प्रथमतो ब्रह्मा जृम्भकास्त्राण्युत्पादयामास, ततस्तान्येव दक्षकन्यायां जयायां सुप्रभायाञ्च पत्न्यां कृशाश्वस्य पुत्रत्वं ययुः, तस्माच्च कृशाश्वात् तान्यस्त्राणि विश्वामित्रो लेभे, विश्वामित्रेण च ताडकावधात् पूर्वं रामाय प्रदत्तानीति रामायणवार्त्ता ॥१५॥

(হ) সুমন্ত্র। উঁহার (বাল্মীকির) অস্ত্রব্যবহার নাই, বিশেষতঃ জৃম্ভকাস্ত্রের। যেহেতু—

এই সকল জৃম্ভকাস্ত্র, কৃশাশ্ব হইতে উৎপন্ন; কৃশাশ্ব হইতে বিশ্বামিত্রের নিকট গিয়াছিল; তাহার পর বিশ্বামিত্র দান করিয়াছিলেন বলিয়া, রামভদ্রে আসিয়া রহিয়াছে ॥১৫॥

(१) अथ तत् सम्प्रदायेनेति, रामभद्रे स्थिता इति, इति च पाठभेदौ।

चन्द्र। अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रद्दशः पश्यन्ति [१] [च]।

सुमन्त्रः। वत्स! सावधानो भव, पगागतः प्रवीरः [क]।

कुमारौ। [अन्योन्यं प्रति] अहो! प्रियदर्शनः कुमारः। [सस्नेहानुरागं निर्वर्ण्य] [ख]

(च) चन्द्रेति। अपरेऽपि अन्येऽप वाल्मीकिभिन्ना अपौत्यर्थः परमं सातिशयम् उपचीयमानस्य रजस्तमोऽनभिभवेन वर्द्धमानस्य सत्त्वस्य सत्त्वगुणस्य प्रकाश आविर्भावो येषु ते तथोक्ताः, योगाभ्यासेन लब्धकेवलसत्त्वगुणप्रकाशा इत्यर्थः मन्त्रद्दशः महाप्रभाववेदादि-मन्त्राणां ज्ञातारः योगिन इति शेषः स्वयं हि आत्मनैव पश्यन्ति जानन्ति, योगिनः परोपदेशमन्तरेण स्वयमेव सत्त्वप्रकाशे संयमविधानेन जगतां सर्वमेवावगच्छन्तीत्यर्थः। अतएव लवस्य वाल्मीकिभिन्नादपि कस्माच्चित् योगिजनात् जृम्भकास्त्राणां प्राप्तिर्भवेदिति सम्भाव्यत इति भावः।

सत्त्वप्रकाशसंयमस्य फलमाह पातञ्जलसूत्रम्—

"प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्।"

(क) सुमन्त्र इति। सावधानो भव आत्मरक्षां प्रति लवस्याक्रमणं प्रति च एकाग्र-चित्तो भव, यतः स प्रवीरः महावीरो लवः परागत उपस्थितः।

अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(ख) कुमाराविति। प्रशंसायामहोशब्दः। प्रियं परमसुन्दरत्वात् सन्तोषकरं दर्शनमवलोकनं यस्य सः, कुमारौ लवश्चन्द्रकेतुश्च।

(ক) চন্দ্রকেতু। সত্ত্বগুণের প্রকাশ অত্যন্ত বৃদ্ধি পাইলে মন্ত্রজ্ঞ অন্য মহাত্মারাও নিজেরাই জানিতে পারেন।

(ক) সুমন্ত্র! বৎস! সাবধান হও; মহাবীর উপস্থিত হইয়াছে।

(খ) লব ও চন্দ্রকেতু। (পরস্পরের প্রতি) ভাল, কুমার প্রিয়দর্শন বটেন। (স্নেহ ও অনুরাগের সহিত দর্শন করিয়া)

(१) प्रतीयमानसत्त्वप्रकाशाः स्वयं सर्वमन्त्रद्दश इति पाठान्तरम्।

यदृच्छासंवादः किमु गुणानामतिशयः,
पुराणो वा जन्मान्तरनिविड़बन्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥१६॥

सुमन्त्रः । भूयसा जीविधर्म्म एषः, यद्रसमयो कस्यचित्

यदृच्छेति । एतस्मिन् लवे चन्द्रकेतौ च दृष्टे सति यदृच्छया दैववशेन संवादः जातं सम्मेलनं दैववशादेव आवयोरिदं सम्मेलनं जातं न तु किमपि निर्द्दिष्ट-कारणमस्यासीदिति भावः, किमु किम्, गुणानाम् अस्मिन् कुमारे विद्यमानानां शौर्य्यधैर्य्या-दीनाम् अतिशय आधिक्यम्, वा अथवा जन्मान्तरे अन्यस्मिन् जन्मनि निविडो दृढ़ो बन्धः संश्लेषणं बन्धुत्वसूत्रेण बन्धनमित्यर्थः यस्मिन् स तथोक्तः पुराणः प्राक्तनः परिचयः 'असौ स' इति विशेषज्ञानं वा किंवा विधिवशात् अदृष्टाधीनत्वात् अविदितः अज्ञातः कोऽपि निजः स्वकीयः सम्बन्धः भ्रातृत्वादिः किमु किम्, मम हृदयम् अन्तःकरणम् अवधानं प्रणयेनैका-ग्रतां रचयति प्रापयति प्रणयैकाग्रताविशिष्टं करोतीत्यर्थः । दृष्टमात्रमेव एनं कुमारं प्रति यन्मम हृदयमेकतानम् आनन्दितञ्च जातम्, तत्र किम् अतीवशुभदणी जातसम्मेलनं कारणम्, किंवा अस्य असाधारणगुणग्राम एव हेतुः, अथवा जन्मान्तरीयः कोऽपि बन्धुत्वपरिचयो बीजम्, आहोस्वित् अविज्ञातः कोऽपि भ्रातृत्वादिसम्बन्धः कारणं भवेदिति सरलार्थः, न खलु तन्निर्णेतुमहंमीमि भावः ।

अत्र वारं वारं किमुशब्दोपादानात् अनवीकृतत्वदोषः, किन्तु प्रथमचरणे 'किमु किमु' इत्यत्र 'किमुत नु' इति पाठेन तृतीयचरणे च 'किमु' इत्यत्र 'नन्वि'ति पाठेन च दोषाभावः ।

शिखरिणी वृत्तम् ॥१६॥

---

উঁহাকে দেখার পর, কি ঈশ্বরেচ্ছাকৃত সম্মেলন, না গুণের আধিক্য, কিংবা জন্মান্তরীয় গাঢ় বন্ধননিবন্ধন কোন চিরপরিচয়, অথবা দৈববশতঃ অজ্ঞাত কোন আত্মীয়সম্বন্ধ আমার চিত্তকে একাগ্র করিতেছে ? ॥১৬॥

क्वचित् प्रीतिः ; यत्र लौकिकानामुपचार-(१) स्तारामैत्रकं वा (२) चक्षूराग इति, तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति (ग) ।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्म्माणि सीव्यति ॥१७॥

(ग) सुमन्त्र इति । भूयसा बाहुल्येन एष वक्ष्यमाणः जीविधर्म्मः प्राणिनां स्वभावः, कोऽसावित्याह यदिति । कस्यचित् जनस्य क्वचित् कस्मिंश्चित् जने यत् रसमयी अनुरागात्मिका प्रीतिः प्रणयो जायते, स एष जीविधर्म्म इत्यर्थः । ननु कथमसौ जायत इत्याह यत्रेति । यत्र प्रेमणि तारयोः कनीनिकयोः मैत्रकं मित्रतेति तारामैत्रकं परस्परमिलितचक्षुस्ताराजन्यं बन्धुत्वमित्यर्थः वाशब्दः समुच्चये, चक्षुषोः परस्परमिलितयो-र्नयनयोरागोऽनुराग इति लौकिकानां लोकवृत्तान्ताभिज्ञानाम् उपचारो व्यवहारः । तथा च परस्परनयनतारासम्मिलनमात्रमेव (दृष्टिमात्रमेव) अन्योन्यस्य अन्योन्यं प्रति यः प्रणयो जायते, तस्य 'तारामैत्रकं' चक्षूराग' इति च संज्ञाद्वयं लोकवृत्तान्ताभिज्ञैर्व्यवह्रियते इति निष्कर्षः । तं प्रेमाणं प्रणयम् अप्रतिसंख्येयम् इयत्तया संख्यातुमशक्यम् अत्यधिक-मित्यर्थं, निबध्यते अनेनेति निबन्धनं कारणम्, अनिबन्धनं केनचित् कारणेन अनुत्-पादितम् ईश्वरेच्छया समुत्पन्नमित्यर्थः आमनन्ति ब्रुवन्ति लौकिकाचाराभिज्ञा इति शेषः । तादृशप्रीतौ ईश्वरेच्छैव कारणमिति भावः ।

"तारकाक्ष्णः कनीनिका ।" "प्रेमा ना प्रियता हार्द्द"मिति चामरः ।

अस्यैव प्रेम्णो विशेषमाह अहेतुरिति । अहेतुर्निर्निमित्तक उपकारः सौदरत्वादि-

(গ) সুমন্ত্র। প্রায়ই প্রাণিগণের ধর্ম্ম এই যে, কাহারও প্রতি কাহারও অনুরাগাত্মক প্রণয় জন্মে ; যে প্রণয়কে লোকে "তারামৈত্রক কিংবা চক্ষূরাগ" ইহা বলিয়া ব্যবহার করে ; সেই প্রণয়কে লোকে "ইয়ত্তা বিহীন ও অকারণ জন্য" বলিয়া থাকে ।

(१) व्याहार इति पाठान्तरम् । (२) कस्मिंश्चित् पुस्तके वाशब्दो नास्ति ।

कुमारौ। (अन्योन्यं प्रति (१))

एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे।
यत्प्राप्तौ मम परिरम्भणाभिलाषात्
उन्मीलत् (२) पुलककदम्बमङ्गमास्ते ॥१८॥

सम्बन्धरूपविशिष्टकारणं विना जायमान इत्यर्थः यः पक्षपातः परस्परं प्रणयः तस्य पक्षपातस्य प्रतिक्रिया प्रतीकार उच्छेद इति यावत् नास्ति न वर्त्तते; तादृशप्रणय-जनकेश्वरेच्छायाः सर्वदैव सत्त्वात्, उपकारादिरूपकारणजन्यप्रणयस्य तु समुच्छेदो भवत्येव तादृशकारणापाये अन्वयव्यतिरेकानुविधायित्वादिति भावः। हि यस्मात्, स्नेहात्मकः तादृशपक्षपाताभिन्नः प्रगाढप्रणयरूप इति यावत् तन्तुः सूत्रम् अन्तर्मर्म्माणि अभ्यन्तरसन्धि-स्थानानि अन्योन्यस्य अन्तःकरणमिति यावत् सीव्यति ग्रथ्नाति, अतएव तादृशप्रणयभङ्गो नितरामसम्भव एव, स तु युवयोर्जात इति प्रतीयत इति भावः।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः श्लिष्टशब्दनिबन्धनं परम्परित-रूपकञ्च परस्परान्तराकर्षणे सीवनत्वारोपं प्रति स्नेहे तन्तुत्वारोपस्य कारणत्वात्, अनयो-रङ्गाङ्गिभावेन सङ्करः।

सीव्यतीति "षिवु तन्तुसन्ताने" इत्यस्य प्रयोगः, 'सेलाइ' इति तस्य बङ्गभाषा ॥१७॥

एतस्मिन्निति। मसृणितः चिक्कणः कृतः यो राजपट्टः मणिविशेषः स इव कान्तं मनोरमं तस्मिन्, एतस्मिन् शरीरे लवस्य चन्द्रकेतोश्च देहे कथमिव केन प्रकारेण, इवशब्दो वाक्यालङ्कारे, सायकाः बाणाः मोक्तव्याः प्रहाराय निक्षेप्तव्याः मयेति शेषः कथमपि बाणा निक्षेप्तुं न शक्यन्ते स्नेहेन बाधाप्रदानादिति भावः। यस्य शरीरस्य प्राप्तौ सत्यां परिरम्भणस्य आलिङ्गनस्य अभिलाषात् इच्छावशात् मम अङ्गम् उन्मीलत् उत्तिष्ठत् पुलकानां रोमाञ्चानां कदम्बं समूहो यस्मिन् तत्तथोक्तं सत् आस्ते वर्त्तते।

বিনা কারণে যে প্রণয় জন্মে, তাহার নাশ হয় না; কারণ, স্নেহস্বরূপ সেই সূত্র, অন্তরের মর্ম্মস্থানগুলিকে সেলাই করিয়া দেয় ॥১৭॥

---

(१) अन्योन्यमुद्दिश्येति पाठान्तरम्। (२) आबद्धोत्पुलकेति पाठभेदः।

किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना,
शस्त्रेणापि हि तेन किं, न विषयो जायेत यस्येदृशः।
किं वक्ष्यत्ययमेव युद्ध-(१) विमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥१८॥

अत्र लुप्तोपमालङ्कारः। "राजपट्टः। मणिविशेषः" इति शब्दकल्पद्रुमः।
मसृणः कृत इति मसृणितः करोत्यर्थेनन्तात् कर्म्मणि क्तः।
शार्दूलविक्रीडितं वृत्तम् ॥१८॥

किन्त्विति। भेदे किन्तुशब्दः, अस्मिन् स्निग्धकोमलकाये सायका मोक्तुं न शक्याः किन्तु इति पूर्वश्लोकेनान्वयः। आक्रान्तं बलेन आबद्धं कठोरं प्रचण्डं तेजो मदीयः प्रभावो येन तस्मिन् तथोक्ते, अश्ववारणेन मत्प्रभावाक्रमणकारिणि लवे युद्धाय स्पर्द्धापूर्वकाह्वानेन मत्प्रभावाक्रमणकारिणि चन्द्रकेतौ चेति स्पष्टार्थः, शस्त्रं विना शस्त्रनिक्षेपमन्तरेण का गतिः क उपायः, सम्भावनायां नामशब्दः उपायान्तरं नास्त्येवेति सम्भाव्यत इत्यर्थः। ननु शस्त्रं परिहाय साम्ना सन्धिः क्रियतामित्याह शस्त्रेणेति। तेन शस्त्रेणापि, किं किं प्रयोजनमित्यर्थः, यस्य शस्त्रस्य ईदृश इत्थम्भूतो महावीरः विषयः प्रयोगस्थलं न जायेत न भवेत्। यदीदृशेन महावीरेण सह न मे युद्धं स्यात् तर्हि युद्धमिष्टैव निष्फलेति भावः। युद्धाकरणे दोषान्तरमाह किमिति। आयुधे उद्यतेऽपि मां प्रति निक्षेपाय अनेन शस्त्र उत्तोलितेऽपि युद्धविमुखं संग्रामपराङ्मुखं माम् अयमेव 'तिष्ठन्तु तावदन्ये, मत्समानः प्रतिपक्षो बलगर्वित एष एव वीर किं वक्ष्यति, भीतोऽयं कापुरुषः संग्रामात् विरत' इति वक्ष्यतीत्यर्थः अतएव युद्धादन्यदिदानीं न मे करणीयमस्तीति भावः।

লব ও চন্দ্রকেতু। (পরস্পরের প্রতি) পালিস করা রাজপট্টমণির ন্যায় কমনীয় এই শরীরে কি প্রকারে বাণক্ষেপ করিব? যে শরীর পাওয়া মাত্র, আলিঙ্গনের ইচ্ছায় আমার অঙ্গ সকল, উৎপন্ন রোমাঞ্চ হইয়া পড়িয়াছে ॥১৮॥

---

(१) किं वक्ष्यत्ययमेवमद्य विमुखमिति पाठान्तरम्।

সুমন্ত্রঃ। (লবং নির্বর্ণ্য সাস্রমাত্মগতম্) হৃদয! কিমন্যথা পরিকল্পসে (ঘ)।

মনোরথস্য যদ্বীজং তদ্দৈবেনাদিতো হৃতম্।
লতাযাং পূর্বলূনাযাং প্রসূনস্যাগমঃ কুতঃ ॥২০॥

ননু তথাপি প্রণযভঙ্গো ভবেদিত্যাহ বীরাণামিতি। হি যস্মাৎ দারুণো নিষ্ঠুরত্বাৎ ভযঙ্করঃ রসঃ ক্রোধাত্মিকা মনোবৃত্তির্যস্মিন্ স দারুণরসঃ বীরাণাং সময আচারঃ পরস্পরপ্রহাররূপো ব্যবহার ইতি যাবৎ স্নেহক্রমং প্রীতিপরম্পরাং বাধতে উৎসাদযতি। অতএবাবশ্যকত্বাদঙ্গীকরণীয এব প্রণযভঙ্গ ইতি ভাবঃ।

অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কারঃ। দ্বিতীযপাদে যচ্ছব্দঘটিতবাক্যস্য পরত্র পাঠাৎ বিধেযাবিমর্শদোষঃ পাদপূরণমাত্রার্থকহিশব্দান্নিরর্থকত্বদোষশ্চ, তযোশ্চ "যস্যেদৃক্ প্রবলো ভবেন্ন বিষযস্তেনাপি শস্ত্রেণ কিম্"ইতি পাঠেন সমাধানং স্যাৎ।

"সমযঃ শপথাচারকালসিদ্ধান্তসংবিদঃ" ইত্যমরঃ।

শার্দূলবিক্রীডিতং বৃত্তম্ ॥১৯॥

(ঘ) সুমন্ত্র ইতি। অন্যথা অপরিচিতবীরবালকভিন্নপ্রকারেণ রামচন্দ্রপুত্রত্বেনেত্যর্থঃ কিং কথং পরিকল্পসে বিতর্কযসি। তদসম্ভবমিতি ভাবঃ।

তদসম্ভবত্বং প্রতিপাদযতি মনোরথস্যেতি। মনোরথস্য এষ প্রিযবীরঃ সীতাগর্ভজাতো রামচন্দ্রস্য পুত্রো ভবেদিত্যেবমভিলাষস্য যৎ বীজং সীতারূপং কারণম্, দৈবেন দুরদৃষ্টেন

কিন্তু আমার প্রচণ্ড প্রভাবের আক্রমণকারী এই ব্যক্তির প্রতি অস্ত্র ব্যবহার ভিন্ন অন্য কি উপায় আছে? আর সে অস্ত্র দিয়াই বা কি হইবে, যে অস্ত্রের বিষয় এইরূপ লোক না হইবে। এ অস্ত্র উত্তোলন করিলেও আমি যুদ্ধে বিমুখ থাকিলে, এ-ই বা আমাকে কি বলিবে; সুতরাং বীরগণের ভয়ঙ্কর নিয়ম, স্নেহের নিয়মকে বাধা করে ॥১৯॥

(ঘ) সুমন্ত্র। (লবকে দেখিয়া, অশ্রুপাতের সহিত স্বগত) হে মন! তুমি কেন অন্য রকম কল্পনা করিতেছ।

चन्द्र। अवतराम्यहमार्य्य! सुमन्त्र! स्यन्दनात् (१) (ङ)।

सुमन्त्रः। तत् कस्य हेतोः? (च)

चन्द्र। यतस्तावदयं वीरपुरुषः पूजितो भवति, अपि च खल्वार्य्य! चात्रधर्म्मः परिपालितो भवति; न रथिनः पादचारमायोधयन्तीति शास्त्रविदः परिभाषन्ते (२) (छ)।

---

आदितः प्रथमत एव तत् हतं विनाशितम्। हिंस्रसमाकुलारण्ये एकाकिन्या निर्वासितायाः सीतायाः कथमपि जीवनधारणासम्भवात् एष तस्याः पुत्र इति कथमपि न सम्भवतीति भावः। इममर्थं दृष्टान्तेन द्रढ़यति लतायामिति। लतायां कस्याञ्चित् वल्ल्यां पूर्वं प्रागेव लूनायां छिन्नायां प्रसूनस्य पुष्पस्य आगम उत्पत्तिः कुतः कस्मात् हेतोर्भवेदित्यर्थः अपि तु कथमपि नेत्यर्थः। यथा पूर्वलूनायां लतायां प्रसूनोत्पत्तिकामना असम्भवा तथा चिराय मृतायां सीतायाम् अस्याप्युत्पत्तिसम्भावना सुतरांमेवासम्भवेति रामपुत्रत्वेनास्य सम्भावना भ्रममूलैवेति भावः।

अतएव प्रतिबिम्बनादत्र दृष्टान्तालङ्कारः। हतलूनेत्युभयत्रापि निष्ठाप्रत्ययात्ततया आदिपदपूर्वपदानुपादानेऽपि यद्यपि अतीतत्वज्ञानं स्यात् तथापि अवधारणार्थपरतया तयोर्निर्देशात् न अधिकपदत्वदोष इति सुधीभिर्विभावनीयम् ॥२०॥

(ङ) चन्द्रेति। स्यन्दनात् रथात्। अनुमतिप्रार्थनार्थमुक्तिरियं चन्द्रकेतोः।

(च) सुमन्त्र इति। तदवतरणम्। कस्य हेतोरिति षष्ठी हेतुप्रयोगे।

(छ) चन्द्रेति। तावत् वाक्यालङ्कारे। पूजितः सम्मानितः। रथात् समान-

---

অভিলাষের যাহা কারণ, তাহা পূর্ব্বেই বিধাতা নষ্ট করিয়াছেন। লতা পূর্ব্বেই ছিন্ন হইলে, পুষ্পের উৎপত্তি হইবে কোথা হইতে? ॥২০॥

(ঙ) চন্দ্রকেতু। আর্য্য! সুমন্ত্র! আমি রথ হইতে অবতরণ করি।

(চ) সুমন্ত্র। তাহা কিসের জন্য?

---

(१) कश्चिंचित् पुस्तके अहमिति पाठो नास्ति। (२) अपि खलु आर्य्य-चात्रधर्म्मश्चानुष्ठितो भवति। चात्रधर्म्मः समनुगतो भवति। रथिनः पादचरमभि-युञ्जन्तीति त्रिभिन्नः पाठः।

सुमन्त्रः। (स्वगतम्) कष्टां दशामनुप्रपन्नोऽस्मि (१)।(ज)।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु।
कथं वाप्यनुजानातु साहसैकरसां क्रियाम् ॥२१॥

---

स्थलावतरणेन निर्जीद्धत्यपरिहारात् सम्मानं प्रदर्शितं स्यादिति भावः। क्षत्रियाणामयमिति क्षात्रः स चासौ धर्मो नियमश्चेति क्षात्रधर्मः परिपालितः सुरक्षितः। ननु कोऽसौ क्षात्रधर्मः यदर्थं त्वमेवं साहसमनुष्ठातुमिच्छसीत्याह नेति। रथिनो रथारोहिणो योद्धारः पादचारं पदातिं प्रतिपक्षयोद्धारमित्यर्थः न श्लाघयन्ति न प्रहरन्ति इति शास्त्रविदो मन्वादयः परिभाषन्ते सर्वथा ब्रुवन्ति। रथादवतरणे समानस्थानगतत्वात् तन्निषिद्धवर्जनरूपः क्षात्रधर्मः परिरक्षितो भवेदिति भावः। तथा च मनुः—

"न च हन्यात् स्थलारूढं न क्लीवं न कृताञ्जलिम्।" इत्यादि।

"स्वयं रथस्थो रथं त्यक्त्वा स्थलारूढं न हन्या"दिति कुल्लूकभट्टः।

(ज) सुमन्त्र इति। कष्टां दशां दुःखकरीमवस्थाम् अनुप्रपन्नः प्राप्तः।

कथमेतदित्याह कथमिति। मादृशो युद्धधर्मज्ञो रघुकुलनिदेशकस्य जनः न्यायादनपेतं न्याय्यं सङ्गतम् अनुष्ठानं रथाच्चन्द्रकेतोरवतरणरूपं कार्यं कथं केन प्रकारेण प्रतिषेधतु निवारयितु निवारयितुं शक्नुयात् अपि तु कथमपि नेत्यर्थः। शास्त्रन्यायसिद्धकार्यनिषेधे विहितानुष्ठानप्रयोजकत्वेन प्रत्यवायः स्यादिति भावः। साहसं हठकारित्वमेव एकः केवलः रसः अवतरणप्रवर्त्तको रागो यस्यां तां तथोक्तां क्रियां रथादवतरणरूपं कार्यं कथं वापि अनुजानातु अनुमन्यताम। रथादवतीर्णस्य चन्द्रकेतोरीदृशेन महावीरेण सह समरे विपत्तिसम्भावनं बाधिकेति तदनुमन्तुमपि न शक्यते अतएव तदुभयोरेकतरावधारणावश्यकत्वेऽपि तत्कर्त्तुमसामर्थ्यात्, कष्टां दशामनुप्रपन्नोऽस्मीति भावः।

अत्र अर्थापत्तिद्वयस्य संसृष्टिरलङ्कारः ॥२१॥

---

(छ) চন্দ্রকেতু। যেহেতু, এই বীরপুরুষ সম্মানিত হন; আরও আর্য্য! ক্ষত্রিয়ের ধর্ম্ম রক্ষিত হয় কারণ, শাস্ত্রজ্ঞেরা বলিয়া থাকেন যে, রথারোহিগণ পাদচারীকে প্রহার করেন না।

---

(१) कष्टं वतानुप्रपन्नः, विपदमनुप्रपन्न इति च पाठभेदौ।

चन्द्र। यदा तातमिश्रा अपि पितुः प्रियसखं (१) धर्म्मार्थ-संशयेष्वार्य्यमेव पृच्छन्ति, तत् किमार्य्यो विमृशति (झ)।

सुमन्त्रः। आयुष्मन्! एवं यथाधर्म्ममभिमन्यसे (ञ)।

एष सांग्रामिको न्याय एष धर्म्मः सनातनः।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥२२॥

(झ) चन्द्रेति। तातमिश्राः पूज्यास्ताताः रामादयोऽपि विशेषविचक्षणा इत्यपेरर्थः, धर्म्मार्थसंशयेषु 'अत्र को धर्म्म' इति धर्म्मसंशयेषु 'अत्र किं कर्त्तव्यम्' इति कर्त्तव्यविषय-संशयेषु च सत्सु पितुः तेषां जनकस्य दशरथस्य प्रियसखं योग्यमन्त्रित्वेन प्रियं मित्रम् आर्य्यं भवन्तं पृच्छन्ति कर्त्तव्यं जिज्ञासन्ते धर्म्मार्थेषु भवतो नितान्तनैपुण्यादिति भावः। तत्तस्मात् आर्य्यो भवान् किं कथं विमृशति विविनक्ति। नैष दुरूहः प्रश्नः, न वा विवेचनावसरोऽस्तीति सत्वरमुत्तरं क्रियतामिति भावः।

(ञ) सुमन्त्र इति। एवं रथादवतरणं यथाधर्म्मं धर्म्मानतिक्रान्तं धर्म्मसङ्गत-मित्यर्थः अभिमन्यसे अभिमतं कृतवानसीत्यर्थः।

धर्म्मसङ्गतत्वं प्रतिपादयति एष इति। सांग्रामिकः युद्धसंसृष्टः एष न्यायो नीतिः,

(জ) সুমন্ত্র। (স্বগত) কষ্টকর অবস্থা প্রাপ্ত হইলাম যে, (কারণ) আমার মত লোক, ন্যায়সঙ্গত কার্য্য কি প্রকারে নিষেধ করিবে? আবার কি প্রকারেই বা একমাত্র সাহসের কার্য্যের অনুমতি দিবে ॥২১॥

(ঝ) চন্দ্রকেতু। ধর্ম্ম ও অর্থের সংশয় উপস্থিত হইলে, যখন পিতৃ-পুরুষগণও পিতার প্রিয়সখা বলিয়া আপনাকেই জিজ্ঞাসা করেন; তখন আপনি কি বিবেচনা করিতেছেন?

(ঞ) সুমন্ত্র। আয়ুষ্মন্! তুমি ইহাই (রথ হইতে অবতরণই) ধর্ম্মসঙ্গত মনে করিয়াছ।

---

(१) प्रियं सखायमिति पाठान्तरम्।

चन्द्र। प्रतिरूपं वचनमार्य्यस्य (ट)।
इतिहासं पुराणञ्च धर्म्मप्रवचनानि च।
भवन्त एव जानन्ति रघूणाञ्च कुलस्थितिम् ॥२३॥

रथारोहिणो यत् पदातिभिः सह न युध्यन्ते इयमेव युद्धनीतिरित्यर्थः, तथा एष सनातनः धर्म्मश्चमहावीरैश्चिराचरित इत्यर्थः धर्म्म आचारः ननु होलाकादिवत आचारस्य देशभेदेन भिन्नत्वात् रघूणां क आचार इत्याह इयमित्यादि। रघुषु रघुवंशोद्भवेषु सिंहा इव तेषां रघुकुलश्रेष्ठानाम् इयं हि एषैव वीरचारित्रस्य वीरोचिताचारस्य पद्धतिः पन्थाः, तव पूर्व-पुरुषा अपि रथस्थाः सन्तः पदातिभिः सह समरं न कृतवन्त इति तव वंशपरम्परा-प्रसिद्धोऽप्ययमाचार इति भावः।

चरित्रमेव चारित्रं प्रज्ञादित्वात् स्वार्थे अण् ॥२२॥

(ट) चन्द्रेति। आर्य्यस्य भवतः वचनम् उक्तवाक्य प्रतिरूपम् अनुरूपं योग्यमिति यावत्। धार्म्मिकस्य धर्म्मसङ्गतोक्तिरेव योग्येति भावः।

अनुरूपवचनप्रयोगे कारणमाह इतिहासमिति। भवन्त एव नान्ये साधारणा इत्येवकार-शब्दार्थः गौरवात् बहुवचनम् इतिहासं पूर्ववर्त्तिनीं घटनापरम्परां पुराणं स्वनाम्ना प्रसिद्धं पञ्चलक्षणं शास्त्रविशेषम्, धर्म्माः वर्णानामाश्रमाणाञ्च शौचाचारादयः प्रोच्यन्ते एभिरिति धर्म्मप्रवचनानि मन्वादिशास्त्राणि रघूणां राघवाणां कुलस्थितिं वंशपरम्पराप्रसिद्धरीतिञ्च जानन्ति विदन्ति। अतएवोक्तवचनप्रयोगे भवतां सामर्थ्यमस्त्येवेति भावः।

अत्र जानन्तीत्येकया क्रियया इतिहासादीनां कर्म्मतया सम्बन्धात तुल्ययोगितालङ्कारः। जानन्तीत्यनेन समाप्तस्य वाक्यस्य पुनः रघूणाञ्चेत्यादिना उपात्तत्वात् समाप्तपुनरात्ततादोषः स च 'कुलस्थितिं रघूणाञ्च भवन्तः खलु जानते' इति पाठेन समाधेयः।

इतिहासलक्षणमुक्तमभियुक्तैर्यथा—

"धर्म्मार्थकाममोक्षाणामुपदेशसमन्वितम्।
पुरावृत्तकथायुक्तमितिहासं प्रचक्षते ॥"

ইহাই যুদ্ধের নিয়ম, ইহাই সনাতন ধর্ম্ম এবং ইহাই রঘুবংশীয় মহাপুরুষ গণের বীরাচারের পদ্ধতি ॥২২॥

सुमन्त्रः (सस्नेहास्रं परिष्वज्य) (ठ)

जातस्य ते पितुरपीन्द्रजितो निहन्तु-(१)
र्वत्सस्य वत्स! कति नाम दिनान्यमूनि।
तस्याप्यपत्यमनुगच्छति वीरवृत्तं (२)
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥२४॥

पुराणलक्षणममरकोषटीकायां रघुनाथधृतम्—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥" ॥२३॥

(ठ) सुमन्त्र इति। स्नेहेन वात्सल्येन अस्रेण आनन्दाश्रुणा च सहेति सस्नेहास्रं परिष्वज्य आलिङ्ग्य चन्द्रकेतुरिति शेषः।

जातस्येति। हे वत्स। चन्द्रकेतो। इन्द्रजितो युद्धे देवराजविजेतुः रावणपुत्रस्य मेघनादस्य निहन्तुर्विनाशयितुः वत्सस्य स्नेहास्पदस्य ते तव पितुस्तातस्य लक्ष्मणस्यापि जातस्य उत्पन्नस्य सतः अमूनि दिनानि कति नाम, कियन्ति सम्भावयामि, तव पितुर्लक्ष्मणस्यापि जन्मतःप्रभृति वर्त्तमानदिनपर्य्यन्तानि नितान्ताल्पान्येव दिनानीत्यर्थः इतो मध्य एव स इन्द्रस्य विजेतारं महावीरं मेघनादं निहतवानिति महदेवाश्चर्य्यमिति भावः। तस्यापि तादृशनितान्ताल्पवयसो लक्ष्मणस्यापि अपत्यं पुत्रः वीरवृत्तं वीरोचितमाचारम् अनुगच्छति अनुसरति पालयति, अतएव दिष्ट्या भाग्येन दशरथस्य कुलं वंशः प्रतिष्ठां स्थितिं स्थायित्वमिति यावत् गतं प्राप्तम्, इत्यस्माकं महत् आनन्दकारणमिति भावः।

अत्र चतुर्थपादार्थं प्रति पूर्ववाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

वसन्ततिलका वृत्तम् ॥२४॥

(ট) চন্দ্রকেতু। আপনার বাক্য অনুরূপই বটে।

ইতিহাস, পুরাণ, ধর্ম্মশাস্ত্র এবং রঘুবংশের কৌলিক রীতি—এ সমস্ত আপনারাই জানেন ॥২৩।

(१) विजेतुरिति पाठान्तरम्। (२) अनुतिष्ठति वीरधर्म्ममिति पाठभेदः।

चन्द्र। (सकष्टम्)

अप्रतिष्ठे रघुज्येष्ठे (१) का प्रतिष्ठा कुलस्य नः।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥२५॥

सुमन्त्रः। अहह! हृदयमर्म्मदारुणान्येतानि चन्द्रकेतोर्वचनानि (२) (ङ)।

अप्रतिष्ठ इति। रघुज्येष्ठे रघुकुलप्रधाने रामे अप्रतिष्ठे अपत्याभावेन स्थितिरहिते सम्भाव्यमानवंशलोपसन्तते इत्यर्थः, नः अस्माकं कुलस्य स्ववंशस्य का प्रतिष्ठा स्थितिः, सर्वगुणाकरस्य रामस्य निःसन्तानतया अस्मत्सन्तानानां सतामपि असत्कल्पत्वेन मन्यमानत्वादिति भावः। इति दुःखेन हेतुना नोऽस्माकं "वास्मदश्चे"ति बहुवचनं ममेत्यर्थः अपरे रामादन्ये त्रयः पितरः पितृपर्य्यायौ भरतशत्रुघ्नौ पिता लक्ष्मणश्चेत्यर्थः तप्यन्ते सन्तापमनुभवन्ति।

अत्र करुणो रसः रामविषयरतिभावस्याङ्गमिति रसवदलङ्कारः। तथा रघुज्येष्ठपदेन किं दिलीपपुत्रस्य रघोर्ज्येष्ठो भ्राता उच्यते किंवा रामः, अथवा अपरः कश्चिदिति सन्देहात् सन्दिग्धत्वदोषः, स च 'अप्रतिष्ठेऽग्रजे रामे' इति पाठेन समाधेयः ॥२५॥

(ङ) सुमन्त्र इति। अहहेति खेदसूचकमव्ययम्। हृदयस्य मर्म्माणि सन्धिस्थलानि

---

(ঠ) সুমন্ত্র। (স্নেহ ও অশ্রুপাতের সহিত আলিঙ্গন করিয়া)

বৎস! ইন্দ্রজিতের নিহন্তা তোমার পিতা বৎস লক্ষ্মণ যে জন্মিয়াছে; সে আজ কয়টী দিন; তাহার পুত্রও পীর ব্যবহারের অনুসরণ করিতেছে; সুতরাং ভাগ্যবশতঃ দশরথের বংশ প্রতিষ্ঠা লাভ করিয়াছে ॥২৪॥

চন্দ্রকেতু। (কষ্টের সহিত) রঘুকুলপ্রধান রামচন্দ্রের প্রতিষ্ঠা না হইলে আমাদের বংশের প্রতিষ্ঠা কি হইল; এই দুঃখেই আমার অপর পিতৃপর্য্যায়-ত্রয় সন্তপ্ত হইতেছেন ॥২৫॥

(१) कुलज्येष्ठे इति पाठान्तरम्। (२) हृदयमर्म्मदारुणानि इति पाठभेदः।

लवः । हन्त ! मिश्रीकृतो रसो (१) वर्त्तते (ढ) ।

यथेन्दावानन्दं व्रजति समुपोढ़े कुमुदिनी
तथैवास्मिन् दृष्टिर्मम, कलहकामः पुनरयम् ।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्वणरसः (२) ॥२६॥

---

दार्य्यन्ते भिद्यन्ते एभिरिति हृदयमर्म्मदारणानि, एतद्वचनश्रवणेन दुःखेन हृदयमर्म्मस्थलं विदीर्णमिवानुभूयत इत्यर्थः ।

(ढ) लव इति । हन्तेति हर्षसूचकमव्ययम् । रसो वात्सल्यरसः मिश्रीकृतः वीररसेन सम्मिलितः सन् वर्त्तते ।

रसयोर्मिश्रीकृतत्वं व्यनक्ति यथेति । इन्दौ चन्द्रे समुपोढे उदिते कुमुदिनी कुमुद्वती आनन्दं प्रफुल्लतां व्रजति प्राप्नोति, तथैव अस्मिन् कुमारे मम दृष्टिः आनन्दं प्रीतिविस्फारितत्वं व्रजति । पुनः किन्तु कलहं वैरेण समरं कामयते अभिलषति यः स कलहकामः सन् अयं बाहुर्भुजः झणत्कारेण झणझणाशब्देन क्रूरं कर्कशं यथा स्यात्तथा क्वणितः शब्दायमानो यो गुणः मौर्वी तेन गुञ्जत् गर्जत् यत् गुरु विशालं धनुः तस्मिन् धृतं निहितं प्रेम ग्रहणाभिलाषो येन स तथोक्तः, तथा विकचः प्रस्फुटः विकरालः तुङ्गः अतिमहान् इत्यर्थः उल्वणरसः नियतसहचरेण रौद्ररसेन समुन्नतो वीररसो यस्मिन् स तथोक्तश्च जात इति शेषः । यथैनं महावीरं कमनीयकलेवरं कुमारमवलोक्य मम नयनमानन्दविस्फारितं जातम्, तथा बाहुरपि अविरतधनुर्ज्याशब्देन दिङ्मण्डलमापूर्य्य महासमराय समुत्सहते इति निष्कर्षः । अतएव वात्सल्यवीररसयोरिदानीं सम्मेलनं जातमिति भावः ।

(ড) সুমন্ত্র। অহহ! চন্দ্রকেতুর এই কথাগুলি হৃদয়ের মর্ম্মস্থান বিদীর্ণ করিতেছে।

(ঢ) লব। বর্ত্তমানে আমার হৃদয়ে বাৎসল্য ও বীররসমিশ্রিত অবস্থায় উপস্থিত হইয়াছে।

(१) रसक्रम इति विभिन्नः पाठः । (२) विकटविकरालव्रणमुख इति पाठान्तरम् ।

चन्द्र। (अवतरन्) (१)। आर्य्य! सावित्रश्चन्द्रकेतुरभिवादयते (ग)।

अत्र वात्सल्यवीरयोर्विरुद्धयोः सङ्घटनया विषमालङ्कारः श्रौतोपमया सङ्कीर्णः, वृत्त्यनुप्रासश्चेति संसृष्टिः। तथा "हन्त। मिश्रीकृतो रसो वर्त्तते" इति गद्यभागे अस्मिन् पद्ये च रसशब्दोपादानात् रसस्य स्वशब्दोक्तिदोषः, तथा गुञ्जनस्य भ्रमरादिशब्द एव ख्यातत्वादत्र धनुष्टङ्कारे च तदुपादानात् ख्यातिविरुद्धतादोषश्च। तेन गद्यांशे "मिश्रीकृता खल्ववस्था वर्त्तते" इति पाठेन पद्ये च 'गुञ्ज'दित्यत्र 'गर्ज'दिति पाठेन 'विकचविकरालोल्वणतम' इति पाठेन च तत्समाधानमिति सुधीभिर्विभावनीयम्।

"करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्"दिति मेदिनी। "उल्वणमुद्भतमुद्भटमुत्कटमिति नातिनानार्था" इति हलायुधः।

कलहकाम इति "शीलिकामिभिक्ष्याचरिभ्यो च" इति णप्रत्ययः।

शिखरिणी वृत्तम् ॥२६॥

(ग) चन्द्रेति। सवितुरपत्यं सावित्रः सूर्य्यवंशोत्पन्न इत्यर्थः। सूर्य्यवंशस्य प्राधान्यसूचनार्थं सावित्रपदोपादानम्। नमस्कर्त्तुः प्राधान्यसूचनेन नमस्कार्य्यस्यातिप्राधान्यं सूचितं स्यादित्यभिप्रायः।

চন্দ্র উদিত হইলে, কুমুদিনী যেমন আনন্দ লাভ করে; ইহার (চন্দ্রকেতুর) দর্শনে আমার দৃষ্টিও তেমন আনন্দ লাভ করিতেছে; কিন্তু এই বাহু আবার 'ঝণ ঝণ' এইরূপ কর্কশভাবে শব্দায়মান গুণের আকর্ষণে গর্জ্জনকারী বিশাল ধনুর প্রতি আগ্রহ ধারণ করিয়াছে এবং এই বাহুর ভয়ঙ্কর উৎসাহ রস প্রকাশ পাইতেছে ॥২৬॥

(গ) চন্দ্রকেতু। (রথ হইতে অবতীর্ণ হইতে থাকিয়া) আর্য্য! (প্রণাম!) সূর্য্যবংশীয় চন্দ্রকেতু অভিবাদন করিতেছে।

---

(१) अवतरणं रूपयन्निति पाठभेदः।

सुमन्त्रः । अजितं पुण्यमूर्जस्वि (१) ककुत्स्थस्येव (२) ते महः ।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥२७॥

अपि च,

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽपि नन्दतु [३] गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रं वैष्णव-[४] माग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥२८॥

---

अजितमिति । शाश्वतो नित्यः उत्पत्तिविनाशहीन इति यावत् वराहो धृतवराहमूर्त्तिः देवो विष्णुः ककुत्स्थस्य पुरञ्जयस्येव ते तव अजितम् अन्यैरनभिभूतं पुण्यं पवित्रं ऊर्जस्वि प्रबलं महस्तेजः श्रेयसे विजयमङ्गलाय परिकल्पतां सर्वतोभावेन कुरुताम् ।

अत्र श्रौत्युपमालङ्कारः ।

"शाश्वतस्तु ध्रुवो नित्यम् ।" "महस्तूत्सवतेजसो"रिति चामरः ।

पुरा किल वृषरूपधारिणो देवराजस्य ककुदि समारुह्य इक्ष्वाकुवंशीयो राजा पुरञ्जयः दानवैः सह समरमारेभे, तेन च तस्य ककुत्स्थ इति नाम बभूव । भगवान् विष्णुस्तत्र युद्धे स्वतेजसा पुरञ्जयशरीरं परिपूर्य्य यथा तस्मै विजयं दत्तवान्, अधुनापि तथैव तव तेजोविवर्द्धयन् विजयं ददातु इति सेतिहासः सरलार्थः ।

वराहपदोपन्यासात् रघुकुलं वराहमन्त्रोपासकमासीदिति प्रतीयते ॥२७॥

देव इति । सविता सूर्य्यो देवः समरे अस्मिन् युद्धे त्वां धिनोतु विजयप्रदानेन प्रीणयतु, यः सविता ते तव गोत्रस्य वंशस्य पिता उत्पादक आसीदित्यर्थः । तथा मैत्रावरुणो वशिष्ठोऽपि त्वां नन्दतु विजयदानेन सुखयतु, यो मैत्रावरुणस्ते तव गुरूणां

সুমন্ত্র । বরাহমূর্ত্তিধারী সনাতন নারায়ণ, মঙ্গলের জন্য পুরঞ্জয়ের ন্যায় তোমারও অন্যের অজেয়, পবিত্র ও বলবান্ তেজ দান করুন ।২৭॥

---

(१) औजस्वीति पाठान्तरम् । (२) काकुत्स्थस्येवेति पाठभेदः । (३) अभिनन्दतु इति भिन्नः पाठः । (४) ऐन्द्रवैष्णवमिति क्वचित् पाठः ।

लवः। कुमार! अति हि नाम शोभसे रथस्थ एव कृतं कृतमत्यादरेण [त]।

---

पितॄणां रामादीनामपि गुरुरुपदेष्टा वर्त्तते इत्यर्थः। वाक्यान्तरारम्भे अथोशब्दः। इन्द्रस्येदम् ऐन्द्रम् इन्द्रौजस्तुल्यमित्यर्थः। एवमन्यत्रापि। विष्णोरिदं वैष्णवम्, अग्नि-मरुतोरिदम् आग्निमारुतं "क्वचिदुभयपदस्यापी"ति उभयत्राकारम्, सुपर्णस्य गरुड़स्येदं सौपर्णम् ओजस्तेजस्ते तव अस्तु भवतु इन्द्रादितेजसा तुल्यं तेजस्तव भवत्वित्यर्थः। रामलक्ष्मणयोर्या धनुर्ज्या मौर्वी तस्या यो घोषः शब्दः तेन युक्तो मन्त्रः ब्रह्मास्त्रप्रयोगमन्त्रश्च तव जयं देयादेव ददात्वेव। ज्याघोषमन्त्र इति "शाकपार्थिवादयश्चे"ति युक्तपदलोपेन मध्यपदलोपी समासः, तेन रामलक्ष्मणयोर्धनुष्टङ्कारः ब्रह्मास्त्रप्रयोगमन्त्रश्च तव जयं ददातु इत्यर्थः।

अत्र अन्यदीयं तेजः कथमन्यस्य भवेदिति वस्तुसम्बन्धोऽसम्भवन् इन्द्रादीनां तेज इव तेजो भवतु इति बिम्बप्रतिबिम्बभावबोधनात् निदर्शनालङ्कारः। पूर्वार्द्धे यच्छब्दयो-रुत्तरवाक्यस्थितत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः, किन्तु देयादेव इत्यत्र नियमस्यानावश्यकत्वेऽपि एवशब्दोपादानात् अनियमे नियमाख्यदोषः, स तु 'दद्यादुद्धत-रामे'त्यादि पाठेन निरसनीयः।

शार्दूलविक्रीडितं वृत्तम् ॥२८॥

(त) लव इति। रथस्थ एव अति हि अत्यन्तमेव शोभसे, नाम इत्यहं सम्भावया-मीत्यर्थः। अतएव अत्यादरेण अतिबहुमानेन मां प्रति बहुमानप्रदर्शनार्थं रथादवतरणे-नेत्यर्थः कृतं कृतम् अलमलमिति सम्भ्रमे द्विरुक्तिः।

---

আরও যিনি তোমার বংশের উৎপাদক, সেই সূর্য্যদেব যুদ্ধে (বিজয় দান করিয়া) তোমাকে আনন্দিত করুন, যিনি তোমার গুরুজনবর্গেরও গুরু, সেই বশিষ্ঠদেবও তোমাকে আনন্দিত করুন। ইন্দ্রের, বিষ্ণুর, অগ্নির, বায়ুর এবং গরুড়ের বল তোমার হউক; আর রাম ও লক্ষ্মণের ধনুষ্টঙ্কারের মন্ত্র, তোমার জয় দান করুক ॥২৮॥

(ত) লব। কুমার! তুমি রথে থাকিয়াই অত্যন্ত শোভা পাইতেছিল; অতএব অতিরিক্ত আদর দেখাইবার প্রয়োজন নাই প্রয়োজন নাই।

चन्द्र। तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु [थ]।

लवः। आर्य्य! प्रत्यारोपय रथोपरि राजपुत्रम् [द]।

सुमन्त्रः। त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम् [ध]।

लवः। को विचारः स्वेषूपकरणेषु, किन्त्वरण्यसदो वयमनभ्यस्तरथचर्य्याः [न]।

सुमन्त्रः। जानासि वत्स! दर्पसौजन्ययोर्यथोचित-

---

(थ) चन्द्रेति। तर्हि मयि रथस्थे सति, महान् भागो महावीरत्वसूचितं भाग्यं यस्य स महाभागो भवानपीत्यर्थः। अलङ्करोतु आरोहणेन शोभयतु। भवादृशामारोहणेन रथ एवालङ्कृतः स्यादिति भावः।

(द) लव इति। चन्द्रकेतुकृतमभिवादनमवलोक्य सुमन्त्रस्य पूज्यत्वानुमानात् आर्य्य इति सम्बोधनम्। प्रत्यारोपय आरोहय। राजपुत्रं चन्द्रकेतुम्।

(ध) सुमन्त्र इति। अनुरुध्यस्व अनुसर परिपालयेत्यर्थः। अन्यं रथमारोहेत्यर्थः।

(न) लव इति। स्वेषु स्वकीयेषु उपकरणेषु व्यवहार्य्यद्रव्येषु को विचारो वितर्कः विचिकित्सेति यावत्, अभिन्नहृदयस्य चन्द्रकेतोर्यत् व्यवहार्य्यद्रव्यं निःसंशयं तत् स्वकीयमिव व्यवहर्त्तुमर्हाम्येवेति भावः, किन्तु अरण्यसदो वनवासिनो वयं "वाऽस्मदश्चे"ति बहुवचनम् अहमित्यर्थः अतएव न अभ्यस्ता पुनः पुनरारोहणादिना न शिक्षिता रथचर्य्या रथेन सञ्चरणं यैस्तथोक्ताः, अतएव रथारोहणेन योद्धुमशक्तत्वात् भवद्भिरङ्गीक्रियमाणमपि रथं नाङ्गीकरोमीति भावः।

(থ) চন্দ্রকেতু। তাহা হইলে মহাভাগও (আপনিও) অন্য রথ অলঙ্কৃত করুন।

(দ) লব। আর্য্য! (সুমন্ত্র!) রাজপুত্রকে রথের উপরে তুলুন।

(ধ) সুমন্ত্র। তুমিও চন্দ্রকেতুর বাক্য রক্ষা কর।

(ন) লব। নিজের ব্যবহার্য্য দ্রব্যে বিবেচনা করিবার ছিল কি; কিন্তু আমরা বনবাসী, তাই রথে বিচরণ করা আমাদের অভ্যাস নাই।

मीरयितुं (१) यदि पुनरीदृशं त्वामैक्ष्वाको (२) रामभद्रः पश्येत् तदाऽस्य स्नेहेन हृदयमभिष्यन्देत (प)।

लवः। आर्य्य! (३) सुजनः स राजर्षिः श्रूयते। (सलज्जमिव) (फ)।

वयमपि न खल्वेवंप्राया: क्रतुप्रविघातिन: (४)
क इह च (५) गुणैस्तं राजानं न वा बहु मन्यते।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥२८॥

(प) सुमन्त्र इति। दर्पसौजन्ययोरेव विनययो: यथोचितम् अनुरूपम् ईरयितुं वक्तुं जानासि क्षमसे इत्यर्थः। को विचार: स्वं षु उपकरणेषु इत्यनेन अतीवसौजन्यमाविष्कृतम् अथ च परवाक्येन रथं विनापि रथिभिः सार्द्धमहं योद्धुमर्हामीति दर्पो ध्वनित इति भावः। ईदृशं शौर्य्यसौजन्यदर्पादिवीरोचितगुणालङ्कृतम्। अभिष्यन्देत आप्लुतं भवेत्। रामभद्रस्यातीवगुणग्राहित्वादिति भावः।

(फ) लव इति। आर्य्येति सुमन्त्रस्य सम्बोधनम्। राजा सन् ऋषि: ऋषिवत् संयमीति राजर्षि: स रामचन्द्रः सुजनः दयादाक्षिण्यशौर्य्यधैर्य्यादिसकलवीरगुणालङ्कृत: सज्जन इत्यर्थः श्रूयते लोकपरम्परया रामायणसन्दर्भे चेति शेषः। सलज्जमिव एवं सर्वगुणाकरस्यापि रामस्य अश्वावरोधेन अश्वमेधविघ्नाचरणात् लज्जया सहितमिव।

---

(প) সুমন্ত্র। বৎস! তুমি, অহঙ্কার অথ চ বিনয়ের উপযুক্ত বলিতে জান বটে। ইক্ষ্বাকুবংশীয় রামভদ্র, যদি এইরূপ তোমাকে দেখিতেন; তবে ইঁহার হৃদয় স্নেহে গলিয়া যাইত।

(ফ) লব। আর্য্য! সেই রাজর্ষিকে সুজন বলিয়া শুনিতে পাই। (লজ্জার সহিতই যেন) কিন্তু—

(१) आचरितुमिति पाठान्तरम्। (२) ऐक्ष्वाको राजा रामभद्र इति पाठभेदः। (३) मान्य इति पाठान्तरम्। (४) क्रतुप्रतिघातिन इति पाठभेदः। (५) क इव च इति भिन्नः पाठः।

चन्द्र। (सस्मितम्) किन्तु, भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ? (ब)

नतु यदि रामभद्रः सुजन इति स्म ब्रूते, तदा तस्य यज्ञविघ्नाचरणं तवातीवान्याय्यमित्याह वयमिति। वयमपि "वाजदर्षे"ति बहुवचनम् अहमपीत्यर्थः प्रायेण बाहुल्येन एवमिति एवंप्राया एवंविधाः क्रतुं यागं प्रविघ्नन्तीति क्रतुप्रविघातिनः राक्षसादिवत् स्वभावत एव यज्ञविघ्नकरा न खलु भवाम इत्यर्थः। तर्हि किं रामं दुर्जनं मत्वा तं प्रति विद्वेषात् मेध्याश्वो गृहीत इत्याह क इति। किञ्चेति चार्थः। इह जगति को जनः गुणैः दयादाक्षिण्यशौर्य्यादिभिः तं राजानं रामं न वा बहु मन्यते आद्रियते अपि तु सर्व एव तं बहुमन्यत इत्यर्थः, अतएवाहमपि तं बहुमन्य एवेति भावः। ननु तर्हि कथं मेध्याश्वो धृत इत्याह तदपीति। तदपि तथापि तुरङ्गमरक्षिणाम् अश्वमेधीयाश्वरक्षिणां स व्याहारः खलु "अयमश्वः पताकेय"मित्याद्युक्तिरेव अखिलानां सर्वेषां अन्याषां क्षत्रियाणाम् आक्षेपेण अवमाननया या प्रचण्डता नितान्तक्रुद्धता तथा मे मम विकृतिं मनोविकारम् अश्वधारण-प्रवृत्तिमित्यर्थः अकरोत् उत्पादितवान्। सर्वेषां क्षत्रियाणामवमाननाविधानादेव अश्वो धृतः, न तु जयलिप्सया न वा सहजदुर्जनतयेति भावः।

अत्र द्वितीयचरणे अप्रस्तुतात् जनसामान्यात् प्रस्तुतस्य विशेषस्य लवस्य प्रतीतेरप्रस्तुत-प्रशंसालङ्कारः स च अर्थापत्त्युत्थापित इति सङ्करः। तदपीति तथापीत्यर्थे अवाचक-मित्यवाचकत्वदोष इति वदन्ति।

"चण्डस्त्वत्यन्तकोपन" इत्यमरः। हरिणी वृत्तम् ॥२९॥

(ब) चन्द्रेति। तातस्य पितृपर्य्यायस्य रामचन्द्रस्य प्रतापोत्कर्षेऽपि प्रभावाति-शयेऽपि अमर्षः असहिष्णुता वर्त्तत इति शेषः। यस्य कस्यचित् साधारणस्य प्रतापोत्कर्षे भवादृशमहावीरस्य अमर्षः सम्भाव्यत एव किन्तु जगत्स्वीकृते तातप्रतापोत्कर्षे तवामर्षः अज्ञानविजृम्भित एवेति भावः।

আমরাও এইরূপ যজ্ঞধ্বংসী নহি; এই জগতে কোন্ ব্যক্তি, সেই রাজাকে দয়াদাক্ষিণ্যাদিগুণে আদর না করে? তথাপি অশ্বরক্ষকদিগের সেই উক্তিই, সকল ক্ষত্রিয়ের অবমাননা করিয়াছে বলিয়া ক্রোধে আমার বিকার জন্মাইয়াছিল ॥২৯॥

" लवः। अस्त्वित्थामर्षो (१) मा भूद्वा, एतत्तु पृच्छामि, दान्तं हि राघवं राजानं शृणुमः, स किल नात्मना दृप्यति, नाप्यस्य प्रजासु दृप्तत्वं जायते, (२) तत् किमस्य मनुष्या राक्षसीं वाचं वदन्ति (भ)।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥३०॥

(भ) लव इति। इह रामप्रतापोत्कर्षे अमर्षः क्रोधेन मम असहिष्णुता अस्तु मा भूद्वा भवतु न भवतु वा, तत्र मम किमपि न प्रष्टव्यमस्तीति भावः। तु किन्तु, एतत् वक्ष्यमाणं पृच्छामि भवन्तमिति शेषः। राघवं राजानं रामचन्द्रं दान्तं हि दान्तमेव इन्द्रियदमनशीलमेव अनुद्धतवादिनमेवेत्यर्थः शृणुमः लोकपरम्परया रामायणसन्दर्भे चेति शेषः। किलेति वार्त्तायाम्। स रामचन्द्रः आत्मना स्वयं स्वमुखेनेत्यर्थः न दृप्यति न दर्पं करोति। अस्य रामस्य प्रजासु प्रकृतिषु दृप्तत्वं गर्वितत्वं नापि न वा जायते जनव्यवहाराणां प्रधानानुयायित्वादिति भावः। तत् तस्मात् रामस्य तत्प्रजानाञ्च अनुद्धतत्वाद्धेतोरित्यर्थः अस्य रामस्य मनुष्याः अधिकृतसैनिकाः राक्षसीं राक्षसवत् दर्पोद्धताम्। दान्तस्य प्रभोरधिकृतपुरुषाणां दान्तत्वमेवोचितमिति भावः।

आत्मनेति प्रकृत्यादित्वात् करणे तृतीया।

नन्वस्माकं सैनिका राक्षसीं वाचं वदन्ति तेन तव किमायाति याति चेत्याह ऋषय

---

(ব) চন্দ্রকেতু। (ঈষৎ হাস্যের সহিত) পিতার (রামচন্দ্রের) প্রতাপের উৎকর্ষ শুনিলেও আপনার অসহিষ্ণুতা হয় না কি ?

(ভ) লব। এ বিষয়ে আমার অসহিষ্ণুতা হউক, বা না হউক ; কিন্তু ইহা জিজ্ঞাসা করি, রঘুবংশীয় সেই রাজাকে জিতেন্দ্রিয় বলিয়া শুনি ; সুতরাং তিনি নিজে অহঙ্কার করেন না, ইঁহার প্রজার মধ্যেও অহঙ্কার জন্মে না, তবে ইঁহার লোকগুলি রাক্ষসের বাক্য বলে কেন ?

---

(१) क्वचित् इत्थमव्दो नास्ति। (२) नाप्यस्य प्रजा दृप्यन्ती जायन्ते इति पाठान्तरम्।

इति ह स्म तां निन्दन्ति, अथेतरामभिष्टुवन्ति (म)।

इति। ऋषयो वस्तुस्वभावाभिज्ञा मुनयः उन्मत्त उन्मादरोगग्रस्तः दृप्तः वीरत्वेन धनादिना वा गर्वितः तयोः वाचं गर्वोद्धतं वाक्यमित्यर्थः राक्षसीं राक्षसोचितां निष्ठुराम् आहु-र्वदन्ति। ननु वदन्ति, वदन्तु नाम तेन किमित्याह सेति। सा राक्षसी वाक् सर्ववैराणां सर्वविधानां शत्रुतानां योनिः कारणम्, तथा सा हि सैव वाक् लोकस्य जनस्य निर्ऋतिः निर्गं भवति ऋतिः शुभं यस्याः सकाशात् सा निर्ऋतिः अलक्ष्मीः अलक्ष्मीरूपेत्यर्थः। तथा च लोका दर्पोद्धता वाचमाकर्ण्यैव शत्रुतामारभन्ते, तेन च अलक्ष्मीर्दर्पोद्धतवादिनः स्वाश्रयस्य सर्वविधममङ्गलं घटयतीति भावः।

अत्र "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इत्यादिवत् सा वाक् निर्ऋति-रिति समासाभावेऽपि निरङ्गं केवलरूपकमलङ्कारः। "सा योनिः सर्ववैराणा"मित्यनेन युष्मत्सैनिकानां दर्पोद्धतां वाचमाकर्ण्यैव मिथ्याश्रमहं धृतवानस्मीति वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः।

"ऋतिर्गतौ घृणायाञ्च स्पर्द्धायाञ्च शुभेऽपि चे"ति रभसः। "स्यादलक्ष्मीस्तु निर्ऋति"-रित्यमरः।

निर्ऋतिरिति नेरिकारस्य संयोगपूर्ववत् दृढोच्चारणात् न छन्दोभङ्ग इति दिक् ॥३०॥

(म) इतीति। इति ह इत उपदेशपरम्परासूचकमव्ययम्। अतोऽर्थे अस्मच्छब्दः। तां दर्पोक्तिं निन्दन्ति स्म। अथेति वाक्यान्तरारम्भे। इतरां तद्भिन्नां विनयशान्तामित्यर्थः वाचम् अभिष्टुवन्ति स्म प्रशशंसुः मुनय इति शेषः। मुनयो दर्पोक्तिं निनिन्दुः विनय-शान्तोक्तिञ्च प्रशशंसुरित्यस्माकं परम्परोपदेश इति सरलार्थः।

"पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्यय"मित्यमरः।

মুনিগণ উন্মত্ত ও গর্বিত লোকের বাক্যকে রাক্ষসের বাক্য বলিয়া থাকেন; কারণ, সেই বাক্যই সর্ব্বপ্রকার শত্রুতার হেতু এবং সেই বাক্যই লোকের অলক্ষ্মীস্বরূপ ॥৩০॥

(ম) এই জন্যই লোকে গুরুপরম্পরাক্রমে সেই বাক্যের নিন্দা করে, আবার তদ্বিপরীত বাক্যের প্রশংসা করে।

कामान् दुग्धे, विप्रकर्षत्यलक्ष्मीं
कीर्त्तिं सूते, दुष्कृतं या हिनस्ति।
तान्त्वाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥३१॥

---

प्रशंसाप्रकारमाह कामानिति। या सूनृता वाक् कामान् मनोरथान् दुग्धे परिपूरयति, येन हि सूनृतवाचा मनुष्यन्तः श्रोतारो वक्तुरभिलाषान् पूरयितुं यतन्त इति भावः। अलक्ष्मीम् अशुभाधिष्ठात्री देवी विप्रकर्षति दूरीकरोति सकलकल्याणनिदानत्वादिति भावः। कीर्त्तिं यशः सूते समुत्पादयति, येन च तादृशं वाचं शृण्वन्तः सम्मोदमाना जना लोकेषु 'एष खल्वतीवसज्जन'इति नाम प्रथयन्तीति भावः। दुष्कृतं सञ्चितपापं हिनस्ति विनाशयति च, श्रोतृविशेषाणां प्रीतिसम्पादनेन तेषामाशीर्वादादिना नूतनपुण्यजननादिति भावः। धीराः पण्डिताः, एतां मया निर्द्दिश्यमानां तां मङ्गलानां निखिलकुशलानां मातरं जनयित्रीं सूनृतां सत्यप्रियां वाचं धेनुं कामधेनुतुल्याञ्चापि आहुः वदन्ति मुनय इति शेषः। कामधेनुरिव सूनृता वाक् सकलकामनापूरयित्रीत्यर्थः।

अत्र प्रथमार्द्धे दुग्ध इत्याद्यनेकक्रियाणां या इत्येककर्त्तृकारकत्वात् दीपकमलङ्कारः, द्वितीयार्द्धे धेनुशब्दस्य धेनुसादृश्यार्थे पर्य्यवसानात् असम्भवद्वस्तुसम्बन्धा निदर्शना, अनयोः संसृष्टिः। अपिचशब्देन 'ऋषय उभ्रमदृतयोर्वाचं गाचवीमाहुः', सूनृतां वाचञ्चापि धेनुमाहु'रिति समुच्चयार्थद्योतनात् न अपुष्टार्थत्वदोषः।

"सूनृतं प्रिये। सत्ये" इत्यमरः।

शालिनी वृत्तम् ॥३१॥

---

সত্য অথচ প্রিয় যে বাক্য, সমস্ত অভিলাষ পূর্ণ করে, অলক্ষ্মীকে দূর করে, যশ উৎপাদন করে এবং পাপ নষ্ট করে; পণ্ডিতগণ সেই এই সত্য প্রিয় বাক্যকে সর্ব্বপ্রকার মঙ্গলের উৎপাদক কামধেনু বলিয়া থাকেন ॥৩১॥

सुमन्त्रः। परिपूतस्वभावोऽयं कुमारः प्राचेतसान्तेवासी वदत्यभिसम्पन्नमार्षेण संस्कारेण (१) (य)।

लवः। यत्पुनश्चन्द्रकेतो! वदसि, किन्नु भवतस्तात-प्रतापोत्कर्षेऽप्यमर्ष इति तत् पृच्छामि, किं व्यवस्थितविषयाः क्षत्रधर्म्मा इति (र)।

---

(य) सुमन्त्र इति। प्राचेतसस्य वाल्मीकेः अन्तेवासी छात्रः, अतएव परिपूतस्वभावः पवित्रचरित्रः अयं कुमारो बालकः आर्षेण ऋषितुल्येन संस्कारेण अनुभवेन अभिसम्पन्नं संयुक्तं सर्वज्ञमुनितुल्यानुभवप्रयुक्तमित्यर्थः वचनमिति शेषः वदति। येन हि तादृशी युक्तिपरम्परा अस्य वचने प्रतिभाति, अतएवासाधारणोऽयं बालक इति भावः।

"संस्कारः।—अनुभव" इति शब्दकल्पद्रुमः।

(र) लव इति। नन्वस्मत्सैनिकानां शिरश्छेत्स्यामि इति, यत् सर्वत्र इमामेव वाचं वदेदिति; तेन च परैर्वैरं स्यादिति चेदुच्यते तत्त्वया आरब्धमेव इत्याशङ्क्य 'किन्नु, भवत' इत्यादि चन्द्रकेतोर्वाक्यमेव खण्डयितुमुपक्रमते यत्पुनरित्यादि। पुनः किन्तु, हे चन्द्रकेतो! इति इत्यन्तं यत् त्वं वदसि, तत् पृच्छामि तव जिज्ञासे इत्यर्थः। क्षत्रधर्म्माः प्रतापशौर्य्यादयः क्षत्रियस्वभावाः किं व्यवस्थितः विधिना निर्द्दिष्टः विषय आश्रयपदार्थो येषां ते तथोक्ताः। सर्वातिशायी प्रतापः लोकोत्तरञ्च शौर्य्यं किं रामचन्द्र एव विधिना निर्द्दिष्टम् अपि तु कथमपि नेत्यर्थः। प्रतापशौर्य्यादीनामदृष्टविशेषसापेक्षतया रामादन्येऽपि अदृष्टविशेषवन्तः प्रतापशौर्य्यादिमन्तो भवितुमर्हन्तीति भावः। अहमपि महाप्रतापशाली महावीरश्चेति ध्वनिः। इतिशब्दस्य पृच्छामीत्यनेनान्वयः।

---

(য) সুমন্ত্র। বাল্মীকির ছাত্র, পবিত্র স্বভাব এই বালকটী, মুনিগণের সমান-সংস্কারসম্পন্ন বাক্য বলিতেছে।

(র) লব। চন্দ্রকেতু! তুমি আবার যে বলিলে—"পিতার প্রতাপের

---

(१) परिपूतेत्यत्र अपरिपूत इति पाठान्तरम्। वदतीत्यतः परं अयं इत्यधिकः पाठः क्वापि।

सुमन्त्रः। नैव खलु जानासि तं देवमैक्ष्वाकम्, यदेवं वदसि ; (१) तद्विरम विरमातिप्रसङ्गात् (२) (ल)।

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया।
जामदग्न्यस्य दमने (३) नैवं निर्वक्तु-(४) मर्हसि ॥३२॥

(ल) सुमन्त्र इति। वाक्यालङ्कारे खलुशब्दः। ऐक्ष्वाकम् इक्ष्वाकुकुलोत्पन्नं तं देवं रामचन्द्रं नैव जानासि लोकोत्तरवीरत्वेन नैव परिचिनोषि, यत् यस्मादपरिचयाद्धेतोः एवं सदर्पं वदसि। यदि रामस्य यथार्थपरिचयस्तवासीत् तदा नैवं वक्तुं प्रक्रंस्या इति भावः। तत् तस्मात् अज्ञानविजृम्भितत्वाद्धेतोः अतिप्रसङ्गात् सम्भवातिरिक्तादौद्धत्यादित्यर्थः विरम विरमेत्यवधारणार्थे द्विरुक्तिः।

सैनिकानामिति। त्वया सैनिकानाम् अस्मत्सैन्यानां प्रमाथेन विमर्द्दनेन पराजयेनेति यावत् सत्यं यथार्थमेव ओजायितम् ओजस्विवदाचरितं महावीरेणेव विक्रान्तमित्यर्थः। बालकस्त्वमेकाकी सर्वानस्मत्सैन्यान् यत् पराजितवान् तदेव तव महाविक्रमनिदर्शनं तत्राप्माकं प्रतिवादो नास्तीति भावः। किन्तु जामदग्न्यस्य एकविंशतिवारसर्वक्षत्रान्तकारित्वेन सुप्रसिद्धमहावीरस्य जमदग्निपुत्रस्य परशुरामस्य दमने विजेतरि रामे रामविषय इत्यर्थः एवम् इत्थम्, रामसदृशा अपरेऽपि सन्ति वीरा इति भावाभिव्यञ्जकं वाक्यमित्यर्थः निर्वक्तुं निश्चयेन भाषितुं नार्हसि। तथात्वे तव महती विपदापद्येतेति भावः।

---

উৎকর্ষ শুনিলেও আপনার অসহিষ্ণুতা হয় না কি?" তাহাতে আমি জিজ্ঞাসা করি, ক্ষত্রিয়ের ধর্ম্ম কি নির্দ্দিষ্ট বিষয়?

(ল) সুমন্ত্র। ইক্ষ্বাকুবংশসম্ভূত সেই রাজা রামচন্দ্রকে তুমি মোটেই জান না, যেহেতু এইরূপ বলিতেছ ; অতএব অসম্ভব ঔদ্ধত্য হইতে বিরত হও, বিরত হও।

---

(१) यदेवं वदसीति पाठो नास्ति क्वचित्। (२) विरम्यतामतिप्रसङ्गादिति पाठान्तरम्। (३) रामेऽप्यप्रमाथेन इति पाठभेदः। (४) नातिनिर्वक्तुं, नहि निर्वक्ष्यसीति विभिन्नौ पाठौ।

लवः। (सहासम्) जामदग्न्यस्यापि (१) दमनः स राजेति कोऽयमुच्चैर्वादः (ब)।

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
बाह्वोर्वीर्य्यं यत्तु तत् क्षत्रियाणाम्।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः? ॥३३॥

---

अत्र काक्‌प्रत्ययप्रतिपादितोपमालङ्कारः।

औजसेवाचरितमित्यौजायितं क्वचि "ओजसोऽप्सरसश्चैव" इति सलोपः।

"ओजःशब्दो वृत्तिविषये तद्वती"ति दीक्षितः। दमयतीति दमनः नन्द्यादित्वं ॥३२॥

(ब) लव इति। हासेन अयुक्तवाक्यश्रवणादुपहासेन सह वर्त्तमानमिति सहासम्। स राजा रामः। दमनो विजेता। इत्ययं क उच्चैर्वादः का नाम महती प्रशंसा अपि तु कापि नेत्यर्थः।

तत्र कारणमुपन्यस्यति सिद्धमिति। एतत् हि एतदेव सिद्धं प्रसिद्धं यत् द्विजानां ब्राह्मणानां वीर्य्यं बलं वाचि वाक्य एव वर्त्तत इति शेषः। ब्राह्मणास्तपसा दुर्बलदेहाः सिद्धवाचश्च सन्तः शापेन दमयितुमर्हन्ति न तु बाहुबलेन ते महावीरा इति भावः। तु किन्तु बाह्वोर्भुजयोः यत् वीर्य्यं तत् क्षत्रियाणां न तु ब्राह्मणानामिति भावः। स ब्राह्मणो जामदग्न्यः शस्त्रग्राही दुर्बलबाहुना अस्त्रधारी, अतएव तस्मिन् दुर्बलबाहुना शस्त्रचालना-समर्थे ब्राह्मणे दान्ते विजिते सति तस्य राज्ञो विजयिनो रामस्य का स्तुतिः प्रशंसा,

সৈন্যগণের পরাজয় করিয়া সত্যই তুমি তেজস্বীর ন্যায় আচরণ করিয়াছ; কিন্তু পরশুরামেরও দমনকারী রামচন্দ্রের প্রতি এরূপ বলিতে পার না ॥৩২॥

(ব) লব। (হাস্যের সহিত) সেই রাজা পরশুরামেরও দমনকারী, এটা একটা উচ্চ কণ্ঠে বলিবার বাক্য কি। (কারণ)

---

(१) क्वचित् पुस्तके अपिशब्दो नास्ति।

চন্দ্র। (সোন্মাথমিব) আর্য্য! আর্য্য! কৃতমুত্তরোত্তরেণ (য)।

কাঽপ্যেষ সম্প্রতি নবঃ পুরুষাবতারো
বীরো (১) ন যস্য ভগবান্ ভৃগুনন্দনোঽপি।
পর্য্যাপ্তসপ্তভুবনাভয়দক্ষিণানি
পুণ্যানি তাতচরিতানি চ যো ন বেদ ॥৩৪॥

অপি তু কাপি নেত্যর্থঃ। রামশ্চেত্ কশ্চিদন্যং মহাবাহুং ক্ষত্রিয়ং বিজেতুমশক্ষ্যত তদৈব ভবত্কৃতপ্রশংসাযোগ্যোঽভবিষ্যদিতি ভাবঃ।

অত্র 'বাহ্বোর্বীর্য্যং ক্ষত্রিয়াণা'মিত্যনেন 'ন তু ব্রাহ্মণানা'মিত্যর্থস্যান্যব্যপোহাত আর্থী পরিসংখ্যালঙ্কারঃ।

মালিনী বৃত্তম্ ॥৩৩॥

(য) চন্দ্রেতি। উন্মাথেন মর্ম্মবেদনয়া সহ বর্ত্তমানমিতি সোন্মাথম্। আর্য্য আর্য্যেতি ক্রোধে দ্বিরুক্তিঃ। উত্তরং পরং যদুত্তরং প্রতিবাক্যং তেন কৃতম্ অলম্ ইতঃ পরমস্য প্রতিবচনং ন দেয়মিত্যর্থঃ। সর্ববিদিতবৃত্তান্তানভিজ্ঞেন কেবলমাহঙ্কারোক্তিকারিণা অনেন বালকেন সহ উক্তিপ্রত্যুক্তিকরণে স্বস্যৈব লাঘবং স্যাদিতি ভাবঃ।

কেবলমাহঙ্কারোক্তিকারিত্বং সর্ববিদিতবৃত্তান্তানভিজ্ঞত্বঞ্চ লবস্য প্রতিপাদয়তি কোঽপীতি। সম্প্রতি কোঽপি অনির্ব্বচনীয়ঃ পদার্থঃ, নবঃ অপূর্ব্বঃ এষ পুরুষাবতারঃ নরঃ

ইহাই প্রসিদ্ধ রহিয়াছে যে, ব্রাহ্মণগণের বল, বাক্য; কিন্তু বাহু বাহুবল, তাহা ক্ষত্রিয়দিগের। পরশুরাম ব্রাহ্মণ হইয়া অস্ত্র ধারণ করিয়াছিলেন, তাঁহাকে দমন করিয়া থাকিলে, তাহাতে সে রাজার প্রশংসা কি? ॥৩৩॥

(য) চন্দ্রকেতু। (মর্ম্মবেদনার সহিত) আর্য্য! আর্য্য! এ কথার পর আর উত্তরের প্রয়োজন নাই।

(১) স্রাঘ্য ইতি পাঠান্তরম্।

लवः। को हि रघुपतेश्चरितं महिमानञ्च न जानाति, यदि नाम किञ्चिद्वक्तव्यमस्ति, अथवा शान्तम् (ष)।

सन् अवतीर्णः। सोल्लुण्ठनोक्तिरियम्। तत्कारणमाह वीर इति। यस्य समीपे भगवान् महामाहात्म्यशाली भृगुनन्दनोऽपि परशुरामोऽपि न वीरः, यः निःक्षत्रकर्त्ता जगतीपतीनां हन्तारं जगत्स्वीकृतं महावीरं परशुराममपि वीरत्वेन न गणयतीत्यर्थः। यो हि वाचा न भावं व्यनक्ति ततोऽधिकोऽहङ्कारी को नाम भवितुमर्हति अतएव महादाम्भिकोऽयमवज्ञेय एवेति भावः। यस्य पर्य्याप्ता यथेप्सिता सप्तभुवनस्य भूरादिसप्तलोकस्य अभयदक्षिणा सव शबलवाहनस्य रावणस्य वधेन अभयदानं येषु तानि तथाक्तानि, पुण्यानि पवित्राणि तातस्य पितृपर्य्यायस्य रामस्य चरितानि कर्म्माणि न वेद जानाति; अतएव सर्वविदितवृत्तान्तानभिज्ञोऽप्ययमिति भावः।

अत्र लवस्य महादाम्भिकत्वम् अनभिज्ञत्वञ्च प्रतीयमानं भङ्गीविशेषेणाभिहितमिति पर्य्यायोक्तमलङ्कारः, तथा 'भग भृगु' इति 'पर्य्याप्तसप्त'ेति व्यञ्जनानामनेकधासकृत्साम्यात् छेकानुप्रासश्च, इत्यनयोः संसृष्टिः। यस्येति यच्छब्दस्य उत्तरवाक्यस्थत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः।

"कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सित"मित्यमरः।

अवतार इति "दिहिलिहि"त्यादौ चकारात् णप्रत्ययः कर्त्तरि, ततस्तेन कर्म्मधारयः, सप्तानां भुवनानां समाहार इति सप्तभुवनं भुवनशब्दस्य पात्रादित्वात् न ईप्रत्ययः। दानार्थे दक्षिणाशब्दो लाक्षणिकः।

वसन्ततिलका वृत्तम् ॥३४॥

(ष) लव इति। वक्तव्यम् आलोचनीयम्। शान्तं विरतं भवतु तदालोचनमित्यर्थः।

বর্ত্তমানে ইনি অনির্ব্বচনীয় নূতন পুরুষাবতার হইয়াছেন কিনা যাহার নিকট ভগবান পরশুরামও বীর নহেন। যাহাতে সপ্ত লোকের অভয়দান পর্য্যাপ্তরূপে হইয়াছিল, সেই পবিত্র রামচরিত্রও যিনি জানেন না ৷৩৪॥

(ষ) লব। কোন্ ব্যক্তি রামের চরিত্র ও মাহাত্ম্য জানে না? যদিও কিছু বক্তব্য আছে; অথবা থাক্।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु, किं वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो (१) लोके महान्तो हि ते।
यानि त्रीण्यपराङ्मुखान्यपि (२) पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥३५॥

ननु कथं शान्तम्, आलोच्यतामेव रामचरितमित्याह वृद्धा इति। वृद्धा वयोवृद्धास्ते रामा गौरवाद्बहुवचनम्, अतएव विचारणीयानि समालोचनीयानि चरितानि कर्म्माणि येषां ते, न भवन्तीत्यर्थः, अथवा किं वर्ण्यते किं वर्णनीयमस्ति, रामस्य वीरचरित्र-वर्णनारम्भे दोषाविष्कार एव स्यादिति भावः। तदेव दर्शयति सुन्देत्यादि। सुन्दस्य सुन्दनामकस्य असुरस्य स्त्री भार्य्या ताड़का, तस्या दमने वधे कृते सतीत्यर्थः अखण्डं परिपूर्णं यशो येषां ते अखण्डयशसः ते रामाः गौरवाद्बहुवचनं लोके जगति महान्तो हि महात्मान एव पूज्या एवेत्यर्थः। स्त्रीहत्यारूपं लोकशास्त्रगर्हितं कार्य्यं सम्पादित-वतोऽपि रामस्य यशो न कलुषितम्, किन्तु जगति जनैः स परिपूज्यते इति सोल्लुण्ठनोक्तिः। खरस्य तदाख्यस्य महावीरराक्षसस्य आयोधने युद्धे यानि अपि त्रीणि अपराङ्मुखानि अविमुखानि अदर्शितपृष्ठानीत्यर्थः यावत् पदानि पश्चाद्भिन्नि पदक्षेपा आसन् अभवन्, तथा यद्वा यच्च इन्द्रसूनोर्देवराजतनयस्य वालिनो निधने विनाशे कौशलं नैपुण्यं रामस्य आसीदिति शेषः, तत्रापि तेष्वपि रामस्य चरितेषु जनो लोकोऽभिज्ञः ज्ञानवान्। न केवलं रावणादिनिधनादिना चमत्कारीणि रामचरितानि जनो जानाति, अपि तु स्त्रीहत्या, खरसमरे पलायनकल्पमपसरणम्, सुग्रीवेण सार्द्धं युद्धव्यापृतस्य वालिनो विनाशश्च एतानि पापविशेषकलुषितान्यपि रामचरितानि जनो जानात्येवेति अपिशब्दस्यार्थः। स्त्रीहत्या-रूपबीभत्सकर्म्माचरणात् रामस्य चेतसोऽनौदार्य्यं खरसमरे पश्चादपसरणात् भीरुताप्रकाशः छलेन वालिनो निधनं भीतिद्योतकं मितान्तमन्याय्यञ्चेति रामचरित्रदोषा इति भावः।

अत्र विवक्षितस्य रामदोषस्य निष्ठान्सत्यनेन निषेधाभावात् वक्ष्यमाणगत आक्षेपा-लङ्कारः पदार्थहेतुकेन काव्यलिङ्गेन सङ्कीर्य्यते।

---

(१) अकुण्ठयशस इति पाठभेदः। (२) अकुतोभयान्यपीति पाठान्तरम्।

तवेति तेष्विति बहुवचनान्तात् वप्रत्ययः।

स्त्रीहत्यायां पापमाह याज्ञवल्क्यवचनं तिथितत्त्वधृतवचनञ्च—

"शरणागतबालस्त्री हिंसकान् संवसेन्न तु।

चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥"

"अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि।"

खरयुद्धे रामस्य विपदापसर्पणप्रमाणं यथा रामायणे—

"विकलः स कृतो बाणैः खरो रामेण संयुगे।

मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम्॥

तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिराप्लुतम्।

अपासर्पद्‌द्विविपदं किञ्चित्त्वरितविक्रमः॥"

"बाणक्षेपावकाशो यथा न भवति तथोपर्य्यापतन्तं खरं दृष्टा अत्यासन्नो धनुर्व्यापारो न स्यादिति स्वशरीरे तद्रुधिरपातभिया च द्वित्राणि पदानि त्वरितपदन्यासो बाणं सन्दधदेव पृष्ठतोऽपासर्प"दिति रामानुजः। लवस्तु "आत्मरक्षार्थमेव द्विविपदापसर्पण"मिति उक्तरामायणवचनार्थमवधार्य्य तत्र पलायनमिव मन्यमानः कटाक्षितवानित्यवधेयम्। तत्र युद्धे क्षत्रियाणां पलायनं मनुना निषिद्धं यथा—

"समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः।

न निवर्त्तेत संग्रामात् क्षात्रं धर्म्ममनुस्मरन्॥"

सुग्रीवेण सह युध्यमानो बाली प्रच्छन्नवर्त्तिना रामेण निहतः। तदुक्तं रामायणे—

"हीयमानमथापश्यन् सुग्रीवं वानरेश्वरम्।

प्रेक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः॥

ततो रामो महातेजा आर्त्तं दृष्टा हरीश्वरम्।

स शरं वीक्षते वीरो बालिनो वधकाङ्क्षया॥"

* * *

"मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः।

राघवेण महाबाणो बालिवक्षसि पातितः॥"

चन्द्र। आः, तातापवादभिन्नमर्य्याद! अति हि नाम प्रगल्भसे (स)।

लवः। अये! मय्येव (१) भ्रुकुटीधरः संवृत्तः (ह)।

---

वृद्धस्यवधोऽपि मनुना निषिद्धः। तथा च इत्यादित्यधिकारे मनुः—

"नायुध्यमानं पश्यन्तं न परेण समागतम्॥"

शार्दूलविक्रीड़तं वृत्तम्॥३५॥

(स) चन्द्रेति। आ इति क्रोधसूचकमव्ययम्। तातस्य पितृपर्य्यायस्य रामस्य अपवादेन निन्दया भिन्ना लुप्ता नष्टेति यावत मर्य्यादा न्याय्यपथस्थितिर्यस्य तत्सम्बोधनम्। विनयावनतभावेनावस्थानयोग्यस्य सामान्यबालकस्य लवस्य जगत्स्वीकृतमहावीररामनिन्दया न्याय्यपथातिक्रमणमेव जातमिति भावः। अति हि अत्यन्तमेव प्रगल्भसे विकत्थसे रामनिन्दया दम्भं प्रकटयसीत्यर्थः। नामेत्यपि क्रोधसूचकम्। अतएव तवैतद्दर्पस्थानं मयावश्यमेव विध्वंसनीयमिति भावः।

"मर्य्यादा। न्याय्यपथस्थिति"रिति शब्दकल्पद्रुमः।

(ह) लव इति। अये इति सावज्ञसम्बोधने। मय्येव प्रत्यक्षगोचरयुष्मत्सर्वसैन्यविमर्द्दनकारिणि महावीर एवेत्यर्थः भ्रुकुटीधरः क्रोधेन भ्रूभङ्गकारी संवृत्तो जातः। अतएव तवाप्यस्याः साहसिकतायाः समुचितशास्तिविधानं मया कर्त्तव्यमिति भावः।

---

তাঁহারা প্রাচীন; সুতরাং তাঁহাদের চরিত্রের বিচার করা উচিত নহে; সেইভাবেই তাঁহারা থাকুন; অথবা কি বর্ণনা করিব! সুন্দাসুরের স্ত্রী তাড়কাকে বধ করিয়াও তাঁহারা জগতে অখণ্ড কীর্ত্তি ও মহাত্মাই হইয়াছেন। খরের সহিত যুদ্ধের সময় যে তিন পা অপরাঙ্মুখভাবে পিছনের দিকে সরিয়া ছিলেন; কিংবা বালিবধে যে নৈপুণ্য হইয়াছিল; সে বিষয়ও লোকে জানে॥৩৫॥

(স) চন্দ্রকেতু। আঃ ওরে; পিতার নিন্দাদ্বারা ন্যায্যপথাতিক্রমকারিন্! বড়ই অহঙ্কার প্রকাশ করিতেছ যে।

---

(১) আঃ কথং মথ্যেবেতি পাঠান্তরম্।

सुमन्त्रः। स्फुरितमनयोः क्रोधेन। तथाहि—(ख)

चूड़ामण्डलबन्धनं तरलयत्याकूतजो वेपथुः (१)
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य (२) कमलस्योद्भ्रान्तभृङ्गस्य च ॥२६॥

(ख) सुमन्त्र इति। अनयोः कुमारयोः क्रोधेन स्फुरितम् आविर्भूतम् स्फुरितमिति भावे क्तः। क्रोधः प्रकाशत इत्यर्थः। क्रोधप्रकाशं प्रतिपादयति तथाहीति।

चूडेति। आकूतजः परस्परप्रहाराभिप्रायजनितः कोपोत्पन्न इत्यर्थः वेपथुः कम्पः चूडामण्डलस्य केशपाशसमूहस्य बन्धनं संयमनं बद्धं शिखासमूहमित्यर्थः तरलयति कम्पयति, तथा स्वयम् आत्मना स्वभावत एवेत्यर्थः कोकनदच्छदस्य रक्तपद्मपत्रस्य किञ्चित्-सदृशे ईषत्समाने रक्तोत्पलतुल्यस्वाभाविककिञ्चिल्लोहितवर्णे इत्यर्थः नेत्रे चक्षुषी रज्यतः क्रोधेन रक्तागमादधिकलोहितवर्णे भवतः। तथा वक्त्रं मुखं कर्त्तृ अकाण्डे अनवसरे सहसेत्यर्थः ताण्डवितयोः नृत्यन्त्योः कम्पमानयोरित्यर्थः भ्रुवोः भ्रूद्वयस्य भङ्गेन पृथग्-भावेन भीषणभ्रूकुट्या इत्यर्थः, उत्कटं सुस्पष्टं लाञ्छनं कलङ्को यस्य तादृशस्य चन्द्रस्य, तथा उद्भ्रान्ता उपरि भ्रमन्तः भृङ्गा भ्रमरा यस्य यस्य उद्भ्रान्तभृङ्गस्य कमलस्य पद्मस्य च कान्तिं शोभां धत्ते वहति। अनयोर्वदनद्वयं चन्द्रपद्माभ्यां सदृशं नयनताराचतुष्टयञ्च चन्द्रकलङ्कभ्रमरैस्तुल्यमित्यर्थः। एभिर्लिङ्गैरनयोः कोपोऽनुमीयते, तेन च इदानीमेव समरारम्भो भवेदित्यवगम्यत इति भावः।

अत्र अन्यस्य कान्तिं कथमन्यो धत्त इति वस्तुसम्बन्धोऽसम्भवन् तत्सदृशकान्तिरिति बिम्बप्रतिबिम्बभावं बोधयतीति निदर्शनालङ्कारः, तथा तत्क्षतविच्छित्तिवशात् कम्प-

(ङ) लव। ওরে! আমার উপরেই ভ্রুকুটীধারী হইয়াছ!

(ক) সুমন্ত্র। ইহাদের ক্রোধ প্রকাশ পাইয়াছে। তাহার কারণ,-

---

(१) क्रोधेनोद्धूतधूतकुन्तलभरः सर्वाङ्गजो वेपथुरिति पाठभेदः।

(२) उद्भटलाञ्छनस्येति पाठान्तरम्।

कुमारौ। तदितो विमर्द्दक्षमां भूमिमवतरावः (क)।

(इति निष्क्रान्ताः सर्वे।)

## इति कुमारविक्रमो नाम पञ्चमोऽङ्कः। (ख)

---

रक्तनेत्रताभ्रूभङ्गरूपैर्हेतुभिः कोपरूपसाध्यस्य ज्ञानादनुमानालङ्कारश्च, अनयोरङ्गाङ्गिभावेन सङ्करः, काण्डताण्डवेति व्यञ्जनानां सकृदनेकधासाम्याच्छेकानुप्रासश्चेति संसृष्टिः।

"आकूतं स्यादभिप्रायः" इति हलायुधः। "शिखा चूडा केशपाशी जूटिका जुटिकेत्यपि। शिरोमध्यस्थचूड़े" इति शब्दरत्नावली।

तरलयतीति तरलं करतीति इन्। ताण्डवमनयोर्जातमिति इतच्।

शार्दूलविक्रीडितं वृत्तम् ॥३६॥

(क) कुमाराविति। तत्तस्मात् तातापवादिनः तर्जयितुश्च तव शास्तिविधानस्यावश्यकत्वादित्यर्थः। इतः स्थानात्, विमर्द्दक्षमां युद्धोपयोगिनीं भूमिम् अवतरावो गच्छावः।

(ख) इतीति। कुमारयोः लवचन्द्रकेत्वोर्विक्रमो यत्र सः, पञ्चमोऽङ्कः समाप्त इति शेषः।

इति महामहोपाध्याय-महाकवि-भारताचार्य्य-

श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचिताया-

मुत्तररामचरितटीकायां सर्वार्थबोधिनीसमाख्यायां

पञ्चमाङ्कविवरणं समाप्तम् ॥०॥

পরস্পর প্রহারাভিপ্রায়জাত কম্প, শিখাসমূহের বন্ধন কম্পিত করিতেছে, স্বভাবতই রক্ত পদ্মপত্রের প্রায় সমান নয়নযুগল, আরও রক্তবর্ণ হইতেছে এবং হঠাৎ নৃত্যকারী ভ্রূযুগলের কৌটিল্য করায় ইঁহাদের মুখ দুইখানি সুস্পষ্ট চিহ্নসমন্বিত চন্দ্রের এবং ঊর্দ্ধে ভ্রমণকারী ভ্রমরান্বিত পদ্মের শোভা ধারণ করিতেছে ॥৩৬॥

(ক) লব ও চন্দ্রকেতু। তা, এখান হইতে যুদ্ধের উপযুক্ত স্থানে যাই।

(ইহার পর সকলে চলিয়া গেল।)

## (খ) কুমারবিক্রমনামে পঞ্চম অঙ্ক সমাপ্ত ॥০॥

# षष्ठोऽङ्कः ।

:o:-

(ततः प्रविशति विमानेनोज्ज्वलेन (१) विद्याधरमिथुनम् (क) ।

विद्याधरः । अहो ! खल्वनयोर्विकर्त्तनकुलकुमारयोरकाण्ड-कलहप्रचण्डयोरुद्योतितचारुलक्ष्मीकयो-(२) रद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तचरितानि । तथाहि प्रिये ! पश्य पश्य—(ख)

---

(क) तत इति । विद्याधरः कामरूपी खेचरः देवयोनिविशेषः । विद्याधरी च विद्याधरश्चेति विद्याधरौ, तयोर्मिथुनं युग्मं विद्याधरदम्पती इत्यर्थः । उज्ज्वलेन उपकरणोत्कर्षात् दीप्यमानेन, विमानेन व्योमयानेन ।

(ख) विद्याधर इति । अहो आश्चर्य्यं, खलु वाक्यालङ्कारे । अकाण्डे अनवसरे यः कलहः समरः तेन प्रचण्डयोरुग्रयोः, तथा उद्योतिता प्रकाशिता चार्वी लक्ष्मीः वीरत्व-व्यञ्जिका अविग्रश्रीर्ययोः तयोः, अनयोर्दृश्यमानयोः, विकर्त्तनकुलकुमारयोः सूर्य्यवंशीय-बालकयोः, चन्द्रकेतुलवयोः, अद्भुतेन विस्मयेन उद्भ्रान्ता अस्थिरान्तःकरणाः तारतम्यकरणा-समर्था इत्यर्थः देवासुराः देवदानवा यैस्तानि, विक्रान्तचरितानि विक्रमप्रकाशकयुधप्रयोग-व्यापाराः । अनयोः सुदारुणसमरव्यापारमवलोक्य सर्वे सुरासुराः तारतम्यकरणासमर्थाः सन्तो बलवद्विस्मयापन्ना इति भावः । तथाहि तमेव विस्मयकरप्रकारं आनीतीत्यर्थः । पश्य पश्येति विस्मये द्विरुक्तिः ।

---

(क) (তদনন্তর উজ্জ্বল বিমানে আরোহণ করিয়া বিদ্যাধরদম্পতির প্রবেশ ।)

(খ) বিদ্যাধর। সূর্য্যবংশীয় এই বালক দুইটী, হঠাৎ যুদ্ধে উগ্র মূর্ত্তি হইয়াছে, ইহাদের ক্ষত্রিয়োচিত বিজয়শ্রী প্রকাশ পাইয়াছে ; ইহাদের

---

(१) विमानोज्ज्वलमिति पाठान्तरम् । (२) उद्योतितचारुलक्ष्मीकानि इति पाठभेदः ।

झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्।
वितत्य किरतोः शरानविरतस्फुरच्चूड़योर्-
विचित्रमभिवर्द्धते भुवनभीममायोधनम्॥१॥

झणज्झणितेति। झणज्झणितानि झणज्झणित्येवं शब्दकारीणि यानि कङ्कणानि हस्ताभरणविशेषाः, तद्वत् क्वणिताः शब्दायमानाः किङ्किण्यः क्षुद्रघण्टा यस्य तत् तथोक्तम्; तथा गुरुणा महता, गुणेन मौर्व्या, अटनीभ्याम् अग्रदेशाभ्याञ्च कृतः करालो भयङ्करः कोलाहलः अस्पष्टमहाशब्दो यस्य तत् तादृशम्, ध्वनत् साकल्येन अतीवशब्दायमानं धनुः कोदण्डं वितत्य विस्फार्य्य शरान् बाणान् किरतोः विक्षिपतोः तथा अविरतं निरन्तरं स्फुरन्त्याः शरक्षेपेण देहस्पन्दनात् चलन्त्याः चूड़ाः शिखा ययोः तथोक्तयोरनयोर्बालकयोः भुवनभीमं जगतां भयङ्करं विचित्रं विशेषविस्मयकरम् आयोधनं युद्धम् अभिवर्द्धते क्रमेण वृद्धिं प्राप्नोति।

अत्र प्रथमचरणे लुप्तोपमालङ्कारः। तथा प्रथमे एकस्य मूर्द्धन्यणकारस्य, द्वितीये ककारस्य, तृतीये रेफस्य, चतुर्थे च चरणे भकारस्य असकृत् साम्यात् वृत्त्यनुप्रासः, अनयोः संसृष्टिः। किङ्किण्यो गुणः अटन्यौ च एते युगपदेव शब्दायन्ते, तेनैव समुदितं धनुः अतीव शब्दं करोतीति प्रतिपादनार्थं ध्वनत्पदमुपात्तम्, तेन न अधिकपदत्वदोषः।

"किङ्किणी क्षुद्रघण्टिका।" "कोटिरस्याटनी" इति चामरः।

झणज्झणाः शब्दा एषां सञ्जाता इति झणज्झणितानि तारकादित्वादितच्।

पृथ्वी वृत्तम्—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु"रिति लक्षणात्॥१॥

---

বিক্রম দেখিয়া, দেব ও দানবগণ বিস্ময়ে অস্থির চিত্ত হইয়া পড়িয়াছেন। প্রিয়ে! দেখ দেখ—

এই বালক দুইটী, দুইখানি শব্দায়মান ধনু বিস্তৃত করিয়া বাণক্ষেপ করিতেছে; ঐ ধনুর কিঙ্কিণীগুলি, কঙ্কণের ন্যায় 'ঝন্ ঝন্' শব্দ করিতেছে এবং বৃহৎ গুণ ও দুই প্রান্তভাগ, ভয়ঙ্কর কোলাহল করিতেছে; ইহাদের

विजृम्भितञ्च दिव्यास्त्रं (१) मङ्गलाय द्वयोरपि।
स्तनयित्नोरिवामन्द्रं दुन्दुभेर्दुन्दुमायितम् ॥२॥

तत् प्रवर्त्त्यतामनयोः प्रवीरयोरनवरतमविरलललित-(२) विकचकनककमलकमनीयसन्ततिः (३) अमरतरुतरुणमणि-(४) मुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः (ग)।

---

विजृम्भितमिति। द्वयोरपि चन्द्रकेतुलवयोः दिव्यास्त्रम् उत्कृष्टमायुधं विजृम्भितं व्याप्तं परस्परं प्रति परस्परप्रयुक्तेनास्त्रेण समरस्थलमाकीर्णमित्यर्थः। तथा द्वयोरपि तयोर्मङ्गलाय उत्साहवर्द्धनरूपकल्याणाय स्तनयित्नोर्मेघस्येव मेघवद्गम्भीरनादिन इत्यर्थः दुन्दुभेः तदाख्यवाद्यविशेषस्य आमन्द्रम् अतीवगम्भीरं दुन्दुमायितं 'दुम् दुम्' इत्येवंशब्दश्च विजृम्भितं प्रादुर्भूतम्। उभयोरपि समरोत्साहवर्द्धनाय देवाश्च दुन्दुभिं वादयन्तीत्यर्थः।

अत्र एकया विजृम्भितक्रियया दिव्यास्त्रदुन्दुमायितयोः कर्त्तृत्वेनान्वयात् तुल्ययोगितालङ्कारः, उपमया सङ्कीर्णः, दुन्दु दुन्दु इति छेकानुप्रासेन संसृज्यते।

"मन्द्रस्तु गम्भीरे।" "भेरी स्त्री दुन्दुभिः पुमा"निति चामरः।

दुन्दुमायितमिति "अव्यक्तानुकरणा"दित्यादिना दुम्दुम्शब्दात् डाच् "डाचि विवक्षिते द्वे बहुल"मिति दुन्दुमा, ततः "डाज्लोहितादिभ्यष्यष्" इति क्यषि ततो भावे क्तः ॥२॥

(ग) तदिति। तत्तस्मात् देवैरपि आनन्देन दुन्दुभिवादनादित्यर्थः प्रवीरयोः

চূড়া অনবরত কাঁপিতেছে; এই অবস্থায় ইহাদের এই ভুবনভয়ঙ্কর ও আশ্চর্য্য যুদ্ধ ক্রমে বৃদ্ধি পাইতেছে ॥১॥

ইহাদের দিব্য অস্ত্র সকলও আকাশে ব্যাপ্ত হইতেছে; আবার দুই জনেরই মঙ্গলের জন্য, মেঘগর্জ্জনের ন্যায় গম্ভীর দুন্দুভির 'দুম্ দুম্' শব্দও ব্যাপ্ত হইতেছে ॥২॥

---

(१) दिव्यस्येति क्वचित् पाठः। (२) लुलितेति पाठान्तरम्। (३) संहतिरिति पाठभेदः। (४) क्वचित् मणिशब्दो नास्ति।

विद्याधरी। ता किं त्ति उण अश्राण्डविप्फुरिदतड़िच्छ्डा-कड़ारं विश्र अम्बरं झत्ति संवुत्तं (घ)।

(घ) तत् किमिति पुनरकाण्डविस्फुरिततड़िच्छटाकड़ारमिव अम्बरं झटिति संवृत्तम्।

प्रकृष्टशूरयोः अनयोश्चन्द्रकेतुलवयोः उपरीति शेषः अविरलैरनल्पैः ललितैः सुन्दरैः, विकचैः विकसितैः कनककमलैः सुवर्णपद्मैः कमनीया मनोहरा सन्ततिर्धारा यस्मिन् स तथोक्तः सुवर्णपद्मानामविच्छिन्नधारावाहीत्यर्थः। तथा अमरतरूणां देवद्रुमाणां पारिजातादीनां यः नवमणिमुकुलनिकरः नवीनोत्पन्नमणिमयकलिकासमूहः तस्य मकरन्दैः रसैर्मधुभिरिति यावत् सुन्दरः सौरभातिशयात् मनोहरः पुष्पनिपातः साधारणकुसुमवृष्टिः प्रवर्त्त्यताम् आरभ्यताम्। अविच्छिन्नस्वर्णपद्मधारासहिता पारिजातादिदेवतरुपुष्पनिर्यास-सुरभीकृता साधारणपुष्पवृष्टिः क्रियतामिति सरलार्थः। देवैरपि दुन्दुभिवादनेनानन्द-प्रकाशात् अस्माभिरपि पुष्पवृष्ट्या आनन्दः प्रकाशयितव्य इति भावः।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

अभिनयप्रतिकूलतया ईदृशौ दीर्घसमासविन्यासौ भवभूतेर्महान् दोष इति समा-लोचयन्ति।

(घ) विद्याधरीति। अन्यत्र वात्रापि विद्येति नाम्न एकदेशमात्रोपन्यासे विद्याधरी विद्याधरी वेति संशयः स्यादिति विद्याधरी विद्याधरीति सम्पूर्णं नामोपन्यस्तम्। प्रश्नार्थ-बोधकं तत्किमित्येकमव्ययम्। अप्रथमे पुनःशब्दः। अकाण्डे अनवसरे मेघाभावात् असमये इत्यर्थः विस्फुरितानां प्रकाशितानां तड़ितां विद्युतां छटाभिः प्रभाभिः कड़ारं पिङ्गलवर्णम्। अम्बरमाकाशं झटिति सहसा संवृत्तं जातमित्युत्प्रेक्षालङ्कारः।

(গ) অতএব এই মহাবীর দুইটীর উপরে অবিরত পুষ্পবৃষ্টি আরম্ভ কর; তাহাতে যেন প্রস্ফুটিত, সুন্দর ও ঘন ঘন স্বর্ণপদ্মের মনোহর ধারা থাকে এবং তাহা যেন পারিজাতপ্রভৃতি দেবতরুর নূতন মণিময় কলিকা-সমূহের মধুসংস্রবে আরও সুন্দর হয়।

(ঘ) বিদ্যাধরী। অসময়ে প্রকাশিত বিদ্যুতের আলোকে আকাশমণ্ডল হঠাৎ যেন পিঙ্গলবর্ণ হইয়া গেল কেন?

विद्याधरः। तत्किन्नु खल्वद्य—(ङ)

त्वष्टृयन्त्र-(१) भ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः।
पुटभेदो ललाटस्थनीललोहितचक्षुषः॥३॥

(विचिन्त्य) आं ज्ञातम्, वत्सेन चन्द्रकेतुना (२) प्रयुक्तमस्त्र-माग्नेयम्, यस्यायमग्निच्छटासम्पातः (३)। सम्प्रति हि—(च)

(ङ) विद्याधर इति। प्रश्नबोधकं तत्किन्नु इत्येकमव्ययम्। खलु वाक्यालङ्कारे। अद्य अस्मिन्नहनि।

त्वष्टेति। त्वष्टुर्विश्वकर्म्मणो यद्‌यन्त्रं शाणयन्त्रम्, तस्य भ्रमिर्घूर्णनं तया भ्रान्तः घूर्णितो यो मार्त्तण्डः सूर्य्यः तस्य ज्योतिस्तेज इव उज्ज्वलो दीप्यमानः, ललाटस्थं भालस्थितं यत् नीललोहितस्य शिवस्य चक्षुर्नेत्रं तस्य पुटयोराच्छादनयोः भेदः अपसारणं तत्किन्नु जात इति शेषः। विश्वकर्म्मणा शाणयन्त्रेण छिद्यमानस्य सूर्य्यस्य तेजोवत् दीप्यमानः जगत्संहारिणो रुद्रस्य तृतीयनयनप्रकाशः किमयमिति सरलार्थः। तन्नयनाभि-भाविदारुणत्वादिति भावः।

अत्र उपमेये आग्नेयास्त्रे उपमानस्य तृतीयहरनयनतेजसः संशयात् शुद्धसन्देहालङ्कारः, स च लुप्तोपमया सङ्कीर्य्यते।

पुरा किल भगवतो भास्करस्य सुदुःसहं तेज आसीत्, ततो ब्रह्मणो वाक्यानुसारेण रवेरनुज्ञया च विश्वकर्म्मा स्वकीयशाणयन्त्रे रविमण्डलमारोप्य असकृत् परिभ्रामयन् किमपि किमपि संछिद्य तस्य तेजोह्रासं विदधौ इति मार्कण्डेयपुराणवार्त्तानुसन्धेया॥३॥

(च) विचिन्त्येति। विचिन्त्य विशेषचिन्तया निर्णीय। आं इति स्मरणार्थ-मव्ययम्। आग्नेयम् अग्निदैवतम्। प्रयुक्तं निक्षिप्तम्। यस्य आग्नेयास्त्रस्य अयं

(ঙ) বিদ্যাধর। তবে কি আজ—

বিশ্বকর্ম্মার শাণযন্ত্রের ঘূর্ণনে ঘূর্ণমান সূর্য্যমণ্ডলের তেজের ন্যায় উজ্জ্বল, মহাদেবের ললাটস্থ নয়নের আবরণের উন্মোচন হইল না কি ? ॥৩॥

(१) त्वाष्ट्रयन्त्रेति पाठान्तरम्। (२) जातवीर्य्येण चन्द्रकेतुना इति पाठान्तरम्।
(३) तस्यायमिति पाठभेदः।

अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः।
दधति ध्वजाङ्कुशपटाञ्चलेष्विमाः (१)
क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः ॥४॥

---

दृश्यमानः अग्निच्छटासम्पातः वह्निप्रभाप्रसारः वर्त्तत इति शेषः। हि तथाहि, अग्निर्देवता अस्येत्याग्नेयं "सर्वत्राग्निकालिभ्यां ठग् वक्तव्यः।"

अवदग्धेति। अवदग्धानि अंशतः प्लुष्टानि अतएव कर्बुरितानि विचित्रीकृतानि केतुचामराणि ध्वजदण्डबालव्यजनानि येषां तैस्तथोक्तैः विमानमण्डलैः व्योमयानसमूहैः अपयातमेव दाहभयेन रणान्तरीयात् अपसृतमेव। तथा इमाः शिखाः अग्निज्वालाः ध्वजानां केतुदण्डानाम् अङ्कुशानां ध्वजदण्डाग्रे स्थितानां सृणीनां पटाञ्चलेषु वसनप्रान्तेषु पताकैकदेशेषु इत्यर्थः क्षणं व्याप्य यत् कुङ्कुमच्छुरणं कुङ्कुमरागरञ्जनं तस्य विभ्रमं कान्तिं दधति धारयन्ति, आग्नेयास्त्रवह्निशिखासंसर्गात् ध्वजाग्रस्थपताकाः कुङ्कुमरञ्जिता इव प्रतिभान्तीत्यर्थः। दारुणोऽयमस्त्रप्रभाव इति भावः।

अत्र अन्यस्य विभ्रमं कथमन्यो वहेदिति वस्तुसम्बन्धोऽसम्भवन् कुङ्कुमच्छुरणविभ्रममिव विभ्रमं दधतीति बिम्बप्रतिबिम्बभावं बोधयतीति निदर्शनालङ्कारः। तथा निष्प्रयोजन-हिशब्दप्रयोगात् निरर्थकत्वदोषः, स च "प्रपलायितं खलु विमानमण्डलै"रिति पाठेन समाधेयः।

"चित्रं किर्म्मीरकल्माषशबलैताश्च कर्बुरे।" "अङ्कुशोऽस्त्री सृणिः स्त्रिया"मिति चामरः। "वस्त्रस्यान्तोमतोऽञ्चलः।" "लक्ष्मीश्रीकान्तिविभ्रमा" इति च हलायुधः।

कर्बुराणि कृतानीति कर्बुरितानि करोत्यर्थेनन्तात् कर्म्मणि क्तः।

मञ्जुभाषिणी वृत्तम्—"सजसा जगौ च यदि मञ्जुभाषिणी"ति लक्षणात् ॥४॥

---

(চ) (চিন্তা করিয়া) ও! বুঝিতে পারিয়াছি, বৎস চন্দ্রকেতু আগ্নেয় অস্ত্র নিক্ষেপ করিয়াছে; যাহার এই অগ্নি-প্রভাবিস্তার। এখনে ধ্বজের

---

(१) ध्वजांशुक इति विभिन्नः पाठः।

आश्चर्य्यम्, प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुः (१) उत्सर्पिस्फुलिङ्गगुरुकरालतुमुललेलिहानज्वालासम्भारभैरवो भगवानुषर्बुधः। प्रचण्डश्चास्य सर्वतः सन्तापः, तत् प्रियासङ्केनाच्छाद्य दूरमपसरामि। (तथा करोति) (छ)।

---

(छ) आश्चर्य्यमिति। उच्चण्डानां काठिन्येन भीषणानां वज्रखण्डानाम् अशनिखण्डानाम् अवस्फोटे दाहेन विदारणे पटुः समर्थः नितान्तकठिनवज्रखण्डानपि दग्धुं क्षम इत्यर्थः, तथा उत्सर्पिभिः ऊर्द्धं प्रसरद्भिः स्फुलिङ्गैः अग्निकणैः गुरुर्महान्, तथा उत्ताला विकरालाः, तुमुलं सङ्कुलं यथा स्यात्तथा लेलिहानाः अत्यर्थं ग्रसमानाः अनियतभावेनेतस्ततः प्रसरन्त्य इत्यर्थः या ज्वाला अर्च्चिषः तासां सम्भारेण समूहेन भैरवो भयङ्करः भगवान् महाप्रभावः अयम् उषर्बुधः अग्निः प्रवृत्त एव उत्पन्न एव। स्वयोगव्यवस्थापने एवशब्दः। किञ्चेति चार्थः। अस्य अग्नेः सन्तापः, सर्वतः सर्वास्वेव दिक्षु प्रचण्डः अत्युग्रः, तत्तस्मात् अनावृतदेहेन प्रियाया अपसरणासम्भवादित्यर्थः अङ्केन स्वकीयवक्षःप्रभृत्यवयवेन।

"उत्ताल उत्कटः श्रेष्ठे विकराले प्लवङ्गमे" इति मेदिनी। "शोचिष्केश उषर्बुध" इति वह्निपर्य्याये अमरः।

---

चामরগুলি দগ্ধ হইয়া বিচিত্র হইলে, বিমান সকল পলাইয়া গিয়াছে; আর এই সকল অগ্নির শিখা, ধ্বজস্থ অঙ্কুশে বদ্ধ পতাকার একদিকে ক্ষণকালের জন্য কুঙ্কুমলেপনের শোভা ধারণ করিতেছে ॥৭॥

(ছ) আশ্চর্য্য বটে; মহাপ্রভাবশালী অগ্নিরাশি এই উৎপন্নই হইল; ইহা বজ্রখণ্ড বিদারণে সমর্থ, উৎপতমান স্ফুলিঙ্গসমূহে বিশাল এবং ভয়ঙ্কর ও সঙ্কুলভাবে লেলিহান জ্বালাসমূহে ভয়ানক। ইহার তাপ সকল দিকেই প্রচণ্ড হইয়া পড়িতেছে; সুতরাং অঙ্গের আবরণে প্রিয়তমাকে আবৃত করিয়া দূরে সরিয়া যাই। (তাহাই করিল)

---

(१) वज्रखण्डावस्फोटपटुतरस्फुलिङ्गविक्रान्तिरिति क्वचित् पाठः।

विद्याधरी। दिट्ठिआ एदेण विमलमोत्तिअफलसीदल-(१) सिणिद्धमसिणमंसलेण (२) णाहदेहप्फंसेण आणन्दमन्द-मुउलिदघुम्मन्तोअणाए अन्दरिदो ज्जेव सन्दावो (ज)।

विद्याधरः। अयि! किमत्र मया कृतम्। अथवा—(झ)

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥५॥

(ज) दिष्ट्या एतेन विमलमौक्तिकफलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनाया अन्तरित एव सन्तापः।

(ज) विद्याधरीति। दिष्ट्या भाग्येन। विमलं विशुद्धं यत् मौक्तिकफलं मुक्ताफलं तदिव शीतलः, स्निग्धः चक्कणः मसृणः श्लक्ष्णः (पालिस इति यस्य बङ्गभाषा), मांसलः कठिनश्च तेन तथोक्तेन, नाथस्य अस्य मे पत्युः देहस्य स्पर्शेन करणे आनन्देन स्पर्शसुखेन मन्दम् अल्पं यथा स्यात्तथा मुकुलिते मुद्रिते, घूर्णन्ती चञ्चले, लोचने चक्षुषी यस्याः, तथोक्ताया ममेत्यर्थः सन्तापः वह्निज्वालास्पर्शजन्या पीड़ा, अन्तरितः दूरीकृतः। वह्नि-रावरणेन वह्निज्वालास्पर्शाभावात् सुखान्तरोदयाच्चेति भावः। अन्तरितमुकुलितेति अन्तरमुकुलशब्दाभ्यां करोत्यर्थेऽनन्ताभ्यां कर्मणि क्तौ।

"बलवान् मांसलो सल" इत्यमरः।

(झ) विद्याधर इति। अयीति सखेदसम्बोधने। अत्र तव सन्तापनिवारणविषये। अकिञ्चिदिति। श्लोकोऽयं द्वितीयेऽङ्के रामेण पठितः, तत्र च व्याख्यातः॥५॥

(জ) বিদ্যাধরী। ভাগ্যবশতঃ নির্ম্মল মুক্তার ন্যায় শীতল, স্নিগ্ধ, পালিস, অথ চ কঠিন এই প্রিয়তমের দেহসংস্পর্শে আমার সন্তাপ তিরোহিতই হইয়াছে; বিশেষতঃ নয়নযুগল, আনন্দে ঈষৎ মুদ্রিত ও ঘূর্ণিত হইতেছে।

(१) विमलमोत्तिअसरसीदल इति पाठान्तरम्। (२) सिणिद्धमणिसीआणमंसलेण इति पाठभेदः।

विद्याधरी। कहमविरलविलोलघुम्मन्तविज्जुलदाविलास-मण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं (ञ)।

विद्याधरः। हन्त! हन्त! कुमारलवप्रयुक्तवारुणास्त्र-प्रभावः खल्वयम्। कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तं पावकास्त्रम् (ट)।

(ञ) कथमविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्य्यते नभस्तलं जलधरैः।

(ञ) विद्याधरीति। अविरलं निरन्तरं विलोलानां चञ्चलानां घूर्णन्तीनां भ्रमन्तीनां विद्युल्लतानां सौदामिनीदाम्नां विलासेन विभ्रमेण मण्डितैः भूषितैः, तथा मत्तमयूराणां कण्ठा इव श्यामलाः श्यामवर्णास्तैः, जलधरैर्मेघैः नभस्तलम् आकाशदेशः कथम् अवस्तीर्य्यते आच्छाद्यते।

(ट) विद्याधर इति। हन्तेति हर्षसूचकमव्ययं तदतिशये द्विरुक्तिः। कुमारेण लवेन प्रयुक्तं चन्द्रकेतोराग्नेयास्त्रनिवारणाय निक्षिप्तं यत् वारुणं वरुणदैवतमस्त्रं तस्य खलु तस्यैव वारुणास्त्रस्य प्रभावः सामर्थ्यम् अयं जलधरप्रादुर्भावः। अविरलं निरन्तरं प्रवृत्तानि यानि वारिधारासहस्राणि वृष्टिधारासमूहाः तेषां सम्पातैः, पतनैः पावकास्त्रं चन्द्रकेतोराग्नेयास्त्रं प्रशान्तं निर्वापितम्। कथमिति सम्भावयामीत्यर्थः।

"हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः"रित्यमरः। "कथं (अव्य)—सम्भावना" इति शब्दकल्पद्रुमः।

(ঝ) বিদ্যাধর। ওহে! এ বিষয়ে আমি কি করিলাম; অথবা কিছু না করিয়াও সুখদ্বারাই দুঃখনাশ করে; কারণ, যে যাহার প্রিয়জন, সে তাহার নিকট কোন অনির্ব্বচনীয় দ্রব্য ॥৫॥

(ঞ) বিদ্যাধরী। নিরন্তর চঞ্চল ও ঘূর্ণমান বিদ্যুতের শোভায় পরিশোভিত এবং মত্ত ময়ূরের কণ্ঠদেশের ন্যায় শ্যামবর্ণ মেঘসমূহ, আকাশমণ্ডল ব্যাপ্ত করিল কেন?

विद्याधरी। पिअं मे पिअं मे (१) (ठ)।

विद्याधरः। हन्त! हन्त! (२) सर्वमतिमात्रं दोषाय, यत् प्रबलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्र-निबद्धम् (३) एकवारविश्वग्रसनविकच-(४) विकरालकालकण्ठ-कण्ठ-(५) कन्दरविवर्त्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्व-द्वार-(६) नारायणोदरनिविष्टमिव भूतजातं प्रवेपते (७) (ड)।

(ठ) प्रियं मे प्रियं मे।

(ठ) विद्याधरीति। प्रियं दारुणाग्नेयास्त्रप्रशमनमित्यर्थः पुनःसन्तापसम्भावना-भावादिति भावः। हर्षातिशये द्विरुक्तिः।

(ड) विद्याधर इति। अत्र हन्तशब्दो विषादसूचकः, भयसम्भ्रमे द्विरुक्तिः। मात्रां परिमाणमतिक्रान्तमित्यतिमात्रं सर्वं जगत्यां सर्वं वस्तु अतिमात्रम् अत्यर्थं सत् दोषाय सम्पद्यत इति शेषः। यद्यस्माद्धेतोः, प्रबलाया बलवत्याः, वातावल्याः वात्यायाः क्षोभेण सञ्चलनेन गम्भीरं मन्दं यथा स्यात्तथा गुणगुणायमानाः 'गुण गुण' इत्येवमव्यक्तं शब्दं कुर्वन्तः ये मेघाः तैः मेदुरं स्निग्धं निविडमित्यर्थः यदन्धकारं तमः तेन नीरन्ध्रं निरवकाशं गाढ़मिति यावत् यथा तथा निबद्धं धृतम् आवृतमित्यर्थः भूतजातं प्राणिसमूहः, एकेनैव वारेण उद्योगेन विश्वस्य जगतः ग्रसनाय ग्रासाय विकचः व्यात्तः यः विकरालः

(ट) বিদ্যাধর। ভাল ভাল, ইহা কুমার-লব-নিক্ষিপ্ত বারুণাস্ত্রের প্রভাব। বেশ, নিরন্তর জলধারাসমূহ-বৃষ্টিকর্ত্তৃক, আগ্নেয়াস্ত্র নিবারিত হইয়াছে।

(ঠ) বিদ্যাধরী। আমার প্রীতিকর বটে, আমার প্রীতিকর বটে।

(१) क्वचित् पिअं मे इत्यस्य द्विरुक्तिर्नास्ति। (२) क्वचित् भो भो इत्यधिकः पाठः। (३) नीरन्ध्रनिबद्धमिति पाठान्तरम्। (४) विकट इति पाठभेदः। (५) मुख इति क्वापि पाठः। (६) युगान्तनिद्रा इति क्वचित् योगशब्दशून्यः पाठः। (७) विपद्यत इति विभिन्नः पाठः।

भयानकः कालकण्ठस्य नीलकण्ठस्य संहारमूर्त्तेरुद्रस्येत्यर्थः कण्ठकन्दरः गलविवरं तत्र विवर्त्तमानमिव अवतिष्ठमानमिव सत् जगत्संहाराय व्यात्ताननस्य रुद्रस्य मुखपथेन कण्ठविवरं प्रविष्टमिव सदित्यर्थः, तथा युगान्ते प्रलयकाले यो योगः चित्तवृत्तिनिरोधः स निद्रा इव तया, निरुद्धानि संवृतानि सर्वाणि द्वाराणि मुखनासिकादिप्रवेशनिर्गममार्गा येन तस्य नारायणस्य उदरे जठरे निविष्टमवस्थितमिव च सत् प्रवेपते कम्पते । सम्प्रति प्राणिनो गाढ़ान्धकारावृताः सन्तः "किमयमुपस्थितः प्रलयकालः, येन वयं जगत् ग्रसतो रुद्रस्य कण्ठविवरं प्रविष्टा इव नारायणोदरावस्थिता इव च प्रबलान्धकारावृताः संवृत्ता" इत्यादि नानाविधमुत्प्रेक्षमाणा भयेन कम्पन्त इत्यर्थः । प्राणिनामयमुद्वेगस्तु त्वत्प्रयुक्त-वारुणास्त्रप्रभावेणैव, अतएव मातिशयमस्त्रप्रयोगं दोषं विना किं ब्रूम इति भावः ।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स च क्रियोत्प्रेक्षाद्वयेन सङ्कीर्य्यते ।

"सान्द्रस्निग्धस्तु मेदुरः" "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्वि"ति चामरः ।

गुणगुणेत्येवं शब्दं करोतीति गुणगुणायमानः "अव्यक्तानुकरणा"दित्यादिना डाच् "डाज्लोहितादिभ्यष्ष्यर्थे" इत्यादिः ततः शानच् ।

प्रलयकाले रुद्रो जगत् संहरति । तथा च कूर्म्मपुराणम्, ४२ अध्याये—

"एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ।
नियोजयत्यथान्योन्यं प्रधानं पुरुषं परम ॥"

प्रलयकाले नारायणशरीरे जगत्प्रवेश उक्तः शिशुपालवधेऽपि, प्रथमसर्गे—

"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।"

---

(ড) বিদ্যাধর। হায়! হায়! সকল পদার্থই বেশী হইলে দোষের হইয়াই দাঁড়ায়। যেহেতু প্রবল ঝড়ের বেগে গম্ভীর ও "গুণ গুণ"শব্দকারী মেঘের আবরণে নিবিড় অন্ধকার হইয়াছে; সেই অন্ধকার যেন জগতের প্রাণিগণকে প্রগাঢ়ভাবে আবৃত করিয়াছে; এক উদ্যমেই জগৎ গ্রাস করিবার জন্য প্রসারিত মহাদেবের কণ্ঠবিবরের ভিতরেই যেন প্রাণিগণ অবস্থান করিতেছে এবং প্রলয়কালে নারায়ণ, যোগনিদ্রাদ্বারা দেহের সমস্ত

साधु वत्स! चन्द्रकेतो! साधु, स्थाने वायव्यास्त्रमीरितम्। यतः—(ढ)

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः ॥६॥

---

(ढ) साध्विति। साधु भद्रं कृतमिति शेषः हर्षे द्विरुक्तिः। वायव्यास्त्रं वायुदैवतमस्त्रं तत् ईरितं प्रेरितं निक्षिप्तमित्यर्थः तत् स्थाने युक्तम् उचितमेवाभूदित्यर्थः, अन्यथा लवप्रयुक्तवारुणास्त्रप्रभावेण जाता प्राणिनां महती प्राणाशङ्का कथमपि न निवर्त्तेतेति भावः। साधुकरणकारणमाह यत इति।

"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

वायव्यमिति "वाय्वृतुपित्रुषसो य"दिति यत्प्रत्ययः।

विद्येति। (विद्याकल्पेन तत्त्वज्ञानतुल्येन) तुल्यलक्षास्य लयकरणांशे, (मरुता चन्द्रकेतुप्रयुक्तवायव्यास्त्रप्रादुर्भूतवायुना भूयसामपि प्रचुराणामपि मेघानां लवनिक्षिप्तवारुणास्त्रप्रादुर्भूतजलभराणां) (विवर्त्तानां परमार्थतः) असारहितानां नामरूपादिभेदभिन्नानां घटपटादिजगत्प्रपञ्चानामित्यर्थः ब्रह्मणि अद्वितीये सच्चिदानन्दस्वरूपे परमात्मनि इव क्वापि कस्मिन्नपि अदृश्यस्थाने विप्रलयः तिरोधानं कृतः // यथा सद्‌गुरोरुपदेशवशेन "तत्त्वमसि" "एकमेवाद्वितीयं ब्रह्म" "नेह नानास्ति किञ्चन"त्यादिवाक्यानां सम्यक् तात्पर्य्यालोचनादिभिः समुत्पन्नेन तत्त्वज्ञानेन तात्त्विकरज्जुज्ञानेन सर्पभ्रम इव नामरूपादिविविधभेदभिन्नानां घटपटादिजगत्प्रपञ्चानां पृथक् सत्ताविषयको भ्रमो निरस्यते परञ्च केवलमद्वितीयब्रह्मैवावतिष्ठते, तथा अस्य वायव्यास्त्रस्य प्रभावेण मेघनिवहो निरस्तः, परञ्च केवलं निर्म्मलं नभ एवावतिष्ठते इति सरलार्थः। विद्यया अविद्यानाशे सतीव वायव्यास्त्रेणानेन वरुणास्त्रनाशे सति सम्प्रति लोको निरुपद्रवः संवृत्त इत्यतीवानन्दकारणमिति भावः।

---

দ্বার অবরুদ্ধ করিলে তাঁহার উদরে প্রবিষ্ট থাকিয়াই যেন প্রাণিগণ কম্পিত হইতেছে।

(ঢ) ভাল, বৎস চন্দ্রকেতু! ভাল; তুমি যে বায়ব্যাস্ত্র নিক্ষেপ করিয়াছ, তাহা সঙ্গতই হইয়াছে। যেহেতু—

विद्याधरी। णाह! को दाणिं एसो ससम्भमुक्खित्तकरव्भमिदपट्टकञ्चलो [१] दूरदो ज्जेव महुरवअण-[२] पड़िसिद्धजुज्झवावारो एदाणं कुमाराणं अन्तरम्मि [३] विमाणवरं [४] ओदरावेदि [ण]।

(ण) नाथ! क इदानीमेष ससम्भ्रमोत्क्षिप्तकरभमितपट्टकाञ्चलो दूरत एव मधुरवचनप्रतिषिद्धव्यापार एतयोः कुमारयोः अन्तरे विमानवरमवतारयति।

अत्र प्रथमार्द्धे कल्पशब्दोपादानादार्थी उपमा, द्वितीयार्द्धे च इवशब्दोपादानात् श्रौती उपमा; अनयोः परस्परसापेक्षत्वात् सङ्करः।

"वस्तुस्वरूपावधारणं विद्यामाहु"रिति शारीरकभाष्ये भगवान् शङ्कराचार्य्यः। "परमोत्तमपुरुषार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपे"ति नागोजीभट्टः। ब्रह्मलक्षणमाह वेदान्तभाष्यधृता श्रुतिः—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म।" "जन्माद्यस्य यत" इति वेदान्तसूत्रञ्च।

विवर्त्तमाह वेदान्तसारे—

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदाहृतः।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरितः॥"

तत्त्वज्ञानेन विवर्त्तनिवृत्तिस्तु वेदान्तदर्शनादौ द्रष्टव्या॥६॥

(ण) विद्याधरीति। एष दूरे दृश्यमानः, ससम्भ्रमं सत्वरम् उत्क्षिप्तेन उत्तोलितेन करेण हस्तेन भमितो घूर्णितः पट्टकाञ्चलः वस्त्रविशेषप्रान्तभागो येन स तथोक्तः। दूरतो निवारणवचनश्रवणासम्भवशङ्कया कुमारयोर्दृष्टेराकर्षणार्थं वस्त्राञ्चलघूर्णनमिति बोध्यम्। मधुरेण प्रीतिपूर्णेन वचनेन वाक्येन प्रतिषिद्धः निवारितः युद्धव्यापारः संग्रामकार्य्यं येन स तथोक्तः। यदि शृणुयातामिमाविति सम्भावनया युद्धनिवारणाय निषेधवाक्यमप्युक्तमिति

তত্ত্বজ্ঞান যেমন ব্রহ্মপদার্থে জগতের লয় সম্পাদন করে, সেইরূপ বায়ব্যাস্ত্র, প্রচুর মেঘসমূহেরও কোন স্থানে লয় করিয়া ফেলিয়াছে ॥৬॥

(१) करभमिदञ्चोत्तरीआञ्चल इति पाठान्तरम्। (२) महुरणिसिद्धवअण इति पाठभेदः। (३) मज्झ इति क्वापि पाठः। (४) विमाणमिति भिन्नः पाठः।

विद्याधरः। [दृष्ट्वा] एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः [त]।

शब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृतसम्प्रहारः।
शान्तो लवः, प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसङ्गमनेन राज्ञः ॥७॥

---

श्रेयम्। कुमारयोश्चन्द्रकेतुलवयोः अन्तरे मध्यस्थले विमानवरं व्योमयानश्रेष्ठं पुष्पकमित्यर्थः अवतारयति अवरोहयति।

(त) विद्याधर इति। रघुपतिः रामः, शम्बूकवधात् शम्बूकवधं कृत्वेत्यर्थः ल्यब्लोपे पञ्चमी।

शब्दमिति। महापुरुषेण प्रभावातिशयशालिना रामेण संविहितं कृतम् उच्चारितमित्यर्थः शब्दं समरव्यापारात् निवर्त्तेथां युवामित्येवं वाक्यमित्यर्थः निशम्य श्रुत्वा तद्गौरवात् तस्य रामस्य महिमातिशयेन स्वतो गुरुत्वावगमात् गौरवितजनवचनातिक्रमस्य अनौचित्यादित्यर्थः समुपसंहृतः साकल्येन निवर्त्तितः सम्प्रहारः युद्धव्यापारो येन स तथोक्तः, लवः शान्तः क्रोधायुधनिक्षेपादिपरित्यागे प्रकृतिमापन्नः, चन्द्रकेतुश्च प्रणत एव ज्येष्ठतातोऽयमिति मत्वा रामपादमूले पतित एवेत्यर्थः। इदानीं सुतेन लवेन सङ्गमनं सम्मेलनं तेन राज्ञो रामस्य कल्याणं मङ्गलमस्तु, मत्पुत्रोऽयमित्यविदितवृत्तान्तो राम इदानीं 'ममैवायं पुत्र' इति परिचिन्वानः तत्सम्मेलनरूपं मङ्गलं प्राप्नोतु इत्यर्थः।

अत्र चन्द्रकेतुलवयोरुग्रताख्यभावस्य प्रशमः रामविषयकभक्तिभावस्याङ्गमिति समाहितनामालङ्कारः।

---

(ণ) বিদ্যাধরী। নাথ! এই কোন্ ব্যক্তি, দূর হইতেই ব্যস্ততার সহিত উত্তোলিত হস্তে বস্ত্রাঞ্চল ঘূর্ণিত করিয়া, মধুর বাক্যে যুদ্ধের নিষেধ করিয়া, এই কুমারদ্বয়ের মধ্যস্থানে বৃহৎ একখানা বিমান নামাইতেছে?

(ত) বিদ্যাধর। (দেখিয়া) রঘুনাথ রামচন্দ্র শম্বূকবধ করিয়া এই ফিরিয়া আসিয়াছেন।

[इति निष्क्रान्तौ [थ]।

## विष्कम्भकः। (द)

[ततः प्रविशति रामः लवः प्रणतश्चन्द्रकेतुश्च [ध]।

रामः। [पुष्पकादवतरन्] [न]

दिनकरकुलचन्द्र! चन्द्रकेतो!
सरभसमेहि दृढ़ं परिष्वजस्व।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः॥८॥

---

"धान्येन धनवा"नित्यादिवत् सुतसङ्गमनेनेति अभेदे तृतीया, सुतसङ्गमनस्वरूपं कल्याणमित्यर्थः। वसन्ततिलका वृत्तम्॥७॥

(थ) इतीति। विद्याधरदम्पती समरावलोकनायैव समागतौ, तन्निवृत्तौ तत्राव-स्थानप्रयोजनाभावात् निष्क्रान्ताविति बोध्यम्।

(द) विष्कम्भक इति। मध्यमाभ्यां विद्याधरदम्पतीभ्यां प्रयोजितत्वादयमपि शुद्धो विष्कम्भकः। अत्र वर्त्तमानानां युद्धघटनानां वर्त्तिष्यमाणानाञ्च चन्द्रकेतुलवाभ्यां सह रामस्यालापादीनां निदर्शनं द्रष्टव्यम्। तेन विष्कम्भकलक्षणे "वृत्तवर्त्तिष्यमाणाना"मिति वृत्तपदस्य वर्त्तमानार्थोऽपि मन्तव्य इति भाव्यम्।

(ध) तत इति। प्रणतः रामाभिवादनाय भूमौ पतितः। चन्द्रकेतुश्च प्रणत इत्यर्थः।

(न) राम इति। पुष्पकात् तदाख्यव्योमयानात् अवतरन् भूमाववरोहन्।

---

লব, মহাপুরুষের উচ্চারিত নিষেধ বাক্য শুনিয়া, তাঁহার গৌরবে যুদ্ধ নিবর্ত্তিত করিয়া শান্ত হইল; চন্দ্রকেতু কিন্তু একেবারে প্রণতই হইল। এখন পুত্রসম্মেলনে রাজার মঙ্গল হউক ॥৭॥

(থ) (এই বলিয়া বিদ্যাধর ও বিদ্যাধরী চলিয়া গেল।)

(দ) বিষ্কম্ভক।

(ধ) (তদনন্তর রাম, লব ও প্রণত অবস্থায় চন্দ্রকেতুর প্রবেশ।)

चन्द्र। अभिवादये [१] [प]।

रामः। [उत्थाप्य [२] सस्नेहास्रं परिष्वज्य] अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य? [फ]

---

दिनकरेति। दिनकरकुलस्य सूर्य्यवंशस्य चन्द्र! चन्द्रवदाह्लादक! चन्द्रकेतो! सरभसं सवेगम् एहि ममान्तिकमागच्छ, दृढं निर्भरं परिष्वजस्व आलिङ्ग मामिति शेषः ननु किमथ मालिङ्गनमित्याह तुहिनेति। तुहिनशकलानीव हिमखण्डानीव शीतलानि तैस्तथोक्तैः तव अङ्गैः वक्षःप्रभृतिभिरवयवैः मम चित्तदाहोऽपि सीताशोक तदपत्याभावजनितो मनस्तापोऽपि शमं नाशम् उपयातु प्राप्नोतु। भार्य्यायाः पुत्रप्रयोजनकतया "सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥" इति स्मरणात् भ्रातुः पुत्रस्य पुत्रस्थानीयत्वात् तवापपत्त्या सीताशोकतदपत्याभावजनितो मनस्तापो नश्यत्येवेति भावः।

अत्र न केवलं गात्रदाहः अपि तु मनस्तापः शममुपयातु इति अर्थान्तरापतनादर्थापत्तिरलङ्कारः लुप्तोपमाद्वयम्, चन्द्रचन्द्रेति व्यञ्जनानामनेकधा सकृत्साम्यात् छेकानुप्रासश्च, इत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः।

"रभसो वेगहर्षयो"रिति विश्वः। पुष्पिताग्रा वृत्तम् ॥८॥

(प) चन्द्रेति। अभिवादये भवन्तमिति शेषः।

(फ) राम इति। उत्थाप्य प्रणतं चन्द्रकेतुमुत्तोल्य। दिव्यास्त्रधरः उत्कृष्टायुधशाली देहो यस्य तस्य तव अपि नाम कुशलं किमु मङ्गलम्। अथवा तव दिव्यास्त्रधरो यो देहस्तस्य उत्कृष्टायुधशालिनो गात्रस्येत्यर्थः कुशलं विपक्षनिक्षिप्तास्त्रप्रहारेण

---

(न) রাম। (পুষ্পক হইতে নামিতে নামিতে)

হে সূর্য্যবংশের চন্দ্রস্বরূপ চন্দ্রকেতু! শীঘ্র আইস, আমাকে গাঢ় আলিঙ্গন কর; বরফখণ্ডের ন্যায় শীতল তোমার অঙ্গসংস্পর্শে, আমার মনের সন্তাপও নিবৃত্তি পাউক ॥৮॥

(প) চন্দ্রকেতু। নমস্কার করিতেছি।

---

(१) क्वचिदयं पाठो नास्ति। (२) उत्थायेति पाठान्तरम्।

चन्द्र। कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन, (१) तद्विज्ञापयामि, मामिव विशेषेण वा मत्तः, शिवेन (२) चक्षुषा पश्यत्वमुं महावीरप्रकाण्डं तातः (ब)।

रामः। (लवं निरूप्य) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं (३) वयस्यो वत्सस्य (भ)।

---

स्वतच्छेदादिकं न जातं किमु इत्यर्थः। दिव्यास्त्रशालिनो देहस्यतासम्भवसम्भावनैव अधिकेति द्योतनार्थं दिव्यास्त्रधरपदमुपात्तम्।

(ब) चन्द्रेति। अत्यद्भुता अतीवविस्मयावहा, क्रिया युद्धकार्य्यं यस्य तस्य प्रियं प्रीतिकरं दर्शनम् अवलोकनं यस्य तस्य स्वभावसौम्यमूर्त्तेरित्यर्थः लवस्य लाभः प्राप्तिरेव अभ्युदयः सम्वृद्धिः तेन कुशलम् ईदृशो जनो येन मित्ररूपेण प्राप्तः तदेव कुशलमिति भावः। तत्तस्मात् मम प्रियवयस्यत्वादित्यर्थः। मत्तः मत् पञ्चम्यास्तस्, विशेषेण आधिक्यवता शिवेन शुभानुध्यानप्रीतिविस्फारितेनेत्यर्थः। महावीरप्रकाण्डं प्रशस्तं प्रधानशूरम् अमुं सम्मुखस्थं बालकम्। तातः पितृपर्य्यायो भवान्। ममेयं प्रार्थनेति भावः।

"अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयो"रिति रभसः।

महावीरश्चासौ प्रकाण्डश्चेति सः "प्रशंसावचनैश्च रूढ़े"रित्यादिना नित्यसमासः। वाक्यन्तु अर्थप्रदर्शनार्थमुक्तम्।

---

(फ) राম। (চন্দ্রকেতুকে তুলিয়া, স্নেহ ও অশ্রুপাতের সহিত আলিঙ্গন করিয়া) তোমার দিব্যাস্ত্রধারী দেহের মঙ্গল ত?

(ব) চন্দ্রকেতু। অত্যন্ত অদ্ভুতকার্য্যকারী এবং প্রিয়দর্শন লবের প্রাপ্তিরূপ সম্পদে আমার মঙ্গল; সুতরাং আমি নিবেদন করিতেছি যে, আমারই মত অথবা আমা অপেক্ষাও বিশেষ কৃপাদৃষ্টিতে এই প্রশস্ত মহাবীরকে পিতা দর্শন করুন।

---

(१) लवस्य अभ्युदयेनेति पाठान्तरम्। (२) मामिव अविशेषेण मत्तः शिवतरेण इति पाठभेदः। (३) अतिकल्याणाकृतिरयमेतावानेव पाठः क्वापि।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्म्मः श्रित इव तनुं ब्रह्मकोषस्य (१) गुप्तै।
सामर्थ्यानामिव समुदयः, सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्म्माणराशिः ॥८॥

(भ) राम इति। निरूप्य विशेषेणावलोक्य। अतिगम्भीरा अतीवधीरत्वशालिनी अप्रधृष्येत्यर्थः, मधुरा प्रियदर्शना, कल्याणी मङ्गलसूचकलक्षणवती आकृतिः मूर्त्तिर्यस्य सः। वत्सस्य तव चन्द्रकेतो'।

अतिगम्भीरत्वादिकं समर्थयति त्रातुमित्यादि। लोकान् भुवनानि त्रातुं भयेभ्यो रक्षितुं कायवान् मूर्त्तिमान् परिणतः शरीरधारी सन्नित्यर्थः अस्त्रवेदः धनुर्वेद इव, तथा ब्रह्म वेद एव कोषः पिण्डीकृतद्रव्यराशिः तस्य गुप्त्यै रक्षणाय तनुं श्रितः शरीरमाश्रितः क्षात्रो धर्म्मः क्षत्रियजातेः पराक्रम इव, तथा सामर्थ्यानां विक्रमाणां समुदयो राशिरिव एतैरप्रधृष्यत्वमुक्तम्; तथा गुणानां सौन्दर्य्यविनयादीनां सञ्चयो वा पुञ्ज इव एतेन मधुरत्वमुक्तम्। तथा जगत्सु पुण्यनिर्म्माणानि अनुष्ठितानि पुण्यानि "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्, तेषां राशिः पुञ्जः आविर्भूय मूर्त्तिमत्तया प्रकाश्य स्थित इव एतेन कल्याणत्वं प्रतिपादितम्। अतएव असाधारणोऽयं बालक इति भावः।

अत्र शब्दात्मको वेदो गुणः, अपरे च क्षात्रधर्म्मादयो गुणपदार्था इति तेषाञ्च परात्मना सम्भावनाकरणात् पञ्चानां भावाभिमानीनां वाच्यानां गुणोत्प्रेक्षाणां परस्परनैरपेक्ष्यात् संसृष्टिः, तथा ब्रह्मकोषस्येत्यत्र साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः। तथा "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वप्रकाशेन वाशब्दस्य उपमाया एव वाचकत्वनिर्द्देशात् उत्प्रेक्षाद्योतकत्वाभावेन "सञ्चयो वा गुणाना"मित्यत्र "एष मूर्त्तो यथा धर्म्मः क्षितिपो रक्षति क्षिति"मिति साहित्यदर्पणोदाहृतवत् अवाचकत्वदोषः, स च 'सद्गुणानामिवौघ' इति पाठेन समाधेयः।

(ভ) রাম। (লবকে দেখিয়া) ভাগ্যবশতঃ বৎসের এই বয়স্যটীর আকৃতি বড়ই ধীর, মনোহর এবং বড়ই মঙ্গলসূচক বটে।

(१) ब्रह्मकोषस्येति भिन्नः पाठः।

लवः । अहो ! पुण्यानुभावदर्शनोऽयं महापुरुषः (म) ।
आश्वासस्नेहभक्तीनामेकमालम्बनं महत् (१) ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्त्तिसञ्चरः ॥१०॥

"स्यात् कोषश्च हिरण्यञ्च हेमरूप्ये कृताकृते" इत्यमरः ।

मन्दाक्रान्ता वृत्तम् ॥९॥

(म) लव इति । अहो आश्चर्य्ये । पुण्ये पवित्रे अनुभावदर्शने प्रभावरूपे यस्य सः । "अनुभावः प्रभावेऽपि" इत्यमरः ।

आश्वासेति । आश्वासो दुःखार्त्तानामभयदानपूर्वकमाश्वासनं स्नेहः प्रणयः भक्तिः पूज्येष्वनुरागः तासाम् एकं मुख्यं महत् विशालम् आलम्बनम् आश्रयः । अस्मिन् महापुरुषे दृष्टे सति आश्वासः स्नेहः भक्तिश्च जायत इत्यर्थः । तथा प्रकृष्टस्य उत्कर्षं गतस्य अतिप्रचुरस्येत्यर्थः धर्म्मस्य पुण्यस्य मूर्त्त्या सञ्चरत इति मूर्त्तिसञ्चरः देहधारी प्रसादः निर्म्मलता इव । प्रचुरतरधर्म्माचरणेन जायमानश्चित्तप्रसादो मूर्त्तिमाश्रित्य आविर्भूत इवेत्यर्थः ।

अत्र आश्वासादीनामनेकेषामेकत्रामगतत्वात् पर्य्यायनामालङ्कारः भावाभिमानिनी वाच्या गुणोत्प्रेक्षा च अनयोः संसृष्टिः ॥१०॥

জগৎকে রক্ষা করিবার জন্য, ধনুর্ব্বেদ যেন শরীরধারিরূপে পরিণত হইয়াছে ; বেদ রক্ষা করিবার নিমিত্ত ক্ষাত্রধর্ম্ম যেন দেহ ধারণ করিয়াছে ; ইহা যেন বিক্রমের রাশি ও গুণের পুঞ্জ এবং জগতের পুণ্যরাশি যেন আবির্ভূত হইয়া অবস্থান করিতেছে ॥৯॥

(ম) লব। কি আশ্চর্য্য ! এই মহাপুরুষের প্রভাব ও রূপ উভয়ই পবিত্র।

ইনি ভরসা, স্নেহ ও ভক্তির একমাত্র বৃহৎ আশ্রয় এবং উৎকৃষ্ট ধর্ম্মের মূর্ত্তিমান্ যেন নির্ম্মলতা ॥১০॥

(१) एकमायतनं महदिति पाठान्तरम् ।

आश्चर्य्यम् (य)।

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम्।
झटित्यस्मिन् दृष्टे किमिव (१) परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥११॥

---

(य) आश्चर्य्यमिति। वक्ष्यमाणं सर्वं विस्मयकरमित्यर्थः।

तदेवाह विरोध इति। अस्मिन् महापुरुषे दृष्टे अवलोकिते सति विरोधो विषादः झटिति तत्क्षणात् विश्रान्तः विरतः, निर्वृत्या आनन्देन, घनो निविड़ः रसो रागः प्रसरति उच्छलति, अमुं प्रति आनन्देन सान्द्रीकृतोऽनुरागो वर्त्तत इत्यर्थः, तत् युद्धकालीनम् औद्धत्यं दर्पजनितचाञ्चल्यं क्वापि व्रजति कुत्रापि विलीयते अतीतसामीप्ये वर्त्तमाना, तथा विनयः अस्मादात्मनो न्यूनत्वज्ञानं मां प्रह्वयति अवनमयति भक्तिनम्रं करोतीर्थः। तथा किमिव अनिर्वचनीय इत्यर्थः परवान् पराधीनः अस्मि, अमुं दृष्ट्वा नात्मनः प्रभवामीत्यर्थः। यदि वा अथवा हि यस्मात् तीर्थानां वाराणस्यादीनामिव महतां महापुरुषाणां कोऽपि अनिर्वचनीय इत्यर्थः महार्घः महामूल्यः दुर्लभः अतिशयः प्रभावातिरेको वर्त्तत इति शेषः। तेनैव विरोधविश्रामादयो जाता इति भावः।

अत्र रामस्य प्रभावातिशयप्रतिपादनकार्य्यं प्रति विरोधविश्रामादीनामनेकेषां कारणानां निर्द्देशात् समुच्चयोऽलङ्कार उपमा च, ताभ्यां सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः सङ्कीर्य्यते।

"प्रह्वो नम्र" इत्युणादिकोषः। "गुणे रागे द्रवे रसः।" "परतन्त्रः पराधीनः परवान् नाथवानपि।" "मूल्ये पूजाविधावर्घः" इति चामरः।

शिखरिणी वृत्तम् ॥११॥

---

(য) কি আশ্চর্য্য! এই মহাপুরুষকে দেখিলে পর তৎক্ষণাৎ বিরোধ বিরত হইয়াছে, আনন্দে পরিপূর্ণ অনুরাগ উচ্ছলিত হইয়াছে, সেই ঔদ্ধত্য

---

(१) किमपीति पाठान्तरम्।

रामः। तत्किमेकपद एव दुःखविश्रामं ददाति उपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम्। अथवा स्नेहस्य निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् (र)।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥१२॥

---

(र) राम इति। तत्किमित्येकमव्ययं प्रश्नार्थे। एकपद एव युगपदेव न पुनरेकस्मिन् काले दुःखनाशः, सद्व्यवहारादिना बहुपरकाले च स्नेह इत्येवमब्दार्थः। दुःखविश्रामं सीताशोकतदपत्याभावजनितदुःखस्य नाशम्। तथा कुतोऽपि निर्वक्तुमशक्यादित्यर्थः। निमित्तात् कारणात् अन्तरात्मानम् अन्तःकरणम् उपस्नेहयति स्नेहार्द्रं करोति एष बालक इति शेषः। ननु सति कारणे तत् निर्वक्तुं योग्यमेव स्यादिति कथं तत् निर्वक्तुमशक्यमित्याह अथवेति। चकारः समुच्चये अन्यपदार्थवत् स्नेहस्येत्यर्थः, व्यपेक्षया सह वर्त्तत इति सव्यपेक्षः निमित्तस्य सव्यपेक्षः स्नेहः किमपि नियतं कारणमपेक्षते इति यत् लौकिकवाक्यम् एतत् तत् विप्रतिषिद्धं विरुद्धम् असमीचीनमित्यर्थः। किमपि बहिर्वर्त्ति नियतं कारणं विनापि स्नेहो जायते, वर्त्तमानमेव तन्निदर्शनमिति भावः।

"तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृते" इति हलायुधः।

---

কোথাও গিয়াছে, বিনয় আমাকে অবনত করিতেছে এবং আমি যেন কেমন পরাধীন হইয়া গিয়াছি; অথবা ইনি যেন মহাতীর্থসমূহের কোন মহামূল্য উৎকর্ষ ॥১১॥

(র) রাম। এই বালকটী সহসাই আমার দুঃখের অবসান করিতেছে কেন? কেনই বা কোন কারণে অন্তরাত্মাকে স্নেহার্দ্র করিতেছে; অথবা স্নেহ কোন কারণ অপেক্ষা করিয়া হইবে, ইহা বিরুদ্ধ।

लवः। चन्द्रकेतो! क एते? (ल)

चन्द्र। प्रियवयस्य! ननु तातपादा एते (व)।

लवः। ममापि तर्हि धर्म्मतस्तथैव, यतः प्रियवयस्य इत्यात्थ, किन्तु चत्वारः खलु भवतामेवं व्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः, तद्विशेषं ब्रूहि (श)।

---

उक्तार्थमेव दृढ़ीकरोति व्यतिषजतीति। आन्तरः अन्तःकरणवर्त्ती कोऽपि निर्द्देष्टुमशक्यः हेतुः कारणं पदार्थान् वस्तूनि व्यतिषजति परस्परं सम्मेलयति किन्तु प्रीतयः स्नेहाः बहिरुपाधीन् बाह्यविशेषणानि पुत्रत्वभ्रातृत्वादिसर्वविदितकारणानीत्यर्थः न खलु संश्रयन्ते न खलु उत्पादकत्वेनापेक्षन्ते। हि यस्मात् पुण्डरीकं पद्मं कर्त्तृ पतङ्गस्य सूर्य्यस्य उदये सति विकसति स्फुटति, किञ्चेति चार्थः चन्द्रकान्तः स्वनामप्रसिद्धो मणि-विशेषः हिमरश्मौ चन्द्रे उद्गते उदिते सति द्रवति निष्यन्दते जललवं क्षरतीत्यर्थः। अतः कमपि सम्पर्कं विनैव अस्मिन् बालके मम स्नेहो भवितुमर्हत्येवेति भावः।

अत्र विशेषद्वयेन सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

"उपाधिर्धर्म्मचिन्तायां कुटुम्बव्यापृते छले। विशेषणे पुंसि" इति मेदिनी।

मालिनी वृत्तम् ॥१२॥

(ल) लव इति। क एत इति गुरुत्वाद्बहुवचनम्।

(व) चन्द्रेति। अत्यतिशयप्रकाशरूपप्रयोजनद्योतनाय पादशब्दस्य ताते अत्यन्त अतीवभक्तिभाजनरूपाः ताता इत्यर्थः।

---

আভ্যন্তরিক কোন কারণ, পদার্থকে পরস্পর সম্মিলিত করে; কিন্তু ভালবাসাটা বাহিরের কোন সম্পর্ককে অবলম্বন করে না। কারণ, সূর্য্যের উদয় হইলে পদ্ম প্রস্ফুটিত হয় এবং চন্দ্র উদিত হইলে চন্দ্রকান্তমণি জল নিঃসারণ করে॥১২॥

(ল) লব। চন্দ্রকেতু! ইহঁারা কে?

(ব) চন্দ্রকেতু। সখে! ইনি পিতা।

चन्द्र। ननु ज्येष्ठतातपादा इत्यवेहि (ष)।

लवः। (सोल्लासम्) कथं रघुनाथ एव, (१) दिष्ट्या सुप्रभातमद्य, यदयं देवो दृष्टः। (सविनयकौतुकं निर्वर्ण्य) तात! प्राचेतसान्तेवासी लवोऽभिवादयते (स)।

(ष) लव इति। तर्हि तव तातपादत्वे सति, ममापि न केवलं तव धर्म्मतः आचारात् लौकिकव्यवहारादित्यर्थः, तथैव तातपादा एव न त्वन्यविधसम्पर्कशालिन इत्येवशब्दार्थः। लोके हि वयस्यः स्वसमानपर्य्याय इति मन्यते, ततश्च वयस्यस्य यो यादृशः सम्बन्धी स्वस्यापि स तादृश एव सम्बन्धीति व्यवहारोऽस्तीति भावः। आह्य ब्रवीषि। एवं व्यपदेशं तातपादेति संज्ञां भजन्त इति एवंव्यपदेशभागिनः तातपादपदवाच्या इत्यर्थः। रामायणमेव कथा उपाख्यानं तस्याः पुरुषाः पात्राणि प्राधान्येन वर्णनीया इत्यर्थः। तत्तस्मात् सामान्यत उक्त्या विशेषनिर्णयासम्भवादित्यर्थः, विशेषं तेषां चतुर्णां मध्ये कतमोऽयमिति इतरव्यावर्त्तकं नाम ब्रूहीत्यर्थः।

"धर्म्माः पुण्य-यम-न्याय-स्वभावाचारसोमपा" इत्यमरः।

(ष) चन्द्रेति। नन्विति सम्बोधने। अवेहि जानीहि।

(स) लव इति। सोल्लासं सानन्दम्। कथमिति हर्षद्योतकमव्ययं शब्दकल्पद्रुमे द्रष्टव्यम्। रघुनाथो राम एव, न खलु ततो न्यूनमहिम्नां भरतादीनां कश्चिदित्येवशब्दार्थः। अद्य सुप्रभातं शोभनं दिनमुखम्। "सदवृत्तसन्निकर्षो हि चयार्ह्मपि शस्यते" इति स्मरणादिति भावः। प्राचेतसान्तेवासी वाल्मीकिशिष्यः। अभिवादयते भवन्तं प्रणमति।

(শ) লব। তাহা হইলে ধর্ম্মত আমারও ত তাহাই; যেহেতু প্রিয়বয়স্য তুমি এরূপ বলিতেছ; কিন্তু রামায়ণ-উপাখ্যানের প্রধানপাত্র মাননীয় চারি জনই তোমার এইরূপ সংজ্ঞার অধিকারী; অতএব বিশেষ বল।

(ষ) চন্দ্রকেতু। ওহে! ইনি আমার জ্যেষ্ঠতাত ইহা অবগত হও।

(१) कथं रघुनाथः, कथं रघुनाथ एव इति पाठान्तरद्वयम्।

রামঃ। (সস্নেহম্) এহ্যেহি এহ্যেহি। (সস্নেহং পরিষ্বজ্য) অয়ি বৎস! কৃতং কৃতমতিবিনয়েন, অনেকবারমপরিশ্লথং পরিষ্বজস্ব (হ)।

পরিণতকঠোরপুষ্করগর্ভচ্ছদপীনমসৃণসুকুমারঃ।
নন্দয়তি চন্দ্রচন্দননিষ্যন্দজড়স্তব স্পর্শঃ ॥১৩॥

(হ) রাম ইতি। এহ্যেহীতি কৃতং কৃতমিতি চ আদরে দ্বিরুক্তিঃ। অয়ীতি স্নেহসম্বোধনে। কৃতমিতি করণার্থমব্যয়ম্। অতিবিনয়েন ভূতলপতনরূপেণ নিতান্তবিনয়প্রকাশেন, অতএব তব বিনয়প্রাচুর্য্যপ্রকাশাদিতি ভাবঃ। অপরিশ্লথম্ অশিথিলম্, গাঢ়মিত্যর্থঃ, পরিষ্বজস্ব আলিঙ্গ।

কথমহং পরিষ্বঙ্গানুরোধ ইত্যাহ পরিণতেতি। পরিণতং পরিপক্কং সাবশেষবৃদ্ধিপ্রাপ্তমিত্যর্থঃ অতএব কঠোরং পূর্ণাবয়বং যৎ পুষ্করং পদ্মং তস্য গর্ভচ্ছদঃ অভ্যন্তরদলং তদ্বৎ পীনমসৃণঃ অত্যন্তশ্লক্ষ্ণঃ, সুকুমারঃ কোমলশ্চেতি স তথোক্তঃ, তথা চন্দ্রশ্চ চন্দননিষ্যন্দশ্চ চন্দ্রচন্দননিষ্যন্দৌ তাবিব জড়ঃ শীতলঃ, চন্দ্রবৎ চন্দননির্য্যাসবচ্চ শীতলং ইত্যর্থঃ তব স্পর্শঃ ত্বগিন্দ্রিয়গ্রাহ্যো গুণবিশেষঃ মাং নন্দয়তি সুখীকরোতি। অতএবানেকবারপরিষ্বঙ্গানুরোধ ইতি ভাবঃ।

অত্র লুপ্তোপমাদ্বয়স্য মিথো নৈরপেক্ষ্যাৎ সংসৃষ্টিঃ পরার্দ্ধে বৃত্ত্যনুপ্রাসশ্চ।

"সুষীমঃ শিশিরো জড়ঃ" ইত্যমরঃ। মসৃণত্বে পুষ্করগর্ভচ্ছদসম্পূর্ণসাম্যপ্রয়োজনপ্রতিপাদনায় পীনশব্দস্য অত্যন্তার্থে লক্ষণা। আর্য্যা জাতিঃ ॥১৩॥

(স) লব। (আনন্দোল্লাসের সহিত) আঁ্যা! স্বয়ং রঘুনাথই। ভাগ্যবশতঃ আজ সুপ্রভাত! যেহেতু এই রাজাকে দেখিলাম। (বিনয় ও কৌতুকের সহিত দেখিয়া) পিতঃ! বাল্মীকির ছাত্র লব অভিবাদন করিতেছে।

(হ) রাম। (স্নেহের সহিত আলিঙ্গন করিয়া) আইস, আইস। বৎস! অতি বিনয়ে প্রয়োজন নাই, অতি বিনয়ে প্রয়োজন নাই। অনেকবার গাঢ় আলিঙ্গন কর।

लवः। (स्वगतम्) ईदृशो मां (१) प्रत्यमीषामकारणस्नेहः मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन, यदायुधपरिग्रहं यावदध्यारूढो दुर्योगः। (प्रकाशम्) मृष्यन्त्विदानीं लवस्य बालिशतां तातपादाः (च)।

रामः। किमपराद्धं वत्सेन? (क)

---

(च) लव इति। अमीषां रघुनाथादीनाम्। ईदृशः सातिशय इत्यर्थः। अकारणस्नेहः कश्चिदपि सम्पर्करूपं हेतुं विनापि वात्सल्यमित्यर्थः। पुनः किन्तु अज्ञेन आत्मीयानात्मीयभेदज्ञानशून्येन मया। स्वयोगव्यवच्छेदने एवशब्दः। अभिद्रुग्धं द्रोहः क्रतः हिंसा समाचरितेत्यर्थः यत् यस्मात् क्रतो दुर्योगो दुरभिसन्धिः हिंसेच्छया कलुषिता चित्तवृत्तिरित्यर्थः आयुधपरिग्रहं यावत् हननाय अस्त्रधारणपर्य्यन्तम् अध्यारूढः समारूढः अतीवस्नेहकारिणं चन्द्रकेतुमेव हन्तुं शस्त्रं धृतमित्यर्थः। बालिशतां मूर्खता-प्रयुक्तसंग्रामकरणापराधं मृष्यन्तु स्वगुणेन क्षमन्ताम्। ईदृशदुष्कार्य्यकरणेन नितान्त-लज्जितोऽस्मीति भावः।

अभिद्रुग्धमिति भावे क्तः। एभ्य इति तादर्थ्यविवक्षया चतुर्थी।

(क) राम इति। वत्सेन स्नेहभाजनेन त्वया, किमपराद्धं कोऽपराधः क्रतः, यमहं मृष्यामीति भावः।

---

পরিণত ও পূর্ণাবয়ব পদ্মের অভ্যন্তরস্থ পত্রের ন্যায় অত্যন্ত পালিস ও কোমল এবং চন্দ্র ও চন্দনরসের তুল্য শীতল তোমার স্পর্শ আমাকে আনন্দিত করিতেছে ॥১৩॥

(ক্ষ) লব। (স্বগত) আমার প্রতি ইঁহাদের এইরূপ অকারণ স্নেহ; আর মূর্খ আমি, উঁহাদের বিদ্রোহ করিয়াছি। যেহেতু, দুরভিসন্ধিটা অস্ত্রধারণ পর্য্যন্ত উঠিয়াছিল। (প্রকাশ্যে) পিতা, লবের এই মূর্খতা এখন মার্জ্জনা করুন।

---

(१) अत्याहृष्टमिति पाठान्तरम्।

चन्द्र। अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन (ख)।

रामः। नन्वयमलङ्कारः क्षत्रस्य (ग)।

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते (१)
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥१४॥

(ख) लज्जया वक्तुमसमर्थं लवमवलोक्य चन्द्रकेतुरेव रामोक्तोत्तरं ददाति चन्द्रेति। अश्वानुयात्रिकेभ्यः अस्माकमश्वमेधीयाश्वानुचरेभ्यः तातस्य भवतः प्रतापाविष्करणं प्रभावप्रकाशम् उपश्रुत्य निशम्य अनेन कुमारेण वीरायितं वीरवदाचरितं युद्धं कृतमित्यर्थः। कुमारोऽयम् इममेवापराधं मन्यते इति भावः।

(ग) राम इति। अवधारणे ननुशब्दः। अयं वीरसमाचारः क्षत्रस्य क्षत्रियस्य अलङ्कारो ननु, भूषणमेवेत्यर्थः न तु दूषणमित्यभिप्रायः। मौर्वीमेखलादिदर्शनात् रामेण लवस्य क्षत्रियत्वमनुमितमिति बोध्यम्।

वीरवदाचरणस्य भूषणत्वं प्रतिपादयति न तेज इति। तेजस्वी महाप्रभावशाली जनः, प्रसृतं विस्तीर्णम् अपरेषाम् आत्मभिन्नानां तेजः प्रभावं न प्रसहते न क्षमते, सः असहनमित्यर्थः प्रकृ'स्यमानलिङ्गत्वात् पुंस्त्वात् पुंस्त्वम्, प्रकृतिनियतत्वात् स्वभावनियन्त्रितत्वात् अकृतकः अकृत्रिमः स्वो भावः स्वकीयो धर्मः। तथा च यदि देवो दिनकरः सूर्यः मयूखैः करैः अश्रान्तं सततं तपति सन्तापं करोति आग्नेयग्रावाणमित्यर्थात् तदा

(क) রাম। বৎস কি অপরাধ করিয়াছে?

(খ) চন্দ্রকেতু। অশ্বের অনুগামিগণের নিকট পিতার প্রতাপ প্রকাশ শুনিয়া, ইনি বীরের ন্যায় আচরণ করিয়াছেন।

(গ) রাম। ইহা ত ক্ষত্রিয়ের অলঙ্কারই।

(१) विषहते इति पाठान्तरम्।

आग्नेयग्रावा अग्न्युत्पादकप्रस्तरविशेषः सूर्य्यकान्तमणिरिति यावत् निकृत इव अवमानित इव सन् किं कथं केन हेतुनेत्यर्थः तेजांसि अग्नीन् वमति उद्गिरति निःसारयतीत्यर्थः, रविकरसन्ताप एव तत्र हेतुरित्यर्थः। अतएवात्मनः प्रतापप्रकाशे लवस्य वीरत्वप्रकाशो वीरस्वभावसिद्धत्वात् महापुरुषकारप्रकाशकत्वाच्च अलङ्कार एव, ततश्चात्र अपराधाभावात् क्षमायाः प्रयोजनन्तु नास्त्येव प्रत्युत लवं प्रति सुमहान् सन्तोष एव जात इति भावः।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः निकृत इवेत्युपमया सङ्कीर्णः तथा 'स तस्य स्वो भाव' इत्येतावन्मात्रोक्त्यैव निर्वाहे 'प्रकृतिनियतत्वादकृतकः' इत्यंशोपादानात् "सहसा विदधीत न क्रिया"मित्यादिसाहित्यदर्पणोदाहृतवत् अर्थगतपुनरुक्तता-दोषः, स च 'जगति तदिदं सर्वविदित'मितिवत् केनापि पाठेन समाधेयः। अल्पमात्र-रविकरस्पर्शे सूर्य्यकान्तमणेरग्न्युत्पत्तेरभावात् बहुतररविकरस्पर्श एव तस्मादग्न्युत्पत्ति-र्भवतीति प्रदर्शनार्थम् अश्रान्तपदमुपात्तमिति भाव्यम्। किन्त्वत्र वमतेर्गौणप्रयोगात् न ग्राम्यत्वदोषः अपि तु गुण एव, तथा च काव्यादर्शे—

"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥"

"पाषाणप्रस्तरग्रावोपलाश्मानः।" इत्यमरः।

एतदनुरूपो भावो यथा शाकुन्तले—

"शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्य्यकान्तास्तदन्यतेजोऽभिभवाद्वहन्ति॥"

माघेऽपि—"किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यथा॥"

शिखरिणी वृत्तम्॥१४॥

---

তেজীয়ান্ কখনও অপরের বিস্তীর্ণ তেজ সহ্য করে না; তাহা তাহার স্বভাব; কিন্তু প্রকৃতি নির্দ্দিষ্ট বলিয়া তাহা কৃত্রিম নহে। যদি সূর্য্যদেব, কিরণদ্বারা অনবরত সন্তপ্ত করিতে থাকেন; তবে সূর্য্যকান্তমণি কি অপমানিতের ন্যায় থাকিয়া, তেজ উদ্গিরণ করে? ॥১৪॥

চন্দ্র। তাত! অমর্ষোঽপ্যস্য শোভতে বীরস্য, পশ্যতু হি তাতঃ, প্রিয়বয়স্যবিনিযুক্তজৃম্ভকাস্ত্রনিষ্কম্পস্তম্ভিতানি সর্ব্বতঃ সৈন্যানি (ঘ)।

রামঃ। (বিলোক্য) বৎস! লব! সংক্রিয়ন্তামস্ত্রাণি, ত্বমপি চন্দ্রকেতো! নির্ব্যাপারবিলক্ষাণি (১) সান্ত্বয় বলানি (ঙ)।

লবঃ। যথাজ্ঞাপয়তি তাতঃ। (ইতি প্রণিধানং নাটয়তি) (চ)।

---

(ঘ) চন্দ্রেতি। অমর্ষঃ অসহিষ্ণুতা। শোভতে যুজ্যতে ইত্যর্থঃ। ন কেবলম্ অস্য বিনয়সৌজন্যাদিগুণাঃ শোভন্তে অপি তু অসহিষ্ণুত্বোঽপি অমর্ষঃ শোভতে ইত্যপেরর্থঃ। হি যস্মাৎ। প্রিয়বয়স্যেন লবেন বিনিযুক্তং নিক্ষিপ্তং যৎ জৃম্ভকাস্ত্রং তেন নিষ্কম্পং নিষ্পন্দং যথা স্যাত্তথা স্তম্ভিতানি জড়ীকৃতানি সর্ব্বতঃ সর্ব্বাসু দিক্ষু সৈন্যানি বলানি অতএব ঈদৃশমহাপ্রভাবশালিনো মহাবীরস্য পরমভাবাসহিষ্ণুতা যৎ শোভতে তত্র ন কোঽপি প্রতিবাদীস্তীতি ভাবঃ।

(ঙ) রাম ইতি। বিলোক্য সৈন্যানীতি শেষঃ। সংক্রিয়ন্তাম্ উপসংক্রিয়ন্তাং সংহ্রিয়ন্তামিতি যাবৎ। নির্ব্যাপারাণি সমরকার্য্যে সামর্থ্যাভাবাদুদ্যমাভাবেন বিলক্ষাণি "একেনৈবামুনা শিশুনা সর্ব্বে বয়ং যোদ্ধারঃ স্পন্দনহীনীকৃতা" ইত্যেবমাশ্চর্য্যান্বিতানি বলানি অস্মৎসৈন্যানি সান্ত্বয় প্রিয়বাক্যেন সমাশ্বাসয়।

"বিলক্ষো বিস্ময়ান্বিতে" ইত্যমরঃ।

(চ) লব ইতি। যথাজ্ঞাপয়তি, তথা করবাণীতি বাক্যশেষঃ অস্ত্রাণ্যুপসংহরা-

---

(ঘ) চন্দ্রকেতু। পিতঃ! এই বীরের অসহিষ্ণুতাও শোভা পাইতেছে। পিতা তাহা দেখুন, সকল দিকের সৈন্যগণই প্রিয়বয়স্য নিক্ষিপ্ত জৃম্ভকাস্ত্রের প্রভাবে নিশ্চল ও স্তব্ধ হইয়া রহিয়াছে।

(ঙ) রাম। বৎস! লব! তুমি অস্ত্রের উপসংহার কর; আর চন্দ্রকেতু! তুমিও নিরুদ্যম ও বিস্ময়াপন্ন সৈন্যগণকে আশ্বস্ত কর।

---

(১) বিলক্ষিতানীতি পাঠান্তরম্।

चन्द्र। यथादिष्टम्। (इति निष्क्रान्तः) (छ)।

लवः। प्रशान्तमस्त्रम् (ज)।

रामः। वत्स! सरहस्यप्रयोगसंहरणान्यस्त्राण्याम्नायवन्ति (झ)।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥१५॥

---

मीत्यर्थः। प्रणिधानम् अस्त्रोपसंहारार्थं समाधिं ध्यानमिति यावत् नाटयति नयनमुद्रणादिना अभिनयति।

(छ) चन्द्रेति। यथादिष्टं भवतेति शेषः, तथा करवाणीत्यर्थः।

(ज) लव इति। अस्त्रं मदीयजृम्भकास्त्रं प्रशान्तम् उपरतं निष्क्रियं जातमित्यर्थः।

(झ) राम इति। रहस्यं गोपनीयं मन्त्र इत्यर्थः। रहस्येन सह वर्त्तमाने सरहस्ये प्रयोगसंहरणे निक्षेपोपसंहारौ येषां तानि तथोक्तानि अस्त्राणि एतानि जृम्भकास्त्राणि आम्नायवन्ति गुरूपदेशसापेक्षाणीत्यर्थः।

"रहस्यम्। गोपनीयम्।" "आम्नाय।—गुरुपरम्परोपदेश" इति च शब्दकल्पद्रुमः। आम्नायो विद्यते येषां तानि आम्नायवन्ति, तद्दत्तस्य अन्यतासम्बन्धेनेति बोध्यम्। गुरूपदेशसापेक्षत्वं प्रतिपादयति ब्रह्मादय इत्यादिना गद्यांशान्तेन। प्रथमाङ्के चित्रदर्शनवेलायामपि रामेणायं श्लोकः पठितः। तत्रैव व्याख्यातः ॥१५॥

---

(চ) লব। পিতা যাহা আদেশ করেন। (এই বলিয়া ধ্যান অভিনয় করিতে লাগিল।)

(ছ) চন্দ্রকেতু। যাহা আদেশ করিলেন (এই বলিয়া চলিয়া গেল।)

(জ) লব। আমার জৃম্ভকাস্ত্র নিবৃত্ত হইয়াছে।

(ঝ) রাম। বৎস! মন্ত্র, নিক্ষেপ ও উপসংহারের সহিত জৃম্ভকাস্ত্র সকল গুরুপরম্পরায় পাওয়া যায়।

अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्र-परिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच, स तु भगवान् मह्यमित्येष गुरुपूर्वानुक्रमः (१)। कुमारस्य तु कुतः (२) सम्प्रदाय इति पृच्छामि (ञ)।

लवः। स्वतःप्रकाशान्यावयोरस्त्राणि (ट)।

(ञ) अथैतदिति। अथ ब्रह्मादीनां दर्शनानन्तरं कृशाश्वसंज्ञः कश्चित् मुनिः एतेषां जृम्भकास्त्राणां मन्त्राणां पारस्य शेषपर्य्यन्तस्य अयनं गमनं ज्ञानमिति यावत्, तत् मन्त्रपारायणमेव उपनिषत् गूढविद्या ताम्। सहस्रात् परे इति परःसहस्राः सहस्राधिका इत्यर्थः ये परिवत्सराः संवत्सराः तान् व्याप्य अन्ते समीपे वसतीति तस्मै सहस्रवत्सरान् यावत् छात्रभावापन्नायेत्यर्थः कौशिकाय कुशिकवंश्याय। स तु भगवान् विश्वामित्रः मह्यं प्रोवाच इत्यन्वयः, गुरूणाम् उपदेष्टृणां पूर्वः पूर्वकालवर्त्ती, अनुक्रमः उपदेशपरम्परा कुमारस्य तव कुतः कस्मात् आद्यगुरोः सकाशात् सम्प्रदायः उपदेशपरम्परा।

(ट) लव इति। स्वतः स्वयमेव उपदेशं विनेत्यर्थः प्रकाशः आविर्भावो येषां तानि। अस्त्राणि जृम्भकास्त्राणि।

ব্রহ্মা প্রভৃতি প্রাচীন গুরুগণ, বেদের মঙ্গলের নিমিত্ত সহস্রেরও অধিক বৎসর কাল তপস্যা করিয়া স্বকীয় তপোময় তেজস্বরূপ এই অস্ত্রগুলিকে দেখিয়াছিলেন ॥১৫॥

(ঞ) তাহার পর ভগবান্ কৃশাশ্বমুনি, সহস্র বৎসরেরও অধিক কাল ছাত্ররূপে অবস্থিত কুশিকনন্দন বিশ্বামিত্রের নিকট জৃম্ভকাস্ত্রের মন্ত্রাত্মক গুপ্ত বিদ্যা বলিয়াছিলেন ; সেই ভগবান্ বিশ্বামিত্র, আমার নিকট বলিয়াছিলেন ইহাই হইল গুরুপরম্পরা ; কিন্তু কুমারের গুরুপরম্পরা কোথা হইতে প্রবর্ত্তিত হইয়াছে ইহা জিজ্ঞাসা করি।

(१) इत्येष क्रमः, इत्येष पूर्वानुक्रम इति पाठभेदौ। (२) क इति क्वापि पाठः।

रामः। (विचिन्त्य) किं न सम्भाव्यते (१) प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात्, द्विवचनन्तु कथम् (ठ)।

लवः। भ्रातरावावां यमजौ (ड)।

रामः। स तर्हि द्वितीयः कः (२) (ढ)।

नेपथ्ये। भाण्डायन! भाण्डायन! (ण)

(ठ) राम इति। विचिन्त्य किञ्चिद्विविच्येत्यर्थः। किं न सम्भाव्यते जगतीति शेषः। प्रकृष्टम् अत्यन्तं यत् पुण्यं पूर्वजन्मार्जितो धर्म्मः, तस्य परिपाकः फलजननोन्मुखीभावः स एव उपादानं कारणं यस्य स तथोक्तः, महिमा माहात्म्यं स्यात् भवेत्, पूर्वजन्मार्जितात् कस्माच्चित् महापुण्यात् स्वयमेव जृम्भकास्त्राणामाविर्भावो भवेदित्यर्थः। तु किन्तु द्विवचनम् आवयोरिति षष्ठीद्विवचनप्रयोगः कथम्, एकस्मिन्नर्थे एकवचनस्यैवानुशासनादिति भावः।

(ड) लव इति। यमजौ युगपदेकगर्भजातौ। अतएव द्वयोरर्थयोर्द्विवचनप्रयोगः कृत इति भावः।

(ढ) राम इति। तर्हि युवयोर्द्वित्वे सतीत्यर्थः।

(ण) नेपथ्ये इति। भाण्डायनो नाम कश्चित् मुनिशिष्यः, स तु चतुर्थाङ्कविष्कम्भके परिचितः।

---

(ট) লব। এই অস্ত্রগুলি স্বভাবতই আমাদের হৃদয়ে আবির্ভূত হইয়াছে।

(ঠ) রাম। (চিন্তা করিয়া) জগতে কি সম্ভাবনা না করা যায়? হয় ত অতিরিক্ত পুণ্যের ফলে এই অনির্ব্বচনীয় মাহাত্ম্য হইবে; কিন্তু দ্বিবচন দিলে কেন?

(ড) লব। আমরা যমজ দুই ভাই।

(ঢ) রাম। তবে সেই দ্বিতীয়টী কে?

(ণ) নেপথ্যে। ভাণ্ডায়ন! ভাণ্ডায়ন!

---

(१) क्वापि पाठोऽयं नास्ति। (२) क इति पाठान्तरम्।

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ ? सखे ! तथेति ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥१६॥

रामः । अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम् ।
नवनीलनीरधर-धीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥१७॥

---

आयुष्मत इति । आयुष्मतः दीर्घायुःशालिनो लवस्य नरेन्द्रसैन्यैः राज्ञो रामस्य सैनिकैः सह आयोधनं युद्धम्, प्रवृत्तमिति शेषः, इति ननु किम् आत्थ ब्रवीषि ? इति कुशस्य जिज्ञासा । सखे ! बन्धो ! कुश ! तथा सत्यम्, नरेन्द्रसैन्यैः सह लवस्य युद्धं प्रवृत्तमेवेत्यर्थः । इति भाण्डायनस्योत्तरम् । तदा अद्य भुवनेषु अधिराजशब्दः प्रधानो राजा इति शब्दः अस्तं लोपम् एतु प्राप्नोतु । अद्य मदीयसमरकर्म्मणा न केवलम् अधिराजस्य रामस्य विनाशो भवेत्, अपि तु अधिराजशब्दस्यापि चिराय विलोपो भवेदिति भावः । तथा अद्य क्षत्रस्य क्षत्रियजातेः शस्त्राण्येव शिखिनो वह्नयस्ते शस्त्रशिखिनः शमं निर्वाणं यान्तु प्राप्नुवन्तु । अद्य क्षत्रियजातेरपि शस्त्राग्निनिर्वाणं मया विधेयमिति भावः । इति भाण्डायनमुखात् युद्धवार्त्तां सत्यामवगम्य कुशस्य सदर्पोक्तिरियम् ।

अत्र शस्त्रशिखिन इति निरङ्गं केवलरूपकमलङ्कारः ।

किलेति लोकवार्त्तायाम्, ननु किमित्येकमव्ययं प्रश्ने ।

वसन्ततिलका वृत्तम् ॥१६॥

अथेति । अथेति प्रश्नबोधकम् । इन्द्रमणिर्नीलकान्तमणिः तस्येव मेचका श्यामा

---

রাজসৈন্যের সহিত আয়ুষ্মান্ লবের যুদ্ধ আরম্ভ হইয়াছে, তুমি কি এই কথা বলিতেছ ? সখে ! তাহাই । তবে আজ জগতে মহারাজ শব্দ অস্ত যাউক এবং আজ ক্ষত্রিয়জাতির অস্ত্রানল নির্ব্বাণ প্রাপ্ত হউক ॥১৬॥

लवः। अयमसौ मम ज्यायानार्य्यः कुशो नाम भरताश्रमात् प्रतिनिवृत्तः [त]।

रामः। [सकौतुकम्] वत्स! इत एवाह्वयैनमप्यायुष्मन्तम् [थ]।

लवः। एवम्। [इति परिक्रामति] [द]।

---

छविः कान्तिर्यस्य, स इन्द्रमणिमेचकच्छविः, कोऽयं बालकः ध्वनिना कण्ठस्वरेणैव न तु सन्निधानेन आलिङ्गनादिना इत्येवशब्दार्थः, दत्ताः पुलका रोमाञ्चा यस्य तं दत्तपुलकम्, आनन्दातिरेकादुत्पादितरोमाञ्चमित्यर्थः माम्, नवस्य नवीनस्य सद्यः समुत्पन्नस्येत्यर्थः अतएव नीलस्य श्यामलस्य नीरधरस्य मेघस्य घोरगर्जितवयो गम्भीरगर्जनसमये वर्षाकाले इत्यर्थः बद्धानि धृतानि कुड्मलानि मुकुलानि येन तस्य कदम्बस्य नीपवृक्षस्य डम्बरः तुलना यत्र तं तथोक्तं करोति। मेघेन सह कुशस्य, तद्गर्जितेन सह कुशकण्ठस्वरस्य, कदम्ब-वृक्षेण सह रामस्य, कदम्बमुकुलैः सह च रामरोमाञ्चानां सादृश्यं बोध्यम्।

अत्र द्वयोरुपमयोर्मिथो नैरपेक्ष्यात् संसृष्टिः। परार्द्धे वृत्त्यनुप्रासच्छेकानुप्रासयो-रेकाश्रयानुप्रवेशरूपः सङ्करश्च।

"कालश्यामलमेचकाः।" "निर्य्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इति चामरः।

मञ्जुभाषिणी वृत्तम् ॥१७॥

(त) लव इति। अत्र तच्छब्दसमानार्थकोऽदःशब्दः, तेन अयं दृश्यमानः, असौ सः, पूर्व्वमावेदित इत्यर्थः। ज्यायान् ज्येष्ठः अग्रज इति यावत्।

(थ) राम इति। इत एव अस्मिन्नेव स्थाने, ममान्तिक एवेत्यर्थः।

---

राम। ইন্দ্রনীলমণির ন্যায় শ্যামলকান্তি এটী কে? নীলবর্ণ নূতন মেঘের গম্ভীর গর্জ্জনের সময় কলিকাধারী কদম্ববৃক্ষের ন্যায় আমাকে কণ্ঠস্বরেই রোমাঞ্চিত করিতেছে ॥১৭॥

(ত) লব। ইনি আমার সেই জ্যেষ্ঠভ্রাতা আর্য্য কুশ, ভরতের আশ্রম হইতে ফিরিয়া আসিয়াছেন।

(থ) রাম। (কৌতুকের সহিত) বৎস! এই আয়ুষ্মান্‌কেও এই খানেই আহ্বান কর।

[ततः प्रविशति कुशः।]

कुशः। [साङ्कुतहर्षधैर्य्यं धनुरास्फालयन्] [ध]
दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनो-
र्दृप्तानां दहनाय [१] दीपितनिजक्षत्रप्रतापाग्निभिः।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्र-[२] स्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः॥१८॥
[विकटं परिक्रामति] [न]।

(द) लव इति। एवमित्यङ्गीकारार्थमव्ययम्। परिक्रामति कुशमाह्वातुं पादक्षेपं करोति।

(ध) कुश इति। एकाकिना बालकेन लवेन निहतासंख्यसैन्यदर्शनादद्भुतं मयापीदानीं योद्धव्यमिति युद्धसम्भवात् वीरस्वभावसुलभो हर्षः, स्वाभाविकञ्च धैर्य्यम् अव्ययता, तैः सहेति तथोक्तम्। आस्फालयन् आन्दोलनपूर्वकमाकर्षन्।

दत्तेन्द्राभयेति। भगवतो महाप्रभावान्वितात्, विवस्वतः सूर्य्यस्यापत्यमिति वैवस्वतः तस्मात् मनोः आ, वैवस्वतमनोरधिकारसमयमारभ्येत्यर्थः दत्ता इन्द्राय अभयदक्षिणा असुरसंहारेण अभयदानं यैस्तथोक्तैः, तथा दृप्तानां दर्पोद्धतानां जनानां दहनाय शोषाय अवनतभावमनापन्नानाम् उन्मूलनायेत्यर्थः दीपितः सन्धुक्षितः निजः स्वकीयः क्षत्रप्रतापः क्षत्रियप्रभाव एव अग्निर्यैः तथोक्तैः, आदित्यैः सूर्य्यवंशीयैः नृपतिभिः राजभिः सह इत्यर्थः यदि विग्रहो युद्धं भवेदित्यर्थः ततस्तर्हि, दीप्तानाम् उज्ज्वलानाम् अस्त्राणामायुधानां स्फुरन्तीभिः समन्तात् प्रसरन्तीभिः, उग्राभिर्भयानकाभिः, दीधितिशिखाभिः रश्मिज्वालाभिः नीराजिता निर्मञ्छिता कृतारत्रिका इति यावत् ज्यागुणो यस्य तत्, दीपमालया नीराजन-समये यथा तदीयरश्मिज्वालाभिः देवताप्रतिमा समुज्ज्वला स्यात् तथा निशितानामस्त्राणां

(द) লব। হঁহাই করি। (এই বলিয়া পাদক্ষেপ করিতে লাগিল।)
(তদনন্তর কুশের প্রবেশ।)

(१) दुष्टानां दमनायेति पाठान्तरम्। (२) दिव्यास्त्रेति पाठभेदः।

रामः। कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः (प)।
दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।

---

रश्मिज्वालाभिः यस्य धनुषो मौर्वी समुज्ज्वला, तदित्यर्थः एतत् मम धनुः कार्म्मुकं धन्यं श्लाघार्हम्। महाधनुरिदं महावीरेषु व्यापारितं सत् चरितार्थमेव भवेदिति महानेव ममानन्द इति भावः।

अत्र क्षत्रप्रतापाग्निभिरित्यत्र निरङ्गं केवलरूपकमलङ्कारः। तथा दीधितिमिश्रितायां दीपमालात्वारोपः ज्यायां देवताप्रतिमात्वारोपस्य नीराजितपदप्रकाश्यो व्यङ्ग्य इति वस्तुना रूपकालङ्कारध्वनिः।

"नीराजनम् आरात्रिक"मिति साम्प्रदायिकाः। शार्दूलविक्रीडितं वृत्तम् ॥१८॥

(न) विकटमिति। विकटं दर्पोद्धतं यथा स्यात्तथा परिक्रामति पादक्षेपं करोति।

(प) राम इति। अस्मिन् दृश्यमाने नवागते, क्षत्रियपोतके क्षत्रियबालके कोऽपि अनिर्वचनीयः, पौरुषस्य पुरुषकारस्य महावीरत्वस्येत्यर्थः अतिरेकः अतिशयः विद्यत इति शेषः।

---

(ধ) কুশ। (বিস্ময়, আনন্দ ও ধৈর্য্যের সহিত ধনু আস্ফালন করতঃ) ভগবান্ বৈবস্বতমনু হইতেই যাঁহারা দেবরাজকে অভয় দান করিয়া আসিতেছেন এবং দর্পিত লোকের দমনের জন্য যাঁহারা স্বকীয় ক্ষত্রিয়-প্রতাপানল প্রজ্বালিত করিয়া থাকেন; সেই সূর্য্যবংশীয় রাজগণের সহিত যদি যুদ্ধ সংঘটিত হয়; তাহা হইলে উজ্জ্বল অস্ত্রসমূহের প্রকাশমান কিরণ-শিখাদ্বারা কৃতারত্রিক গুণ সমন্বিত আমার এই ধনু ধন্য হইবে ॥১৮॥

(ন (এই বলিয়া দর্পোদ্ধতভাবে পাদক্ষেপ করিতে লাগিল।)

(প) রাম। এই ক্ষত্রিয়বালকে অনির্ব্বচনীয় পুরুষকারাতিশয় রহিয়াছে। (কারণ—)

कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमैत्युत दर्प एव ॥१९॥

पौरुषातिरेकं प्रतिपादयति दृष्टिरिति। दृष्टिः अस्य कुमारस्य दृष्टिपातः तृणीकृतः तृणवदतितुच्छतया गणितः जगत्त्रयस्य त्रिभुवनस्य सत्त्वानां प्राणिनां सारो बलं यया सा तथोक्ता, असौ बालकः दृष्टिपातभङ्ग्या सर्वेषामेव त्रिभुवनवासिनां प्राणिनां बलं तुच्छमिव मन्यते इति प्रतीयत इत्यर्थः। धीरा सधैर्य्या अव्याकुलेति यावत् उद्धता सावष्टम्भा सदर्पेत्यर्थः गतिः अस्य पादक्षेपः धरित्रीं भूमिं नमयतीव प्रह्वीकरोतीव। कौमारके शैशवेऽपि वयसि गिरिवत् पर्वत इव गुरुतां गौरवं भारवत्त्वमित्यर्थः दधानो वहन् अयं बालकः किं किमुत वीरो रसः शरीरधारी वीररसस्य स्थायिभाव उत्साह इत्यर्थः, उत अथवा दर्प एव अन्तःसारजातो मूर्त्तिमानहङ्कार एव एति आगच्छति। असाधारणोऽयं बालक इति भावः।

अत्र प्रथमे चरणे भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षा, द्वितीये भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा, द्वितीयपादे तु उत्साहदर्पौ गुणपदार्थाविति गिरिवदित्युपमासङ्कीर्णं भावाभिमानि वाच्यं गुणोत्प्रेक्षाद्वयम्, एतेषां मिथो नैरपेक्ष्यात् संसृष्टिः। किन्त्वत्र वीरो रस इत्युक्तावपि न रसस्य स्वशब्दोक्तिदोषः वक्तृजनेन रसतया आस्वद्यमानस्यैव स्ववाचकपदेनोपस्थितौ तद्दोषाङ्गीकारात् अत्र तु रामेण वीररसत्वेनोत्प्रेक्षितो न तु समास्वदितः; अन्यथा शृङ्गारादिशब्दोच्चारणमात्रेणैव तद्दोषाङ्गीकारे "शृङ्गारवीरकरुणाद्भुत-हास्यभयानकाः" इत्यमरपरिगणनायामपि तद्दोषप्रसङ्ग इति विचक्षणैर्विवेचनीयम्।

"सत्त्वं द्रव्ये स्वभावे च व्यवसायप्रभावयोः। पिशाचादौ गुणे प्राणाबलजन्तुषु चेतसि॥" इत्यजयः। "सारो बले स्थिरांशे च न्याय्ये क्लीवे वरे त्रिषु"त्यमरः।

एतीति आङ् पूर्वस्य इण्धातोः प्रयोगः। वसन्ततिलका वृत्तम् ॥१९॥

ইহার দৃষ্টি, ত্রিভুবনস্থ প্রাণিগণের সামর্থ্যকে যেন তৃণের ন্যায় তুচ্ছ করিতেছে; ধীর ও উদ্ধত গতি যেন পৃথিবীকে অবনত করিতেছে এবং এই বালক বাল্য বয়সেও পর্ব্বতের ন্যায় ভার বহন করতঃ, কি মূর্ত্তিমান্ বীররস, না সাক্ষাৎ দর্পরূপ হইয়াই আসিতেছে ॥১৯॥

लवः। (उपसृत्य) जयत्यार्य्यः।

कुशः। नन्वायुष्मन्! किमियं वार्त्ता युद्धं युद्धमिति (१) (फ)।

लवः। यत्किञ्चिदेतत्, दृप्तभाव-(२) मुत्सृज्यार्य्योऽस्मिन् विनयेन वर्त्तताम् (ब)।

कुशः। किमर्थम्?

लवः। एष (३) देवो रघुपतिस्तिष्ठति, स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्सन्निकर्षस्य (भ)।

(फ) कुश इति। नन्विति सम्बोधने। युद्धं युद्धमितीयं वार्त्ता किं श्रुतेति शेषः। वीप्सायां युद्धं युद्धमिति द्विरुक्तिः।

(ब) लव इति। एतद्युद्धं यत्किञ्चित् अतीवतुच्छमित्यर्थः, न खलु तव किमप्युद्वेगकारणमस्तीति भावः। साहङ्कारोक्तिरियम्। दृप्तभावं दर्पोद्धतभावम्, उत्सृज्य विहाय, आर्य्यो भवान् अस्मिन् महापुरुषे अस्मान्तिक इत्यर्थः विनयेन नम्रभावेन वर्त्तताम् आचरतु।

(भ) लव इति। रघुपतिः स्वयं रामचन्द्रः। स्निह्यति वात्सल्यं करोति। युष्मत्सन्निकर्षस्य तव सन्निधानस्य उत्कण्ठते औत्सुक्येन स्मरति तव साक्षात्कारमिच्छतीत्यर्थः। युष्मत्सन्निकर्षस्येति "स्मृत्यर्थकर्म्मणी"ति षष्ठी।

লব। (নিকটে যাইয়া) আর্য্যের জয় হউক।

(ফ) কুশ। আয়ুষ্মন্! "যুদ্ধ যুদ্ধ" এ বৃত্তান্তটা কি হে?

(ব) লব। ইহা যৎসামান্য কিছু। আপনি দর্পিতভাব পরিত্যাগ করিয়া, উঁহার নিকটে বিনয়সহকারে অবস্থান করুন।

কুশ। কি নিমিত্ত?

(ভ) লব। এই রাজা রঘুনাথ অবস্থান করিতেছেন; তিনি আমাদের

(१) क्वापि युद्धं युद्धमिति द्विरुक्तिर्नास्ति। (२) उद्धतदृप्तभावमिति पाठान्तरम्।

(३) पर्वेति क्वचित् पाठः।

कुशः। (सतर्कम्) स रामायणकथानायको ब्रह्मकोषस्य (१) गोपायिता ? (म)

लवः। अथकिम् ?

कुशः। आशंसनीयपुण्यदर्शनः स महात्मा, किन्तु कथमुपगन्तव्य इति न सम्प्रधारयामि (य)।

लवः। यथा गुरुस्तथोपचारेण (र)।

---

(म) कुश इति। तर्केण विवेचनेन सहेति सतर्कं विविच्येत्यर्थः। स प्रसिद्धः, रामायणमेव कथा उपाख्यानं तस्या नायकः प्रधानपुरुषः उपजीव्य इत्यर्थः, ब्रह्मकोषस्य वेदरूपधनस्य गोपायिता रक्षिता वेदविरोधिराक्षसादिविनाशेन वैदिकाचाराणां पालयितेत्यर्थः। काकुस्वरेण प्रश्नो व्यज्यते।

(य) कुश इति। आशंसनीयं वाञ्छनीयं पुण्यं पावनं दर्शनं साक्षात्कारो यस्य सः। कथं केन प्रकारेण कीदृशेन भावेनेत्यर्थः उपगन्तव्यः उपस्थातव्यः साक्षात्कर्त्तव्य इत्यर्थः। सम्प्रधारयामि निश्चिनोमि।

(र) लव इति। गुरुर्गुरुजनो यथा, तथोपचारेण तादृशव्यवहारेण विनयनम्रभावेनेत्यर्थः। स उपगन्तव्य इत्यन्वयः।

---

প্রতি স্নেহ প্রকাশ করিতেছেন এবং আপনার সন্নিধানের জন্য উৎকণ্ঠিত হইয়াছেন।

(ম) কুশ। (বিতর্কের সহিত) সেই রামায়ণ-উপাখ্যানের নায়ক এবং বেদনিধির রক্ষক ?

লব। হাঁ।

(য) কুশ। সেই মহাত্মার পুণ্যজনক দর্শন বাঞ্ছনীয় বটে; কিন্তু কি ভাবে উপস্থিত হইব, তাহা স্থির করিতে পারিতেছি না।

(র) লব। গুরুজনের নিকট যেমন, তেমন ভাবে উপস্থিত হইবেন।

---

(१) ब्रह्मघोषस्येति पाठान्तरम्।

कुशः। अयि! (१) कथं नामैतत्? (ल)

लवः। अत्युदात्तः सुजनश्चन्द्रकेतुरौर्म्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते, तेन तत्सम्बन्धेन च धर्म्मतात एवायं राजर्षिरिति (व)।

कुशः। सम्प्रति करणीयो (२) राजन्येऽपि प्रश्रयः (श)।

---

(ल) कुश इति। अयीति सखेहसम्बोधने। एतत् गुरुवदुपचरणं कथं नाम, निःसम्पर्के रामे गुरुवत् व्यवहारः केन हेतुनेत्यर्थः।

(व) लव इति। अत्युदात्तः अतीवोदारचेताः, सुजनः सौजन्यपूर्णः सत्स्वभावान्वित इत्यर्थः और्म्मिलेयः ऊर्म्मिलायाः पुत्रः। प्रियवयस्य इति इत्यभिधायेत्यर्थः सख्येन सौहार्द्देन माम् उपतिष्ठते मैत्रीकरणेन मामाराध्नोति सन्तोषयतीत्यर्थः "पथ्याराधनीयश्च" इत्यात्मनेपदम्। तेन हेतुना, चकार एवार्थे, तत्सम्बन्धेन चन्द्रकेतुना सखित्व-सम्पर्केणैवेत्यर्थः, अयं राजर्षिः रामः धर्म्मेण तातः सुहृदाचारानुसारेण पितृस्थानीय इत्यर्थः, इति हेतोः, गुरुवत् व्यवहारः कर्त्तव्य इति भावः।

(श) कुश इति। सम्प्रति धर्म्मताततसम्पर्के सतीत्यर्थः राजन्येऽपि क्षत्रिये रामेऽपि प्रश्रयः विनयः करणीयः कर्त्तुं योग्यः, अन्यथा उपनयनप्रकारादिदर्शनादवगतस्य क्षत्रियस्य मे अन्यक्षत्रियं प्रति विनयाचरणेन कापुरुषता स्यादिति भावः।

"विनयः प्रश्रयः समा"वित्यमरः।

---

(ল) কুশ। ওরে! এরূপ করিতে হইবে কেন?

(ব) লব। ঊর্ম্মিলার পুত্র চন্দ্রকেতু অত্যন্ত উদারস্বভাব এবং সুজন; তিনি "প্রিয়বয়স্য" এই কথা বলিয়া, আমাকে বন্ধুভাবে আপ্যায়িত করিয়াছেন; সুতরাং তাঁহার সম্পর্কে এই রাজর্ষি আমাদের ধর্ম্মপিতাই হন।

(শ) কুশ। এখন ক্ষত্রিয়েও বিনয় করিতে হইল।

---

(१) अयीति क्वापि पाठः। (२) अवचनीय इति पाठभेदः।

लवः । पश्यत्वेनमाकारानुभावगाम्भीर्य्यसम्भाव्यमानविविध-लोकोत्तरचरितातिशयमार्य्यो महापुरुषम् (ष) ।

कुशः । (निर्वर्ण्य)

अहो प्रासादिकं (१) रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत् (२) ॥२०॥

---

(ष) लव इति । आकारेण आकृत्या, अनुभावेन प्रभावेण देहस्य तेजोविशेषेण इत्यर्थः गाम्भीर्य्येण दुरवगाहस्वभावेन च सम्भाव्यमानः अनुमीयमानः विविधानां नाना-प्रकाराणां लोकोत्तराणाम् अलौकिकानां चरितानां कृतकार्य्याणाम् अतिशयो बाहुल्यं यत्र स तथोक्तः आकृतिप्रभृतिदर्शनेनैव "यत्राकृतिस्तत्र गुणा वसन्ति" इति न्यायात् अलौकिक-चरित इत्यनुमातुं शक्य इत्यर्थः । तमेनं महापुरुषं पश्यतु ।

अहो इति । अहो आश्चर्य्यम्, रूपम् आकृतिः, प्रासादिकं प्रसादप्रान्तं सर्वान् प्रत्येव अनुग्रहसत्वात् सौम्या मूर्त्तिरित्यर्थः, तथा अनुभावः देहप्रभावः पावनः पवित्रः, अतएव रामायणस्य कविः वर्णयिता प्रणेता भगवान् वाल्मीकिरित्यर्थः स्थाने युक्तमेव वाचं देवीं वाग्देवीं सरस्वतीं व्यवीवृतत् रामायणरूपेण विवर्त्तितवान् रामायणकाव्यरूपेण परिणमित-वानित्यर्थः । ईदृशस्य महापुरुषस्य चरितमवलम्ब्य प्रणीतं रामायणमहाकाव्यं सर्वथैव सङ्गतमभूदित्यर्थः ।

अत्र रामस्य महापुरुषत्वप्रतिपादनकार्य्यं प्रति रूपलक्षणे एकस्मिन् कारणे सत्यपि पावनानुभवरूपकारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः, परार्द्धं प्रति पूर्वार्द्धं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च अनयोरङ्गाङ्गिभावेन सङ्करः ।

व्यवीवृतदिति विवर्त्तमानं प्रयुङ्क्ते इति हेतौ णिचि सति अद्यतन्या दिः ॥२०॥

---

(ষ) লব। আকৃতি, প্রভাব ও গাম্ভীর্য্যদ্বারাই যাঁহার নানাবিধ অলৌকিক সাতিশয় কার্য্যকলাপ অনুমান করা যায়; এই সেই মহাপুরুষকে আর্য্য, দর্শন করুন।

---

(१) प्रासीदिकमिति पाठान्तरम् । (२) व्यवीवृणदिति पाठः ।

(उपसृत्य) तात! प्राचेतसान्तेवासी कुशोऽभिवादयते (स)।

रामः। एह्येहि आयुष्मन्! (१)

अमृताध्मातजीमूतस्निग्धसंहननस्य ते।
परिष्वङ्गाय (२) वात्सल्यादयमुत्कण्ठते जनः ॥२१॥

(परिष्वज्य स्वगतम्) तत्किमपत्यमयं दारकः? (ह)

(स) उपसृत्येति। उपसृत्य रामसमीपमुपेत्य। प्राचेतसान्तेवासी वाल्मीकिशिष्यः।

अमृतेति। अयं जनः अहमित्यर्थः वात्सल्यात् स्नेहात् अमृतेन जलेन आध्मातः स्फीतः पूर्ण इति यावत् यो जीमूतो मेघः स इव स्निग्धम् मसृणं संहननं शरीरं यस्य तस्य तथोक्तस्य ते तव परिष्वङ्गाय आलिङ्गनाय उत्कण्ठते उत्सुको जायते।

अत्र समासगतोपमालङ्कारः।

"अमृतम्।—जलम्।" "जीमूतः। मेघः।" "संहननम्। शरीरम्" इति च शब्दकल्पद्रुमः।

परिष्वङ्गायेति "तुमर्थाच्च भाववाचिन" इति चतुर्थी ॥२१॥

(ह) परिष्वज्येति। तत्किमित्येकमव्ययं प्रश्ने। अयं दारको बालकः तत्किम् अपत्यं मम सन्तानः किमित्यर्थः।

কুশ। (দর্শন করিয়া) কি আশ্চর্য্য প্রসন্ন মূর্ত্তি এবং পবিত্র প্রভাব; সুতরাং রামায়ণের কবি (বাল্মীকি) বাগ্‌দেবীকে (ভাষাকে) যুক্তিসঙ্গত-ভাবেই পরিণমিত করিয়াছেন ॥২০॥

(স) (নিকটে যাইয়া) পিতঃ! বাল্মীকির ছাত্র কুশ আপনাকে অভিবাদন করিতেছে।

রাম। আয়ুষ্মন্! আইস আইস।

এই ব্যক্তি বাৎসল্যবশতঃ, জলপূর্ণ মেঘের ন্যায় তোমার স্নিগ্ধ দেহের আলিঙ্গনের নিমিত্ত উৎকণ্ঠিত হইতেছে ॥২১॥

(१) क्वचित् एह्येहीति द्विरुक्तिर्नास्ति। (२) परिष्वङ्गस्येति पाठभेदः।

अङ्गादङ्गात् स्रुत इव (१) निजो देहजः स्नेहसारः(२)
प्रादुर्भूय स्थित इव वहिश्चेतनाधातुरेव।
सान्द्रानन्दक्षुभितहृदयप्रस्रवेनेव (३) सृष्टो
गात्रं स्लेषे (४) यदमृतरसस्रोतसा सिञ्चतीव॥२२॥

नन्वयं दारकः अपत्यमिति कुतः संशय्यते इत्याह अङ्गादिति। यदयमात् अङ्गात् अङ्गात् सर्वेभ्यो देहावयवेभ्य इत्यर्थः स्रुतो विगलितः, निजः स्वकीयः देहजः शरीरजातः स्नेहस्य सार उत्कृष्टांश इव, तथा चेतनाधातुरेव चैतन्यपदार्थ एव प्रादुर्भूय मूर्त्तिमान् सन् आविर्भूय वहिः देहात् वहिर्देशे स्थित इव, तथा सान्द्रेण निविड़ेन आनन्देन आमोदेन क्षुभितम् आलोड़ितं यद्हृदयं तस्य प्रस्रवेन रसेन निर्य्यासेनेति यावत् सृष्टो निर्म्मित इव, तथा स्लेषे आलिङ्गने आलिङ्गनसमय इत्यर्थः अमृतरसस्य पीयूषद्रवस्य स्रोतसा प्रवाहेण धारयेत्यर्थः गात्रं मम देहं सिञ्चतीव स्नपयतीव अयं दारक इति शेषः। पुत्रमन्तरेण ईदृशमभूतपूर्वमानन्दं न कोऽपि जनयति न वा प्रियतमो भवेत् अथ च सीतायाः प्रसवात् पूर्वमेवाभावात् कथं वा तत्सम्भव इति संशय एव जायत इति भावः।

अत्र प्रथमपादे भावाभिमानिनी गुणोत्प्रेक्षा, अपरेषु तु त्रिषु पादेषु भावाभिमानिन्यो वाच्यास्तिस्रः क्रियोत्प्रेक्षाः, आसां परस्परनिरपेक्षस्थितेः संसृष्टिः।

अत्र धातुशब्दः पदार्थार्थे कविना विवक्षितः। अङ्गादङ्गादिति वीप्सायां द्विरुक्तिः।

मन्दाक्रान्ता वृत्तम्॥२२॥

(হ) (আলিঙ্গন করিয়া স্বগত) তবে কি এই বালকটী আমার সন্তান? যেহেতু, প্রত্যেক অঙ্গ হইতে বিগলিত স্বকীয় দেহজাত স্নেহের সারাংশই যেন মনে করিতেছি, চৈতন্য পদার্থই যেন প্রাদুর্ভূত হইয়া বাহিরে অবস্থান করিতেছে, প্রগাঢ় আনন্দে উদ্বেলিত হৃদয়ের রসেই যেন নির্ম্মিত হইয়াছে

(१) च्युत इव, स्नुत इव, स्रुत इव इति पाठान्तराणि। (२) स्नेहजो देहसार इति पाठान्तरम्। (३) प्रस्रवेणेति विभिन्नः पाठः। (४) गात्रश्लेषे गात्राश्लेषे इति भिन्नौ पाठौ।

लवः। तात! ललाटन्तपो घर्म्मदीधितिः, तदत्र सालच्छाये मुहूर्त्तमासनपरिग्रहं करोतु तातः (च)।

रामः। यदभिरुचितं वत्साय (क)।

(सर्वे परिक्रम्योपविशन्ति।)

रामः। (स्वगतम्) अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥२३॥

(च) लव इति। घर्म्मा उष्णा दीधितयः किरणा यस्य स घर्म्मदीधितिः सूर्य्यः ललाटं तपतीति ललाटन्तपः भालदेशसन्तापजनकः नितान्ततापजनक इत्यर्थः तस्मात् अनावृतस्थाने अवस्थानेन सर्व्वेषामेव रविकिरणतापानुभवात्, सालानां छायेति सालच्छायं तस्मिन् सर्ज्जतरुतले, इत्यर्थः, मुहूर्त्तं कियन्तं कालमित्यर्थः आसनपरिग्रहम् उपवेशनस्वीकारम्।

ललाटन्तप इति "ललाटे तप" इति खश्। सालच्छाय इति "विभाषा सेनासुराच्छायाशालानिशाना"मिति पक्षे क्लीवत्वम्।

(क) राम इति। वत्साय यदभिरुचितं प्रीतिकरमित्यर्थः, तदेव करोमीति भावः। वत्सायेति "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदाने चतुर्थी।

अहो इति। अहो आश्चर्य्यम्, प्रश्रयस्य विनयस्य योगे सत्यपि कुशस्य च लवस्य च उभयोरेवेत्यर्थः गतिः पादविक्षेपः स्थितिः दण्डायमानता, आसनम् उपवेशनं तान्यादि-

---

এবং আলিঙ্গনের সময় অমৃতরসের স্রোতেই যেন আমার দেহ সিক্ত করিতেছে ॥২২॥

(ক্ষ) লব। পিতঃ! সূর্য্য ললাট সন্তপ্ত করিতেছেন (সূর্য্য সম্মুখে পড়িয়াছেন); অতএব এই সালবৃক্ষের ছায়ায় পিতা কিছুকাল আসন গ্রহণ করুন।

(ক) রাম। বৎসের যাহা অভিরুচি হইয়াছে।

(সকলে পাদক্ষেপ করিয়া উপবেশন করিলেন।)

वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति।
अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा
विकसितमिव पद्मं (१) विन्दवो माकरन्दाः ॥२४॥

---

येषां ते गतिस्थित्यासनादयो भावाः शारीरचेष्टाः साम्राज्यं भावि सार्वभौमत्वं शंसन्ति सूचयन्तीति साम्राज्यस्य चिह्न इति मे मतिर्भवतीत्यर्थः।

विनयप्रकाशकाले कृत्रिमशारीरचेष्टाप्रदर्शनसम्भावना नास्तीति प्रतिपादनाय प्रश्रययोगेऽपीत्युक्तम्।

"विनयः प्रश्रयः समा"वित्यमरः।

साम्राज्यप्राप्तिचिह्नमुक्तं सामुद्रके—

"प्रसन्नमूर्त्तिः समुदारचेताः वंशाभिमानः सुखभाग्विलासः।
अनीतिभीरुर्गुरुसाधुनम्रः साम्राज्यलक्ष्मीं लभते मनुष्यः॥"
"अकर्म्मकठिनौ हस्तौ पादावध्वनिकोमलौ।
यस्य पाणितलौ रक्तौ तस्य राज्यं विनिर्द्दिशेत्॥" इत्यादि ॥२३॥

वपुरिति। ते प्रसिद्धाः, मनोज्ञाः, सुन्दराः, रश्मयः किरणाः, अमलिनं निर्म्मलं स्वभावोज्ज्वलमित्यर्थः रत्नं मणिमिव, तथा मकरन्दानां पुष्परसानामिमे इति माकरन्दाः विन्दवः मधुकणाः विकसितं प्रस्फुटितं पद्ममिव अविहिताः अपि अरचिता अपि सिद्धाः स्वभावनिष्पन्ना एव न तु कृत्रिमा इत्यर्थः लक्ष्मीविलासाः कान्तिविभ्रमाः, प्रतिजनकमनीयं सर्वलोकाह्लादकरं दर्शनमात्रेणैव सर्वेषां प्रीतिकरमित्यर्थः कान्तिमत् शोभान्वितं लावण्यमयमित्यर्थः वपुः शरीरं केतयन्ति आश्रयन्ति अनयोरिति शेषः। ईदृशशोभाविकाशो भाविमहासौभाग्यसूचक एवेति भावः।

রাম। (স্বগত) কি আশ্চর্য্য! বিনয়ের সময়েও কুশের এবং লবের গমন, অবস্থান এবং উপবেশন ইত্যাদি সকল কার্য্যই সাম্রাজ্যসূচক ॥২৩॥

---

(१) विकसितमरविन्दमिति पाठान्तरम्।

भूयिष्ठाञ्च रघुकुलकुमारच्छायामनयोः पश्यामि (ख)।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धमबन्धुरांसकम् (१)।
प्रसन्नसिंहस्तिमितञ्च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥२५॥

अत्रोपमाद्वयस्य परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः।

जनो जन इति प्रतिजनं वीप्सार्थे अव्ययीभावः, प्रतिजनेन कमनीयमिति प्रतिजन-कमनीयम्। केतयन्तीति चौरादिकामन्त्रणार्थककेतधातोः प्रयोगः धातूनामनेकार्थत्वा-दाश्रयार्थलाभः।

मालिनी वृत्तम् ॥२४॥

(ख) भूयिष्ठामिति। अपि चेति चार्थः। अनयोः कुशलवयोः देहे इत्यर्थः भूयिष्ठां प्रभूतां रघुकुलकुमारस्य रघुवंशोत्पन्नबालकस्य छायां प्रतिबिम्बं सादृश्यमिति यावत्।

"छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप" इत्यमरः।

ननु कासौ रघुकुलकुमारच्छाया इत्याह कठोरेति। वपुः शरीरं कठोरस्य सावयिषे वृद्धिं प्राप्तस्य प्रौढवयस इत्यर्थः पारावतस्य गृहकपोतस्य कण्ठो गल इव, मेचकं श्याम-वर्णम्, तथा वृषस्य स्कन्ध इव स्कन्धो यस्मिन् तत् उन्नतस्कन्धमित्यर्थः तथा अबन्धुरौ अनुन्नतावनतौ समानाविति यावत् अंसौ बाहुमूलद्वयं यस्मिन् तत्। तथा अनयोः वीक्षितञ्च दृष्टिपातश्च, प्रसन्नः क्रोधादिना अक्षुब्धः यः सिंहः सिंहस्य दृष्टिरित्यर्थः तद्वत्

---

মনোহর রশ্মি যেমন নির্ম্মল রত্নকে আশ্রয় করে এবং মধুবিন্দু যেমন প্রস্ফুটিত পদ্মকে অবলম্বন করে; সেইরূপ অকৃত্রিম কান্তবিভ্রম, সকলের আহ্লাদজনক মনোহর ইহাদের শরীর আশ্রয় করিয়াছে ॥২৪॥

(খ) এই বালক দুইটীতে বেশী পরিমাণে রঘুবংশীয় বালকের ছায়া দেখিতেছি।

---

(१) अबन्धुरांसकमिति पाठान्तरम्।

(सूक्ष्मं निरूप्य) अये! न केवलमस्मदङ्गसंवादिन्याकृतिः (१) (ग)।

अपि जनकसुतायास्तच्च तच्चानुरूपं (२)
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥२६॥

---

स्तिमितं स्थिरम्, तथा ध्वनिः कण्ठस्वरश्च माङ्गल्यः शुभसूचकः मृदङ्गः मृदङ्गध्वनिरित्यर्थः स इव मांसलः स्थूलः गम्भीर इत्यर्थः। रघुकुले समुत्पन्नाः कुमाराः खल्वेवंप्राया भवन्ति, अनयोरपि तथैव दर्शनात् अपत्यतासंशयः पूर्वतोऽपि घनीभूत इति भावः।

अत्र चतसृणां समासगतलुप्तोपमानां मिथो नैरपेक्ष्यात् संसृष्टिः चतुर्थपादे एकमकारस्यासकृत्साम्यात् वृत्त्यनुप्रासश्च। रूढिप्रयोजनयोरभावेऽपि सिंहमृदङ्गशब्दयोस्तद्दृष्टितद्ध्वन्यर्थे लाक्षणिकत्वात् नेयार्थत्वदोषद्वयम्, तच्च "प्रसन्नसिंहेक्षणनिस्तलेक्षणं ध्वनिश्च माङ्गल्यमृदङ्गनादव"दिति पाठेन निरसनीयम्।

"स्कन्धरमुन्नतानत"मित्यमरः। "मांसलः।—स्थूलः।" इति शब्दकल्पद्रुमः।

वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥२५॥

(ग) सूक्ष्ममिति। सूक्ष्मं निरूप्य विशेषेणावलोक्य इत्यर्थः। अस्मादङ्गैः मदीयदेहावयवैः सह संवदति सम्मीलति सदृशी भवतीत्यङ्गसंवादिनी। अनयोराकृतिः न केवलं ममाकृतिसदृशीत्यर्थः।

किन्तर्हि इत्याह अपीति। इह शिशुयुग्मे अस्मिन् कुशलवात्मके बालकद्वये नैपुण्येन

ইহাদের শরীর পরিণতবয়স্ক-কপোতকণ্ঠের ন্যায় শ্যামবর্ণ; বৃষের ন্যায় উন্নত স্কন্ধ; বাহুমূল সমান; প্রসন্ন চিত্ত সিংহের ন্যায় দৃষ্টি এবং মাঙ্গলিক মৃদঙ্গধ্বনির ন্যায় গম্ভীর কণ্ঠধ্বনি ॥২৫॥

(গ) (সূক্ষ্ম ভাবে নিরূপণ করিয়া) ওহে! ইহাদের আকৃতি, কেবল আমার অঙ্গের তুল্য নহে;

---

(१) अस्मत्संवादिनी इति पाठभेदः। (२) चानुरूप्यमिति पाठभेदः।

**मुक्ताच्छदन्तच्छविसुन्दरीयं(१) सैवोष्ठमुद्रा स च कर्णपाशः।**
**नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव ॥२७॥**

निपुणभावेन उन्नेयं विज्ञेयं न त्वापातत एव बोध्यमित्यर्थः जनकसुतायाः सीताया अपि तत्र तत्र मया प्रत्यक्षीकृतं सर्वमित्यर्थः अनुरूपं रूपस्य योग्यत्वं सादृश्यमित्यर्थः स्फुटं स्पष्टमस्ति वर्त्तते। यदि कश्चिदनयोः आकृतिं निपुणभावेनावलोकयेत् तदा निश्चितमेव सुस्पष्टं सीतासादृश्यं पश्येदिति सरलार्थः। नन्वित्यवधारणे। अभिनवं नूतनं नवविकसितमित्यर्थः यत् शतपत्रं पद्मं तदिव श्रीमत् कान्तिमत् प्रियायाः सीतायास्तदास्यं वदनं मे मम अक्ष्णोः चक्षुषोः पुनर्भूयोऽपि गोचरीभूतमिव विषयीभूतमिव अनयोराननमवलोक्य सीताया आननं स्मरामीत्यर्थः।

अत्र समासगतोपमासङ्कीर्णा वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, तेन च स्मरणालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः।

"प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः।

मालिनी वृत्तम् ॥२६॥

सीताया आकृतिसादृश्यं भूयोऽपि प्रतिपादयति मुक्तेति। मुक्ता मौक्तिकानीव अच्छा निर्म्मला ये दन्ता दशनाः तेषां छविभिः कान्तिभिः सुन्दरी मनोहरा इयं दृश्यमाना ओष्ठमुद्रा रदनच्छदयोर्मुद्रणं सैव सीतासम्बन्धिन्येव सीतासदृश्येव, तथा कर्णपाशः प्रशस्तं कर्णद्वयं स च स एव सीतासम्बन्धी एव सीतायाः कर्णयुगलसमान एव। पुनः किन्तु यद्यपि नेत्रे अनयोर्नयनद्वयं रक्तनीले प्रान्तभागे लोहितवर्णे तारामागे च नीले, सीतायास्तु केवलनीलकुवलयसमाने नयने, तेन कुमारयोर्नयनयोर्लौहित्यांशे सीताया नयनाभ्यां सह यद्यपि वैषम्यमित्यर्थः तथापि सौभाग्यगुणः सौन्दर्य्यरूपो गुणः स एव

এই বালক দুইটীতে সীতারও সেই সেই সাদৃশ্য সুস্পষ্ট রহিয়াছে ; তাহা নিপুণতা সহকারে বুঝিতে হয় এবং নব প্রস্ফুটিত পদ্মের ন্যায় মনোহর প্রিয়তমা সীতার সেই মুখখানি, যেন পুনরায় আমার নয়নগোচর হইতেছে ॥২৬॥

(१) छविदन्तुरेयं, छविसुन्दरेयं इति पाठान्तरद्वयम्।

' तदेतत् प्राचेतसाध्युषितमरण्यम्, यत्र किल देवी परित्यक्ता; इयञ्चानयोराकृतिर्वयोऽनुभावश्च (१) यदपि स्वतःप्रकाशा-

सीतासम्बन्ध्येव सीतासदृश एवेत्यर्थः, रक्तांशे वैषम्ये सत्यपि सौन्दर्य्यांशे सीतानयनाभ्यां सह अनयोर्नयनयोः सौसादृश्यमस्त्येवेत्यर्थः। एतेन ततोऽपि अपत्यसंशयो दृढ़ीभूत इति भावः।

अत्र अन्यस्य ओष्ठमुद्रादयः कथमन्यस्य भवेयुरिति वस्तुसम्बन्धासम्भवेन सीताया ओष्ठ-मुद्रादय इव ओष्ठमुद्रादय इति सादृश्यबोधनपर्य्यवसानात् निदर्शनालङ्कारः स च प्रथम-चरणस्थसमासगतोपमया सङ्कीर्य्यते, प्रथमचरणे छेकानुप्रासश्चेति समुदाये संसृष्टिः।

"पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्वकः। सुकर्णे च स्वसामर्थ्यात् मृगपक्ष्यादि-बन्धने॥" इति मेदिनी।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥२७॥

(च) इत्थमाकृतिसादृश्यरूपं संशयकारणमभिधाय कुशलवयोरपत्यतानिश्चये हेतूनुपन्यस्यति तदेतदिति। यत्र अरण्ये देवी सीता। एतदग्रतो दृश्यमानं तत् प्राचेतसेन वाल्मीकिना अध्युषितम् अधिष्ठितम् अरण्यं तपोवनम्। अतएवात्र अनयोः कुमारयोः प्रसवः सीतायाः सम्भवत्येवेति भावः। अपि चेति चकारस्यार्थः। आकृतिः सीताया मम च शरीरानुरूपं शरीरमित्यर्थः, वयः द्वादशवत्सरपरिमितमिव वयो लक्ष्यत इत्यर्थः, अनुभावः प्रभावः तेजस्वितेति यावत्। अत्रायं भावः—मातापित्रोराकारानु-रूप एवाकारः प्रायेणापत्यानां जायत इति सीतायाः मम च आकारसौसादृश्यादिमौ बालकौ अपत्यतया निर्द्धारयितुं शक्यौ, तथा सीतापरित्यागात् परं द्वादशवत्सरा अतीताः अनयोरपि द्वादशवत्सरपरिमितमिव वयो लक्ष्यते अतएव वयोवैषम्येणापि अपत्यत्वस्य असम्भवता न शङ्कनीया, तथा रघुवंशोचितस्वाभाविकप्रभावदर्शनात् भरतादिपुत्राणा-

মুক্তার ন্যায় নির্ম্মল দন্তের শোভায় মনোহর এই ওষ্ঠও সে-ই এবং সেই সুন্দর কর্ণ; কিন্তু নয়নযুগল যদিও রক্ত ও নীলবর্ণ মিশ্রিত; তথাপি সৌন্দর্য্যগুণ সে-ই ॥২৭॥

(१) आकृतिर्वत्सयोः, आकृतिर्वपुश्चेति पाठभेदौ।

न्यस्त्राणीति, तत्र विमृशामि, अपि खलु तच्चित्रदर्शनप्रासङ्गिक-मस्त्राभ्यनुज्ञानमुद्भूतं (१) स्यात्, नह्यसाम्प्रदायिकान्यस्त्राणीति पूर्वेषामप्यनुशुश्रुमः ; अयञ्च सम्प्लवमानमात्मानं सुखातिशयो

मत्रावस्थानासम्भवात् तेषां पूर्वपरिचितत्वाच्च बालकाविमौ ममैव पुत्राविति निश्चयो युज्यत एवेति। ननु तव पुत्रत्वे कथमनयोर्जृम्भकास्त्रलाभ इत्याह यदपीति। "स्वतः प्रकाशान्यावयोरस्त्राणी"ति त्वेन यदप्युक्तमित्यर्थः, तत्र अस्त्रलाभविषये, विमृशामि विवेचनं करोमि। अपिशब्दः सम्भावनायाम्, खलुशब्दो वाक्यालङ्कारे। तत् पूर्वकृतं चित्रदर्शनप्रासङ्गिकं प्रथमाङ्के चित्रदर्शनप्रसङ्गेनोत्थितम् अस्त्राभ्यनुज्ञानं सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति मम वाक्येन सीतापुत्रस्य जृम्भकास्त्रलाभानुमतिः, उद्भूतम् उत्पन्नम्, चित्रदर्शनवेलायाम्। "सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ती"ति मया यदुक्तं तदनुसारादेव अनयोः जृम्भकास्त्रलाभोऽभवदिति सम्भावयामीति सरलार्थः। ननु अन्यस्मादपि अनयोः जृम्भकास्त्रलाभः कथं न सम्भाव्यत इत्याह न हीति। सम्प्रदायो गुरूपदेशपरम्परा अस्त्राणि जृम्भकास्त्राणि असाम्प्रदायिकानि गुरूपदेशपरम्परामन्तरेणापि लभ्यानि, ब्रह्मकृशाश्वकौशिकेतच्छिनयात्मकगुरुशृङ्खलया उपदेशं विनापि केनचित् प्राप्तानीत्यर्थः इति पूर्वेषां प्राचीनानामपि समीपे नहि अनुशुश्रुमः न खलु श्रुतवन्तः वयमिति शेषः। ततश्च तस्मादस्मदभ्यनुज्ञानादेवानयोर्जृम्भकास्त्रलाभ इति मन्तव्यम्, तेन च मम पुत्रावेव इमौ बालकाविति निर्द्धारितं स्यादिति भावः। अपि चेति चार्थः। अयम् अनुभूयमानः हृदयस्य सुखातिशयः अनयोर्दर्शनालिङ्गनादिजनितानन्दबाहुल्यं मे मम

(ঘ) বাল্মীকির অধিষ্ঠিত সেই বনও এই ; যেখানে সীতাকে পরিত্যাগ করিয়া গিয়াছিল, ইহাদের আকৃতিও এই ; বয়সও এই এবং প্রভাবও এই। আর জৃম্ভকাস্ত্র যে স্বভাবতই প্রকাশিত, সে বিষয়ে আমি বিবেচনা করি, চিত্রদর্শনের সময় আমি যে অস্ত্রের অনুজ্ঞা করিয়াছিলাম, তাহাই উৎপন্ন হইয়াছে। কারণ, জৃম্ভকাস্ত্রগুলি, গুরুপরম্পরা ভিন্ন আসিতে পারে না ; ইহা প্রাচীনদিগের নিকটেই শুনিয়াছি। আবার মনের এই সুখাতিশয়,

(१) अपि न खलु तच्चित्रदर्शनप्रस्तावे अस्त्राभ्यनुज्ञानमुद्भूतं स्यादिति पाठान्तरम्।

हृदयस्य मे विस्रम्भयते, भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत् (घ)।

(सास्रम्) पुरारूढ़े स्नेहे परिचयविकासादुपचिते
रहो विस्रब्धाया अपि सहजलज्जाजड़दृशः।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥२८॥

---

संप्लवमानम् इमौ पुत्रौ न वेति संशयसागरे सन्तरन्तमित्यर्थः आत्मानम् अन्तःकरणं विस्रम्भयते "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति न्यायात् इमौ ममैव पुत्राविति विश्वासयतीत्यर्थः। "भ्रातरावावां यमजा"मिति लवोक्तं युक्त्या समर्थय-न्नपि तयोः पुत्रत्वं निश्चिनोति भूयिष्ठञ्चेति। अपि चेति चार्थः। देव्याः सीतायाः, गर्भभारः अतीववृद्धिं प्राप्तत्वात् भारवान् गर्भः भूयिष्ठं प्रचुरम् अनेकवारमित्यर्थः, द्विधा द्विप्रकाराभ्यां भागद्वयेन विभक्त इत्यर्थः, प्रतिपन्नः ज्ञातः।

ननु कथं त्वया स गर्भो द्विधा ज्ञात इत्याह पुरेति। पुरा पूर्वं परिणयकाले इत्यर्थः रूढ़े उत्पन्ने स्नेहे प्रेमणि परिचयविकासात् असकृदेकत्रावस्थानादिजनितपरस्परप्रियत्व-प्रकारकविशेषज्ञानोदयात् उपचिते वृद्धिं प्राप्ते सति रहो निर्जनस्थाने विस्रब्धायाः इमं निभृतस्थाने प्रियतमकरस्पर्शं न कोऽपि अपरः पश्येदिति विश्वस्तायाः अपि सहजा स्वाभाविकी या लज्जा तया जड़े दर्शनाक्षमे मुद्रितप्राये इत्यर्थः दृशौ चक्षुषी यस्याः सा तथोक्ता, तस्याः गर्भग्रन्थिः गर्भकोषबन्धनं मयैव न तु तया इत्येवशब्दार्थः करतलस्य यः परामर्शः संवाहनं तस्य या कला अल्पांशः तया पाणितलस्य ईषत्संवाहनेनेत्यर्थः अधिकसंवाहने लज्जाशीला सीता पाणिमुत्सारयतीति प्रतिपादनाय कलाशब्दप्रयोगः, आदौ सीतायाः प्राक् द्विधा विभक्त इत्यर्थः ज्ञातः एकवृन्तगतफलद्वयवत् एककोषगतं

---

আমার সংশয়াপন্ন আত্মাকে (ইহারা আমারই পুত্র বলিয়া) বিশ্বাস করাইতেছে। বিশেষতঃ, আমি সীতাদেবীর গর্ভটী দুইভাগে বিভক্ত বলিয়া বহুবার বুঝিয়াছিলাম।

(रुदित्वा) तत्किमितौ पृच्छामि केनाप्युपायेन (ङ)

लवः । तत्किमेतत् ।

वाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥२८॥

भ्रूणद्वयमनुभूतमित्यर्थः, तदनु ततः परं कैरपि दिवसैः कतिपयदिनैः तया सीतया च ज्ञात इत्यन्वयः। अतएव इमौ कुमारौ ममैव पुत्राविति निश्चय एव ज्यायानिति भावः।

अत्र ज्ञात इत्येकया क्रियया, मया तयेत्युभयोः कर्तृत्वेनाभिसम्बन्धात् तुल्ययोगितालङ्कारः।

दिवसैरिति तृतीयापवर्गे।

शिखरिणी वृत्तम् ॥२८॥

(ङ) रुदित्वेति। पुत्रत्वेनानुमीयमानयोरपि असाधारणगुणशालिनोः कुशलवयोः पुत्रवद्व्यवहारानर्हत्वात् शोकक्षोभेण रामस्य रोदनं बोद्धव्यम्। तत्किमित्येकमव्ययं प्रश्नार्थे। उपायेन वाक्यच्छलेन एतौ कुशलवौ। मनसि वितर्कोऽयम्।

वाष्पेति। जगन्मङ्गलं प्रसादसौम्यतया द्रष्टृणामानन्दजनकमित्यर्थः वो युष्माकम् आननं वदनं वाष्पवर्षेण अश्रुवर्षणेन, अवश्यायेन हिमेन अवसिक्तस्य आर्द्रीकृतस्य

( অশ্রুপাতের সহিত ) পূর্ব্বে যে স্নেহ জন্মিয়াছিল, ক্রমে পরিচয় প্রকাশ পাওয়ায় তাহাই বৃদ্ধি পাইলে, নির্জ্জন স্থানে তিনি বিশ্বস্ত থাকিলেও স্বাভাবিক লজ্জায় তাঁহার নয়নযুগল মুদ্রিত হইয়া যাইত, এই অবস্থায় হাত বুলাইয়া আমিই আগে তাঁহার গর্ভের পিট দুইভাগে বিভক্ত বলিয়া বুঝিয়াছিলাম ; তাহার পর কিছু দিন গেলে তিনি বুঝিয়াছিলেন ॥২৮॥

(ঙ) ( রোদন করিয়া ) তা, কোন্ উপায়ে কি ইহাদিগকে জিজ্ঞাসা করিব ?

লব। এ কি !

कुश:। अयि वत्स !

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति (१)।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव ॥३०॥

---

पुण्डरीकस्य श्वेतपद्मस्य चारुतां सौन्दर्य्यं तत् किं नीतं कथं प्रापितम्, कथं कथ्यत इत्यर्थः।

अत्र अन्यस्य चारुतां कथमन्यत्र नीयत इति वस्तुसम्बन्धोऽसम्भवन् पुण्डरीकस्य चारुतामिव चारुतामिति बिम्बप्रतिबिम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः।

विरहेण पाण्डुरतं रामाननं श्वेतपद्मवत् सुन्दरमिति बोध्यम्।

"अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्।" "पुण्डरीकं सिताम्भोज"मिति चामरः।

व इति गुरुत्वाद्बहुवचनम् ॥२९॥

विनेति। सीतादेव्या विना जानकीमन्तरेण रघुपतेः रामस्य किमिव किं वस्तु न दुःखं न दुःखकारणम् अपि तु आश्वासाभावात् सर्वमेव राज्यैश्वर्य्यादिकं दुःखकारणमित्यर्थः। ननु कथं दुःखकारणमित्याह प्रियेति। प्रियाया वल्लभाया भार्य्याया नाशे अभावे सति कृत्स्नं जगत् सकलं भुवनम् अरण्यं गहनरूपं हि निश्चितं भवति सर्वलोकस्येति शेषः। किलेति लोकवार्त्तायाम्। एवं लोका वदन्तीत्यर्थः। प्रियभार्य्याया अभावे आनन्दकीरणं वस्तुजातं वन्यश्वापदकुलमिव आश्वासाभावात् नितरां दुःखमुत्पादयतीत्यर्थः। अपि चेति चार्थः। तावान् तत्परिमितः अतिगाढः स पूर्वानुभूतः स्नेहः सीतां प्रति

অশ্রুবৃষ্টি জগতের মঙ্গলজনক আপনার মুখমণ্ডলকে শিশিরসিক্ত পদ্মের মনোহরতা প্রাপ্ত করাইতেছে ॥২৯॥

কুশ। অয়ি বৎস !

---

(१) जगदिदमरण्यं हि भवतीति पाठान्तरम्।

रामः। (स्वगतम्) अये! तटस्थित आलापः, ज्ञातं प्रश्नेन, दग्धहृदय! कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो विकारः, (१)

प्रणयः आसीत्, अयमपि इदानीमनुभूयमानश्च वियोगी विच्छेदः निरवधिः असीमः यावज्जीवं स्थायीत्यर्थः। सीतायां जीवनकाले तादृशप्रेमालापादिजनितं निरतिशयं सुखमासीत् इदानीन्तु निरवधि विरहजन्यं दारुणदुःखम् अतएव सुखानुभवानन्तरं दुःखानुभवस्य नितान्तदुःसहत्वात् एव रोदितीति भावः। अतएव अनधिगतम् अविदितं रामायणं स्वनाम्ना प्रसिद्धं वाल्मीकिरचितं महाकाव्यं येन स तथोक्तः रामायणमजानन्निवेत्यर्थः किमिति कथम्, एवं "तत्किमेतत्, वाष्पवर्षेण नीतं वः" इत्थम्, पृच्छथ रामं जिज्ञासध्वे। सर्वमेव रामायणेतिहासमवगम्य पुष्कलमेव रामस्य रोदनकारणं जानतोऽपि भवतां प्रश्नो न सङ्गच्छत इति भावः।

अत्र द्वितीयचरणसामान्येन प्रथमचरणगतविशेषसमर्थनादर्थान्तरन्यासः, किञ्च द्वितीयचरणे "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इत्यादिवत् समासाभावेऽपि निरङ्गं केवलरूपकम्, अनयोरङ्गाङ्गिभावेन सङ्करः, तथा चतुर्थचरणे प्रयोजनं विनापि हिशब्दप्रयोगात् निरर्थकत्वदोषः, स तु 'किमिव नहि दुःखं रघुपते'रिति व्यत्ययपाठेन समाधेयः, तत्पाठे नञ् समानार्थो नहिशब्द इति बोध्यम्।

शिखरिणी वृत्तम्॥३०॥

(च) राम इति। आलापः कुशलवयोर्मिथो भाषणं तटस्थित उदासीनः सीताया मातृत्वसम्बन्धोल्लेखरहित इत्यर्थः। सीतारामौ खल्वावयोर्मातापितराविति यदिमौ जानीयातां तदा निःसम्पर्कवत् 'सीतादेव्या' इति 'रघुपते'रिति च कथमपि कुशो न वदेत् किन्तु 'मातरं विना पितुः किमिव न दुःख'मित्येव वदेदिति भावः। अतएव प्रश्नेन 'सीता

সীতাদেবী না থাকায় কোন্ বস্তু রঘুনাথের দুঃখজনক নহে? কারণ, প্রিয়তমার অভাব হইলে, সমস্ত জগৎই অরণ্যে পরিণত হয়। সেই স্নেহও তত পরিমাণে ছিল; আবার এই বিচ্ছেদও অসীম; অতএব রামায়ণ না জানা লোকের মত জিজ্ঞাসা করিতেছ কেন॥৩০॥

(१) आकस्मिकस्ते पारिप्लवो विकार इति पाठभेदः।

एवञ्च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि, भवतु तावदन्तरयामि। (प्रकाशम्) वत्सौ! रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य, तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि (१) (च)।

---

किं युवयोर्माता' इत्येवं मम जिज्ञासया कृतम् अलम्। अविदितसीतासम्बन्धतया वाञ्छितविषयं वक्तुं न शक्नुयात्, ततश्च तादृशो मम प्रश्नो निरर्थक इति विराम एव श्रेयानिति भावः। इमौ सीतायाः सुतावेव प्रायशावित्याशायाः परिचयोपायाभावात् अपूर्णत्वेन समुत्पन्नसन्तापसन्तप्तत्वात् दग्धेति हृदयस्य विशेषणम्। अकस्मादागत इत्याकस्मिकः हठादुपस्थितः विशेषकारणं विनापि जातत इत्यर्थः, स्नेहेन वात्सल्येन परिप्लवश्चञ्चलः विकारः अन्यथाभावः। किमिति चार्थः। एवम् अनेन प्रकारेण अश्रुवर्षणेनेत्यर्थः निर्भिन्नः प्रकाशितः हृदयस्य आवेगः शोकक्षोभो यस्य स तथोक्तः। अनुकम्पितः दयापात्रीकृतः। अयमतीवलज्जाविषय इति भावः। अन्तरयामि गोपयामि हृदयावेगमित्यर्थः। रामायणमिति रामायणत्वेन प्रसिद्धः। सरस्वत्या वाचः निष्यन्दः अवस्रंसनं क्षरणमित्यर्थः एतेन तद्वाक्यस्य पीयूषतुल्यत्वं व्यज्यते। आदित्यवंशस्य सूर्यवंशस्य प्रशस्तिः प्रशंसा कीर्त्तिविस्तारहेतुरित्यर्थः, श्रूयते लोकपरम्परयेति शेषः। तत्र तद्विषये।

"चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इत्यमरः।

तटे अलक्षितविषये स्थित इति तटस्थितः। अन्तरम् अन्तर्हितं करोमीति अन्तरयामि करोत्यर्थे इन।

---

(চ) রাম। (স্বগত) ওহে! ইহাদের আলাপটা উদাসীন (সীতার সম্পর্করহিত); সুতরাং জিজ্ঞাসার প্রয়োজন নাই। হে দগ্ধহৃদয়! আকস্মিক তোমার এই স্নেহচঞ্চল বিকার কেন? এই ভাবে মনের আবেগ প্রকাশিত হওয়ায়, শিশুজনও আমার প্রতি দয়া করিতেছে। হউক, মনের আবেগ আবৃত করি। (প্রকাশ্যে) বৎসদ্বয়! শুনিতেছি, রামায়ণ-

---

(१) किञ्चित् श्रोतुमिति पाठान्तरम्।

कुशः। स कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः, स्मृत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये श्लोकौ (१) (छ)।

रामः। उदीरयतु वत्सः (ज)।

कुशः। प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः।
प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः ॥२१॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ इति ॥२२॥

---

(छ) कुश इति। कृत्स्नः सम्पूर्णः। सन्दर्भो ग्रन्थः, आवृत्तः असकृत्पाठेन अभ्यस्तः स्मृत्युपस्थितौ स्मरणविषयौ जातौ।

(ज) राम इति। उदीरयतु उच्चारयतु।

प्रकृत्यैवेति। सीता वैदेही प्रकृत्या स्वभावेनैव न तु केनचिदागन्तुकेन भाव-विन्यासादिनेत्येवशब्दार्थः, महात्मनः उदारचरितस्य रामस्य प्रिया वल्लभा आसीत्। ननु सर्वप्रणयिन उदारचित्तस्य रामस्य सर्व एव प्रिय इति सीतायाः का प्रशंसा इत्याह, स तु प्रियभावः प्रीतिः तया सीतया स्वगुणैरेव निजसत्यसरलताविनयादिभिरेव न तु रामस्यौदार्य्येणेत्येवशब्दार्थः वर्द्धितः उपचितः ॥२१॥

নামে ভগবান্ বাল্মীকির বাক্যামৃতের নিঃসরণ হইয়াছে এবং তাহা সূর্য্য-বংশের প্রশস্তিস্বরূপ ; কৌতুকবশতঃ সে বিষয়ে কিছু শুনিতে ইচ্ছা করি।

(ছ) কুশ। আমরা সেই সন্দর্ভ সমস্তই অভ্যাস করিয়াছি ; কিন্তু বালচরিতের শেষ অধ্যায়ের এই দুইটী শ্লোক স্মৃতিপথে উপস্থিত হইয়াছে।

(জ) রাম। বৎস তাহা পাঠ করুক।

কুশ। সীতাদেবী, স্বভাবতই মহাত্মা রামচন্দ্রের প্রিয়তমা ছিলেন ; কিন্তু সীতাদেবী সেই প্রিয়ভাবটা নিজ গুণেই বাড়াইয়াছিলেন ॥২১॥

---

(१) द्वौ श्लोकौ इति क्वापि पाठः।

राम:। कष्टमतिदारुणो हृदयमर्म्मोपघात:, (१) हा देवि! एवं किल तदासीत्। अहो! निरन्वय-(२) विपर्य्यासविरस-वृत्तयो विप्रलम्भपर्य्यवसायिनस्तापयन्ति संसारवृत्तान्ता: (झ)।

तथैवेति। राम: तथैव सीता यथा रामस्य प्रिया आसीत् तद्वदेव सीताया: प्राणेभ्योऽपि जीवनादपि प्रिय: प्रेयान् अभवत्। तु किन्तु, हृदयं परस्परस्य चित्तमेव कर्त्तृ परस्परम् अन्योन्यगतं प्रीतियोगं प्रणयसम्बन्धं जानाति न तु ताभ्यामन्यजनस्य हृदयं कर्त्तृ तं प्रीतियोगं जानातीत्यर्थ:।

अत्र आर्थी परिसंख्यालङ्कार:।

इदानीन्तनवाल्मीकिरामायणपुस्तकेषु तु बालकाण्डस्य शेषेऽध्याये दृष्टश्लोकौ न दृश्येते, किन्तु निम्ननिवेश्यमानप्रकारौ विद्येते—

"प्रिया तु सीता रामस्य दारा: पितृकृता इति।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो विवर्द्धते॥
तस्याश्च भर्त्ता द्विगुणं हृदये परिवर्त्तते।
अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा॥"

तदयमन्वयम्, भवभूतिसमानकालवर्त्तिनि तद्दाक्षिणात्यदेशप्रचलितपुस्तकनिवहे भवभूति-लिखितप्रकारावेव स्थितौ, इदानीन्तनास्मद्देशीयपुस्तकेषु तु अन्यथाभावं गताविति॥३२॥

(झ) राम इति। हृदयमर्म्मणि वक्षसोऽन्तर्वर्त्तिनि सन्धिबन्धे उपघात: आघात: शोकप्रहार इति यावत्। ईदृशयथावद्भावव्यञ्जकश्लोकश्रवणेन हृदये शोकस्य अतिनिष्ठुर: प्रहार इवानुभूयत इत्यर्थ:। तदा तस्मिन् सीतासंयोगकाले, एवं वाल्मीकिवर्णितप्रकार: प्रीतियोग इत्यर्थ: आसीत्। किल सम्भावनायाम्। निर्नं विद्यते अन्वय: कारणं यस्य स निरन्वय: ऐहिकहेतुं विना उत्पन्न इत्यर्थ: यो विपर्य्यास: अवस्थापरिवर्त्तनं तेन विरसा निष्ठुरा वृत्तिर्भावो येषां ते तथोक्ता:, विप्रलम्भे विच्छेदे पर्य्यवस्यन्ति

সেইরূপই রামও সীতার প্রাণ হইতেও প্রিয় ছিলেন। তাঁহাদের হৃদয়ই পরস্পরের প্রণয় জানিত॥৩২॥

(१) हृदयमर्म्मोद्घात इति पाठान्तरम्। (२) निरत्यय इति पाठभेद:।

क्व तावानानन्दो निरतिशयविस्रम्भबहुलः
क्व तेऽन्योन्यं यत्नाः क्व च नु गहनाः कौतुकरसाः।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति, न तु पापो विरमति ॥३२॥

परिणमन्तीति विप्रलम्भपर्य्यवसायिनः अवसाने वियोगे परिणता इत्यर्थः, संसारवृत्तान्ताः जगतां घटनाः। सीतया सम्मिलनकाले सुखस्य परां काष्ठामनुभवन्नहम् इदानीं यथा तद्विच्छेदेन दुःखस्यापि परां काष्ठामनुभवामि जगतां प्रायेण सर्वमेव तथेति भावः।

क्वेति। निर्न विद्यते अतिशयो यस्मात् तेन निरतिशयेन विस्रम्भेण परस्परस्य परस्परप्रियत्वप्रकारकविश्वासेन बहुलः गाढ़ इत्यर्थः, तावान् तत्परिमितः अतिगरीयान् इत्यर्थः आनन्दः सीतया सह प्रेमालापादिजन्यं सुखं क्व कुत्र गतमिति शेषः। अन्योन्यं परस्परं प्रति ते पूर्वानुभूता यत्नाः परस्परयोः सुखहेतवे परस्परयोश्चेष्टाः क्व कुत्र गता इति शेषः। तथा गहनाः निविड़ाः कौतुकरसाः परस्परनर्म्मालापादिजनितानन्दाश्च क्व नु गताः, सुखे वा सुखानुभवे च दुःखे वा दुःखानुभवे च हृदययोः आवयोर्मनसोः तत् पूर्वस्थितम् ऐक्यम् एकरूपत्वं क्व नु गतम्, परस्परयोः सुखे परस्परयोः सुखित्वं परस्परयो-र्दुःखे परस्परयोर्दुःखित्वञ्च कुत्रेदानीं गतमित्यर्थः। ईदृशनिरतिशयसुखान्यनुभूय अधुना तदनुरूपदारुणदुःखानुभवेन जीवनं भारभूतमिव जातमिति सत्याम् इति भावः। तथापि एष मदीयः पापः पापजनितदारुणदुःखानुभवी प्राणः हन्मारुतः स्फुरति स्पन्दते श्वास-प्रश्वासात्मिकां निर्गमप्रवेशक्रियां करोतीत्यर्थः, तु किन्तु न विरमति श्वासप्रश्वासकरणात् न विश्राम्यति देहमपहाय न गच्छतीत्यर्थः। इदानीं सर्वथैव मरणमेव मे श्रेय इति भावः।

अत्र सुदारुणदुःखरूपे प्राणस्फुरणविरामस्य पुष्कलकारणे सत्यपि तदभावात् विशेषोक्तिरलङ्कारः।

---

(ঝ) রাম। কি কষ্ট! হৃদয়ের মর্ম্মস্থানে অতিদারুণ আঘাত উপস্থিত হইল। হা দেবি! এইরূপই তখন ছিল। সংসারের এই সকল ঘটনার অবস্থা, বিনা কারণে উল্টাইয়া নিষ্ঠুর হইয়া দাঁড়াইয়াছে এবং শেষে বিচ্ছেদে পরিণত হইয়াছে; তাই সন্তাপ জন্মাইতেছে।

भोः! कष्टम् (ञ)।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥३४॥

"प्राणी हन्माहते बोलि काव्यजीवेऽनिलि बलि" इति मेदिनी।

"असुप्राणशब्दाभ्यां बहुवचनान्ताभ्यां पञ्च प्राणादय उच्यन्ते न पुनरेकैकाभिधाने बहुवचनम्, अतएव "प्राणोऽपान" इत्युक्तम्, "हृदि प्राणो गुदेऽपान" इत्यादि च दृश्यते" इत्यमरटीकायां भरतः। "निघ्नन् प्रियं प्राणमिवाभिमान"मिति किरातेऽपि।

शिखरिणी वृत्तम् ॥३३॥

(ञ) भो इति। आत्मसम्बोधने भोशब्दः।

किन्तत् कष्टमित्याह प्रियेति। प्रियायाः सीतायाः गुणानां रूप विनय-सारल्य-पातिव्रात्यादीनां सहस्राणि तेषाम्, एकं मुख्यं सम्पूर्णमित्यर्थः यदुन्मीलनं प्रकाशः स्मृत्युपस्थितिरिति यावत् तत्र पेशलः दक्षः समर्थ इति यावत् सीतायाः रूपविनयाद्य-सङ्ख्यगुणानां सम्पूर्णभावेन स्मृतिकारक इत्यर्थः य एव कालः प्रेमालापादिसम्भोगसमयः दुःस्मरः स्मर्तुमशक्यः यस्य स्मरणमतीवदुःखकरमित्यर्थः वयं तमेव कालं स्मारिताः तत्-कालस्य स्मृतिं प्रापिताः अनेन कुमारेणेति शेषः। एतदेव कष्टमिति भावः।

"चारौ दक्षे च पेशलः" इत्यमरः ॥३४॥

---

নিরতিশয় বিশ্বাসবশতঃ প্রগাঢ় ততখানি আনন্দ আজ কোথায়; পরস্পরের প্রতি যত্নই বা কোথায় এবং সেই নিবিড় কৌতুকরসই বা কোথায়; আর সুখে কিংবা দুঃখে হৃদয়দ্বয়ের সেই ঐক্যই বা কোথায়। তথাপি এই প্রাণ স্পন্দিত হইতেছে; কিন্তু পাপিষ্ঠ (প্রাণ) বিরত হইতেছে না ॥৩৩॥

(ঞ) হায় কি কষ্ট! প্রিয়তমার সহস্র গুণের একমাত্র প্রকাশসমর্থ যে সময়টিই দুশ্চিন্তা ছিল; এই বালক আমাকে সেই সময়টিই স্মরণ করাইয়া দিয়াছে ॥৩৪॥

तदा किञ्चित् किञ्चित् कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनयुगल-(१) मासीन्मृगदृशः।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धस्य वपुषि ॥३५॥

तत्कालस्य दुःखरत्वं प्रतिपादयति तदेति। तदा तस्मिन् समये किञ्चित् किञ्चित् अल्पमल्पं यथा स्यात्तथा कृतपदं लब्धस्थानम् आविर्भूतं मृगदृशः हरिणवच्चञ्चललोचनायाः सीतायाः तत् स्मृतिपथारूढं स्तनयुगलं कतिपयैरहोभिः कियद्भिरेव दिनैः ईषद्विस्तारि अल्पविस्तृतं न तु अतिपीवरतया परस्परसंघृष्टमित्यर्थः आसीत् अभवत्। यत्र यस्मिन् काले वयसो यौवनस्य, स्नेहस्य अनुरागस्य, आकूतस्य सम्भोगाभिप्रायस्य च व्यतिकरेण सम्मेलनेन घनो निविडः दुर्द्दम इत्यर्थः मदनो मन्मथः हृदि मनसि प्रगल्भो विशालः व्यापारः क्रिया यस्य स प्रगल्भव्यापारः उद्दामाडम्बरः सन् इत्यर्थः स्फुरति प्रकाशते, वपुषि शरीरे च मुग्धः लज्जया सर्वदा बहिर्व्यापारासम्भवात् मूढः प्रतिहतक्रियः सन् इत्यर्थः स्फुरति जनानामिति शेषः, मन्मथप्रभावो हृदये सर्वदैव यथा यूनां जायते, लज्जावशात् शारीरिकालिङ्गनादौ सर्वदा तथा प्रकाशितं नार्हति, किन्तु यौवनोदयात् मन्मथभावावेशाच्च देहे किमपि सुन्दरं लावण्यमुत्पद्यत इति भावः।

अत्र एकस्य मदनस्य हृदयदेहयोर्गोचरत्वात् पर्य्यायनामालङ्कारः। तथा यच्छब्द-संवलितवाक्यस्य परत्र पाठात् वाक्यगतो विधेयाविमर्शदोषः, स च परार्द्धस्य प्राक्पाठेन समाधेयः।

"आकूतं स्यादभिप्रायः" इति हेमचन्द्रः। "मुग्धः सुन्दरमूढयो"रिति विश्वः।

शिखरिणी वृत्तम् ॥३५॥

সেই সময়ে হরিণনয়না সীতার স্তনযুগল একটু একটু করিয়া উঠিতেছিল; কয়েক দিনের মধ্যে তাহা আবার ঈষৎ বিস্তৃত হইয়াছিল; যে সময়ে বয়স অনুরাগ ও অভিপ্রায়ের সম্মেলনে প্রগাঢ় হইয়া কাম, উদ্দাম

(১) स्तनमुकुलमिति पाठान्तरम्।

কুশঃ। অয়ঞ্চ মন্দাকিনীচিত্রকূটবনবিহারে সীতাদেবী-মুদ্দিশ্য রঘুপতেঃ শ্লোকঃ—(ট)

ত্বদর্থমিব বিন্যস্তঃ শিলাপট্টো (১) যমগ্রতঃ।
যস্যায়মভিতঃ পুষ্পৈঃ প্রবৃষ্ট ইব কেসরঃ ॥৩৬॥

(ট) কুশ ইতি। অয়ং ময়া উচ্যমানঃ। প্রকৃত্যৈব প্রিয়া সীতা ইত্যাদ্যুক্তঃ সমুচ্চয়ার্থশ্চকারঃ। মন্দাকিনী চিত্রকূটাচলসমীপবাহিনী কাচনা নদী। তথা চ রঘুবংশে—"মন্দাকিনী ভাতি নগোপকণ্ঠে মুক্তাবলী কণ্ঠগতেব ভূমিঃ।" চিত্রকূটঃ কশ্চন পর্বতঃ তয়োর্বনেষু বিহারে ক্রীড়াকালে। সীতাদেবীমুদ্দিশ্য বিদ্যমানস্যেত্যধ্যাহারান্ন এককর্তৃকত্বহানিঃ।

ত্বদর্থমিতি। অয়ম্ অগ্রবর্ত্তী, শিলাপট্টঃ বিশালঃ প্রস্তরখণ্ডঃ, ত্বদর্থমিব তব শয়নার্থমিবেত্যর্থঃ, অগ্রতঃ পুরোভাগে বিন্যস্তঃ কেনচিত্ স্থাপিতঃ। যস্য শিলাপট্টস্য অভিতঃ উভয়োঃ পার্শ্বয়োঃ অয়ং কেসরঃ বকুলতরুঃ পুষ্পৈঃ প্রবৃষ্ট ইব বর্ষতীব। অতস্ত্বমত্রেদানীং শয়িতুমর্হসীতি ভাবঃ।

অত্র প্রথমা গুণোত্প্রেক্ষা দ্বিতীয়া ক্রিয়োত্প্রেক্ষা, উভয়োঃ সাপেক্ষত্বাত্ সঙ্করঃ। সুরম্যং বিহারস্থানমিদমিতি তদর্থমুপাস্যতামিতি ব্যজ্যতে ইত্যলঙ্কারেণ বস্তুধ্বনিঃ।

"অথ কেসরঃ। বকুলঃ" ইত্যমরঃ।

যস্যেতি "অভিতঃ পরিতঃ সময়ানিকষাহাপ্রতিয়োগেঽপি" ইত্যনেন দ্বিতীয়াপ্রাপ্তাবপি আর্ষত্বাত্ সম্বন্ধবিবক্ষয়া ষষ্ঠী। প্রবৃষ্ট ইত্যকর্ম্মকত্ববিবক্ষয়া কর্ত্তরি ক্তঃ, পুষ্পৈরিতি করণে তৃতীয়া।

ইদানীন্তনৈতদ্দেশীয়রামায়ণে অস্য শ্লোকস্যাদর্শনাত্ ভবভূতিসমকালীনে দাক্ষিণাত্য-পুস্তকনিবহে ত্বাসীদিত্যবাপি মন্তব্যম্ ॥৩৬॥

আড়ম্বরে মনে প্রকাশ পাইয়া থাকে এবং দেহে নিরুদ্ধ অবস্থায় অবস্থান করে ॥৩৫॥

(ট) কুশ। গঙ্গা ও চিত্রকূটের নিকটবর্ত্তী বনে বিহারের সময় সীতাদেবীকে লক্ষ্য করিয়া রঘুনাথ এই শ্লোকটি পাঠ করিয়াছিলেন—

(১) শিলাপাদ ইতি পাঠান্তরম্।

रामः । (सलज्जास्मितस्नेहकरुणम्) अतिनामायं मुग्धः शिशुजनो विशेषतस्त्वरण्यचरः । हा देवि ! स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिशयप्रसङ्गसाक्षिणः ? कष्टं भोः कष्टम् (ठ) ।

अस्माभुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति ।

(ठ) राम इति । कुशेन सम्भोगशृङ्गारस्य प्रकाशनात् लज्जा, तस्य नितान्तमुग्धता-दर्शनात् स्मितम् ईषत् हास्यम्, पुत्रत्वबोधात् स्नेहो वात्सल्यम्, सीतायाः स्मरणात् करुणः शोकः तैः सह वर्त्तमानमिति तथोक्तम् । अयं शिशुजनः कुशः अतिनाम अतीवमुग्धः मूढ सम्भोगवृत्तान्तानभिज्ञ इत्यर्थः । स्वतः प्राचीनस्य ममान्तिके सम्भोगशृङ्गारद्योतकस्य त्वदर्थमिवेत्यादिश्लोकस्य असङ्कोचेनैवाभिधानादिति भावः । अरण्यचरी वनवासी । अतएव ग्राम्यबालकस्येव सार्थसमालोचनयापि गृहस्थयुवतियुवकानां वृत्तान्ताभिज्ञत्वमस्य न सम्भाव्यते, अतएव सर्वथैव सम्भोगादिलौकवृत्तान्तानभिज्ञोऽयं कुमार इति भावः । तस्मिन् समये विहारकाले विस्रम्भातिशयेन विश्वासबाहुल्येन अधुना निर्ज्जनोऽयं प्रदेशः न वा केनचित् सत्वरमवागन्तव्यं ततश्च निःसङ्कोचविहारस्थानमिदमिति विश्वासातिरेकेणेत्यर्थः यः प्रसङ्गः विहारप्राप्तिः तस्य साक्षी द्रष्टा तस्य, प्रदेशस्य मन्दाकिनीचित्रकूटवनभूभागस्य ।

अत्र प्रदेशस्येति "स्मृत्यर्थकर्म्मणी"ति षष्ठी ।

এই বিস্তৃত প্রস্তরখানি তোমার জন্যই যেন কেহ সম্মুখে স্থাপিত করিয়া রাখিয়াছে। যাহার সকল দিকে, পুষ্পসমূহই যেন স্বকীয় কেসরগুলিকে ছড়াইয়া রাখিয়াছে ॥৩৬॥

(ঠ) রাম। (লজ্জা, ঈষৎ হাস্য, স্নেহ ও শোকের সহিত) আমি মনে করি, এই বালকটি অতিশয় মুগ্ধ বিশেষতঃ বনচর। হা দেবি! সেই সময়ে অত্যন্ত বিশ্বাসবশতঃ যে সকল ঘটনা ঘটিয়াছিল, তাহার সাক্ষী সেই স্থানটিকে স্মরণ কর কি? কষ্ট হায় কি কষ্ট।

अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं (१) मुखम् ॥३७॥

श्रमेति। श्रमो रतिखेदः तेनोत्पादितं यदम्बु घर्म्मजलं तेन शिशिरीभवत् शीतलतां भजमानं मुखविशेषणमेतत्। तथा प्रसृताः प्रवहन्तः मन्दा अल्पाल्पाः ये मन्दाकिनीमरुतः मन्दाकिनीनद्या वायवः तैः तरलिताः चञ्चलीकृता इतस्ततो विक्षिप्ता इति यावत् ये अलकाश्चूर्णकुन्तलाः स्खलितकेशा इत्यर्थः तैः आकुला व्याप्ता आवृतेत्यर्थः ललाटरूपस्य चन्द्रस्य द्युतिः शोभा यस्मिन् तत् तथोक्तम्। तथा न कुङ्कुमेन कलङ्कितौ चिह्नितौ इत्यकुङ्कुमकलङ्कितौ तथापि उज्ज्वलौ शोभमानौ कुङ्कुमसम्पर्काभावेऽपि स्वत एव रक्ताभौ इत्यर्थः कपोलौ गण्डौ यस्मिन् तत् तथोक्तम्। तथा निर्न विद्यन्ते आभरणानि अलङ्कारा ययोस्तौ निराभरणौ तथापि सुन्दरौ यौ श्रवणपाशौ प्रशस्तकर्णयुगलं ताभ्यां सौम्यं सुन्दरं मुखं तव वदनम् उत्प्रेक्ष्यते सङ्कल्पवशात् चक्षुषोः समीपमानीय आलोक्यत इवेत्यर्थः मयेति शेषः। सङ्कल्पवशादुत्प्रेक्ष्यते न तु साक्षात् द्रष्टुं शक्यते इत्येव दारुणं कष्टमिति भावः।

अत्र प्रकृतस्य तादृशस्मरणस्य दर्शनत्मना सम्भावनाकरणात् भावाभिमानिनी क्रियोत्प्रेक्षा, सा च इवादिवाचकाभावात् प्रतीयमाना, ललाटचन्द्रेति निरङ्गं केवलं रूपकम्, कुङ्कुमसम्पर्करूपहेतुं विनापि कपोलयोरुज्ज्वलत्वं तथा आभरणरूपकारणाभावेऽपि कर्णयोः सौन्दर्य्यमिति विभावना चालङ्कारः, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिश्चानुसन्धेया। सीतायाः कपोलयुगलमीदृशं स्वभावलोहितं यत् तत्र कुङ्कुमरागो न शोभां जनयति अपि तु दुष्टचिह्नमेव करोतीति कलङ्कशब्दस्य मूलो वस्तुध्वनिः।

"कलङ्कोऽङ्कापवादयो"रित्यमरः। "पाशः केशादिपूर्वः स्यात् तत्संघे कर्णपूर्वकः। सुकर्णे च स्वसामर्थ्यात् मृगपक्ष्यादिबन्धने॥" इति मेदिनी।

तरलाः कृता इति तरलिताः करोत्यर्थेनन्तात कर्म्मणि क्तः। प्रशस्ते श्रवणे इति श्रवणपाशौ "प्रशंसावचनैश्चे"त्यादिना समासः। पृथ्वी वृत्तम् ॥३७॥

---

ঘে মুখখানি, পরিশ্রমবশতঃ ঘর্ম্মজলে শীতল হইতেছিল, মন্দমন্দসঞ্চারী

(१) श्रवणपाशमुग्धमिति पाठान्तरम्।

(स्तम्भित इव स्थित्वा सकरुणम्) अहोनुखलुभोः! (ड)

चिरं ध्यात्वा ध्यात्वा निहित इव निर्म्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः।
जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे (१)
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥३८॥

(ड) स्तम्भित इति। स्तम्भितः शोकेन जडीकृतः। अहोनुखलुभोरित्येकमव्ययं महाविषादसूचकम्। तथा च कालापाः पठन्ति—

"इयन्त इति संख्यानं निपातानां न विद्यते।
प्रयोजनवशादेते निपात्यन्ते पदे पदे ॥"

चिरमिति। चिरं दीर्घकालं ध्यात्वा ध्यात्वा वारं वारं चिन्तयित्वा, निर्म्माय कल्पनया विरचय्य, पुरतः अग्रतः, निहितः स्थापित इव प्रियजनः प्रणयी लोकः प्रवासे विदेशेऽपि विच्छेदकालेऽपीत्यर्थः आश्वासं वियोगकातरस्य परिसान्त्वनं न करोति इति न खलु, अपि तु करोत्येवेत्यर्थः। विकल्पस्य तादृशकल्पनाशक्तेः व्युपरमे कुतश्चित् कारणात् निवृत्तौ सति, जगत् भुवनं जीर्णारण्यं पुरातनतया विरलशुष्कपादपप्रायं काननं हि भवति तादृशवनरूपमेव जायते इत्यर्थः, तादृशकल्पनाया अभावेन कल्पनीयतादृशमूर्त्तेरप्यभावादिति भावः, तदनु तदनन्तरं हृदयं कुकूलानां राशौ तुषानलानां निवहे पच्यत इव तदीयशोकेन क्लिश्यत। तीव्रवह्निना दाहे सहसैव दाह्यस्य विध्वंसात् चिराय यातनानुभवो न जायते, मृदुवह्निना दाहे तु सहसा विध्वंसाभावात् क्रमिकदाहेन गरीयसी यातना अनुभूयते इति तद्वदत्रापि तादृशावस्थायां मया जातशोकेनैव मोहो न भवति किन्तु

মন্দাকিনীর বায়ুবেগে কম্পিত কেশকলাপে যাহার ললাটচন্দ্রের শোভা আকুল হইতেছিল, কুঙ্কুমচিহ্নিত না হইয়াও যাহার গণ্ডযুগল উজ্জ্বল ছিল এবং অলঙ্কার না থাকায়ও মনোহর কর্ণযুগলদ্বারা যাহা সুন্দর দেখা যাইত; সেই মুখখানি যেন প্রত্যক্ষ দেখিতেছি ॥৩৭॥

(ড) (স্তম্ভিতের ন্যায় থাকিয়া শোকের সহিত) হায় হায়!

(१) कलवव्युपरमे, कलवेऽव्युपरते इति विभिन्नौ पाठौ।

नेपथ्ये । वशिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजड़ाः (१) ॥३८॥

बहुक्षणं यावत् मनस्तापो जायत इत्येतत्प्रतिपादनार्थं सामान्यतो वह्निषु इत्यनुक्त्वा कुकूलानां राशावित्युक्तम् ।

अत्र भावाभिमानि वाच्यं क्रियोत्प्रेक्षाद्वयम्, जगज्जीर्णारण्यमिति समासाभावेऽपि निरङ्गं केवलरूपकञ्च, एतेषां मिथो नैरपेक्ष्यात् संसृष्टिः। अरण्यपदान्वितस्य अवधारणार्थक-हिशब्दस्य भवतीत्यनन्तरपाठात् अस्थानस्थपदतादोषः, स च 'जगज्जीर्णारण्यं खलु भवति सङ्कल्पविरतौ' इति पाठेन समाधेयः ।

"कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले" इत्यमरः ।

ननु प्रियजन आश्वासं करोतीत्यनेनैव निर्वाहे नञ्‌द्वयोपादानात् "विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये !" इत्यादिवदपुष्टार्थत्वदोष इति चेन्न "सम्भाव्यमाननिषेध-निवर्त्तने नञ्‌द्वय"मिति वामनाभिधानात् तेन च अवधारणार्थप्रतिपादनात् ।

शिखरिणी वृत्तम् ॥३८॥

वशिष्ठ इति । शिश्वोः चन्द्रकेतुलवयोः कलहं समरम् आकर्ण्य लोकपरम्परया श्रुत्वा वशिष्ठः वाल्मीकिः दशरथस्य महिष्यः कौशल्याप्रभृतयः, अथानन्तरं जनकः अरुन्धत्या वशिष्ठभार्य्यया सहैव सभयाः परमस्नेहपात्रस्य पूर्वदृष्टस्य लवस्य चन्द्रकेतोश्च युद्धेन गुरुतरामङ्गलसम्भवात् भीतिमन्तः सन्तः, विदूरे अतीवविप्रकृष्टदेशे आश्रमो येषां ते विदूराश्रमाः तेषां भावः सा तया, तेषां पक्षे आश्रमाणामतीव दूरवर्त्तित्वादित्यर्थः श्रमेण

দীর্ঘকাল যাবৎ চিন্তা করিয়া, চিন্তা করিয়া, নির্ম্মাণপূর্ব্বক সম্মুখে যেন সংস্থাপিত প্রিয়জন, স্থানান্তরেও যে আশ্বাস জন্মায় না, এমন নহে। সেই চিন্তা বিরত হইলে জগৎটা জীর্ণারণ্যে পরিণত হইয়া যায়; তাহার পর হৃদয় যেন তুষানলে দগ্ধ হইতে থাকে ॥৩৮॥

(१) त्वरितगतयो विश्लथजटा इति पाठान्तरम् ।

राम:। कथं भगवत्यावरुन्धतीवशिष्ठौ, अम्बा, जनकश्चात्रैव, कष्टम्, कथं खल्वेते द्रष्टव्याः। (सकरुणं विलोक्य) अहह! तातजनकोऽप्यत्रैवायातीति (१) वज्रेणेव ताड़ितोऽस्मि (२) मन्दभाग्यः (ढ)।

---

विपुलपथागमनखेदेन जड़ाः नितान्तश्रान्ततया गमनासमर्थप्रायाः, अतएव त्वरितानि शीघ्रगमनाय त्वरान्वितानि मनांसि येषां ते तथोक्ता अपि जराग्रस्तैः वार्द्धकविशिष्टैः जराजीर्णैरित्यर्थः गात्रैरवयवैरुपलक्षिताः चिरेण कालविलम्बेन आगच्छन्ति समराङ्गनमायान्ति। युद्धनिवारणार्थमिति भावः। उदासीनानां केषाञ्चिन्मुनीनां चन्द्रकेतुलवयोः युद्धमवलोक्य तयोरनिष्टाशङ्कया नितरामुद्विग्नानां समाश्वासनात् कस्यचिन्मुनेरुक्तिरियमिति मन्तव्यम्।

भविष्यदनिष्टत्वप्रकारकं ज्ञानं भयं तच्च गुणपदार्थः, तेनात्र ताद्दशभयेन सह वशिष्ठादीनां सम्बन्धात् तुल्ययोगितालङ्कारः, चिरेणागमनं प्रति जराग्रस्तावयवत्वं श्रमजड़त्वञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, इत्यनयोः परस्परनिरपेक्षत्वात् संसृष्टिः प्रयोजनाभावेऽपि नियमार्थकस्य एवशब्दस्य प्रयोगात् अनियमे नियमाख्यदोषः "सहैतेऽरुन्धत्या" इति पाठे तत्समाधानम्।

द्वितीयाथशब्दो विदूरेत्यादिवाचकहेत्वन्तरारम्भे, खलुशब्दो वाक्यालङ्कारे।

शिखरिणी वृत्तम् ॥३९॥

(ढ) राम इति। सम्भावनायां प्रथमः कथंशब्दः। अत्रैव वाल्मीकितपोवन एव उपस्थिता आसन् इति शेषः, न तु पूर्वस्थाने स्थिता इत्येवशब्दार्थः। कथं केन प्रकारेण द्रष्टव्या मयेति शेषः। अकारणसीतानिर्वासनेन नितान्तापराद्धोऽहं मुखमेभ्यो दर्शयितुं

---

নেপথ্যে। অরুন্ধতীর সহিত বশিষ্ঠ, বাল্মীকি দশরথের মহিষী কৌশল্যা এবং জনক, ইঁহারা বালকদিগের যুদ্ধ শুনিয়া ভীত হইয়া, আশ্রমের অত্যন্ত দূরতাবশতঃ পরিশ্রমে অসমর্থ হইয়া, মন দ্রুতগামী হইলেও জরাগ্রস্ত দেহে অতিবিলম্বে আসিতেছেন ॥৩৯॥

---

(१) तातजनकस्तु दैवादत्रैवायात इति पाठभेदः। (२) क्वचित् एवशब्दो नास्ति।

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वशिष्ठादिभि-
र्दृष्ट्वाऽपत्यविवाहमङ्गलमहे (१) तत्तातयोः सङ्गतम्।
पश्यन्नीदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्य्ये किं न सहस्रधाऽहमथवा रामेण किं दुष्करम् ॥४०॥

---

लज्जितोऽस्मीति भावः। अहहेति विषादे। न केवलं वशिष्ठादिः तातजनकोऽपीत्यपि-शब्दार्थः, अत्रैव समरप्राङ्गण एव न तु आश्रमे स्थित इत्येवशब्दार्थः, वज्रेणैव ताड़ितोऽस्मि वज्रताड़ित इव दारुणपीड़ामनुभवामीत्यर्थः। अत्र असम्भवद्वस्तुसम्बन्धा निदर्शना-लङ्कारः। सीताया अभावे तज्जनकस्य यथा गरीयान् शोको मां प्रति कोपश्च, न तथा वशिष्ठादीनाम्, तेन च जनकसाक्षात्कार एव मम यथा महोद्वेगपीडयोः कारणं न तथा वशिष्ठादीनामिति भावः।

जनकदर्शनेन स्वकीयशोकस्य तीव्रत्वमाह सम्बन्धेति। सम्बन्धस्य विवाहेन रघूणां जनकानाञ्च परस्परसम्पर्कस्य स्पृहणीयतया श्लाघ्यत्वेन वाञ्छनीयतया हेतुना प्रमुदितैः सन्तुष्टैः वशिष्ठादिभिः मुनिभिर्जुष्टे सेविते उपस्थित्या परिपूरिते इत्यर्थः अपत्यानां पुत्रकन्यानां यत् विवाहमङ्गलं विवाहरूपं शुभं कर्म्म तस्य महे तज्जनिते उत्सवे तातयोः तातस्य पितुर्दशरथस्य तातस्य श्वशुरत्वेन पितृस्थानीयस्य जनकस्य च तत् महानन्दपूर्णं सङ्गतं सम्मिलनं दृष्ट्वा इदानीम् ईदृशे एवंविधे महावैशसे निर्वासनेन सीताया हत्यारूपे नृशंसकर्म्मणि वृत्ते जाते सङ्घटिते सति ईदृशं दारुणशोकेन नितान्तकातरं पितृसखं तातस्य दशरथस्य मित्रं जनकं पश्यन् अवलोकयन् अहं किं कथं सहस्रधा सहस्रखण्ड-प्रकारेण न दीर्य्ये न विदीर्णो भवामि। अथवा रामेण किं कार्य्यं दुष्करं कर्त्तुमशक्य-

(৮) রাম। হায় ভগবতী অরুন্ধতী, ভগবান্ বশিষ্ঠ, মাতা এবং জনকও এই খানেই। কি কষ্ট! কি করিয়া ইঁহাদিগকে দেখিব। (শোকের সহিত দেখিয়া) অহহ! পিতা জনকও এইখানেই আসিতেছেন। ইহাতে মন্দভাগ্য আমি বজ্রদ্বারাই তাড়িত হইলাম।

---

(१) जुष्टं वशिष्ठादिभिः दृष्ट्वाऽपत्यविवाहमङ्गलमहो इति क्वापि पाठः।

नेपथ्ये। कष्टं भोः! कष्टम् (१) (ग)।

अनुभावमात्रसमवस्थितश्रियं (२)
सहसैव वीक्ष्य रघुनाथमीदृशम्।
प्रथमप्रमूढ़जनकप्रबोधनात्
विधुराः प्रमोहमुपयान्ति मातरः ॥४१॥

मस्ति अपि तु किमपि नेत्यर्थः। यः खलु सर्वथा निरपराधां महासतीं सीतां निर्वासयितुमर्हति स्म, स रामः कर्त्तुं न शक्नुयात् ईदृशं निष्ठुरं कार्य्यं जगत्यां नास्त्येव, तेन चाधुना जनकसाक्षात्कारो रामस्य सुकर एवेति भावः।

अत्र रामस्य सर्वकार्य्यकरणयोग्यतारूपकारणेन दारुणशोकसह्यताकरणरूपकार्य्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः, स च अर्थापत्त्या सङ्कीर्णः।

"मह उद्धव उत्सवः" इत्यमरः।

दीर्य्य इति कर्म्मकर्त्तरि प्रयोगः। शार्दूलविक्रीडितं वृत्तम् ॥४०॥

(ग) नेपथ्य इति। कष्टमित्यादिकमपि पथिमध्यवर्त्तिनः कस्यचिन्न् नेरुक्तिः।

किं कष्टमित्याह अनुभावेति। मातरः कौशल्यादयः अनुभावमात्रेण केवलेन प्रभावेण केवलेन स्वाभाविकशारीरिकतेजोविशेषेणेत्यर्थः देहपीनत्वव्यावर्त्तनार्थं मात्रपदम्, समवस्थिता विद्यमाना श्रीः कान्तिर्यस्य तं तथोक्तम्, ईदृशं महाशोककृशशरीरं रघुनाथं रामं सहसा अतर्कितभावेन वीक्ष्य अवलोक्य विधुराः शोककातराः सत्यः प्रथमं पूर्वं

সম্বন্ধের বাঞ্ছনীয়তাবশতঃ আনন্দিত বশিষ্ঠপ্রভৃতিকর্তৃক সেবিত সন্তানগণের সেই শুভবিবাহ মহোৎসবে পিতা দশরথ ও জনকের সেই সম্মেলন দেখিয়া, এই মহানৃশংস কার্য্য হইয়া গেলে পর আবার এই অবস্থায় পিতার সখা জনককে দর্শন করতঃ আমি সহস্রধা বিদীর্ণ হইতেছি না কেন ; অথবা রামের দুষ্কর কার্য্য কি আছে ॥৪০॥

(গ) নেপথ্যে। কষ্ট! হায় কি কষ্ট।

(१) क्वापि भो इति शब्दो नास्ति। (२) समुपस्थितश्रियामिति पाठान्तरम्।

रामः। हा तात! हा मातरः! हा जनक! (त)
जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम्।
तस्मिन्नकरुणे पापे वृथा वः करुणा मयि ॥४२॥

---

प्रमूढस्य मूर्च्छितस्य जनकस्य प्रबोधनात् संज्ञालाभात् परमित्यर्थः प्रमोहं मूर्च्छाम् उपयान्ति प्राप्नुवन्ति। जनकः प्रथमं दूरतो राममवलोक्य परिचित्य च मूर्च्छितः परञ्च कैश्चित् प्रबोधितः, ईदृशसमये कौशल्यादयोऽपि तथाविधं तं दृष्ट्वा मुह्यन्तीत्यर्थः। दीर्घकालानन्तरं रामावलोकनेन शोकसागरोद्वेलनादिति भावः।

अत्र अनुभावमात्रसमवस्थितत्रियमिति भङ्ग्या शोकातुरत्वस्य प्रतीयमानत्वात् पर्य्यायोक्तमलङ्कारः। मञ्जुभाषिणी वृत्तम् ॥४१॥

(त) राम इति। तातेति श्वशुरत्वेन पितृस्थानीयस्य जनकराजर्षेः सम्बोधनम्। एकान्ताकुलतया पितृशोकस्याप्युदयात् जनकेति दशरथस्य सम्बोधनम्।

जनकानामिति। जनकानां जनकवंशीयानां रघूणां रघुवंशीयानाञ्च कृत्स्नं सकलं यत् गोत्रयोरुभयवंशयोर्मङ्गलं दृश्यमानोन्नतिरूपकुशलैकनिदानं सीतायां खलु जातायां जनकानां महानभ्युदय आसीत्, सम्पन्ने च सीतारामयोः परिणये रघुकुलस्यापि कापि समुन्नतिरभवदिति च रामायणे द्रष्टव्यम्। तस्मिन् कल्याणैकनिदाने सीतारूपे वस्तुनि अकरुणे निर्द्दये नितान्तनिष्ठुरतया सीताया निर्व्वासनेन हत्याकारिणीत्यर्थः अतएव पापे बृहत्पापशालिनि मयि वो युष्माकं करुणा दया दयया अभिसम्पातादिना शान्तिविधानाभाव इत्यर्थः वृथा निष्फलः कृपया रचितेन मया तद्दुःखनिवारणासम्भवात् युष्माकं मयि करुणाकरणमनर्थकमित्यर्थः। मम तत्पापस्य योग्यशास्तिविधानमेव युष्माकमुचितमिति भावः।

अत्र पापं प्रति अकरुणत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

---

যাঁহার সৌন্দর্য্য শারীরিক তেজোমাত্রে পর্য্যবসিত হইয়াছে, এইরূপ রামচন্দ্রকে সহসাই দর্শন করিয়া, কৌশল্যাপ্রভৃতি, প্রথম মূর্চ্ছিত জনকের সংজ্ঞালাভের পর শোকবিহ্বল হইয়া মূর্চ্ছাপন্ন হইলেন ॥৪১॥

(ত) রাম। হা পিতঃ! হা মাতঃ! হা জনক!

জনক ও রঘুবংশীয়দিগের উভয় বংশের যাহা সর্ব্বপ্রকার মঙ্গলস্বরূপ ছিল;

यावत् सम्भावयामि (१) (इत्युत्तिष्ठति) (थ)।

कुशलवौ। इत इतस्तातः (द)।

(सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे।)

# इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः (ध)।

अपतितभार्य्यादिपरित्यागी पातित्यजनकमहत्पापमाह प्रायश्चित्तविवेके गौतमः—

"पतिताऽत्याग्यपतितत्यागिनश्च पतिता" इति ॥४२॥

(थ) यावदिति। वाक्यालङ्कारे यावच्छब्दः। सम्भावयामि स्वयं गत्वा अभ्यर्थयामि, अथवा सम्भाषयामि, मातृप्रभृतीनिति शेषः।

(द) कुशेति। तातः पितृस्थानीयो भवान् राम इत्यर्थः, इत इतः अनेन अनेन पथेत्यर्थः आगच्छतु इति शेषः। इत इति तृतीयान्तात् तसप्रत्ययः।

(ध) इतीति। कुमारयोः कुशलवयोः प्रत्यभिज्ञानं स्वकीयपुत्रत्वेन परिज्ञानं यत्र सः। नाम कुमारप्रत्यभिज्ञाननाम्ना प्रसिद्धः, षष्ठोऽङ्कः समाप्त इति शेषः।

इति महामहोपाध्याय-महाकवि-भारताचार्य्य-

श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायाम्-

मुत्तररामचरितटीकायां सर्वार्थबोधिनीसमाख्यायां

षष्ठाङ्कविवरणं समाप्तम् ॥०॥

আমি তাহার প্রতিই নির্দ্দয়; সুতরাং পাপাত্মা; অতএব আমার প্রতি আপনাদের দয়া করা বৃথা ॥৪২॥

(থ) যাহা হউক, আমি ইঁহাদের অভ্যর্থনা করি। (এই বলিয়া গাত্রোত্থান করিলেন।)

(দ) কুশ ও লব। পিতা এই এই পথে আসুন।

(শোকের সহিত পদক্ষেপ করিয়া, সকলে প্রস্থান করিলেন।)

(ধ) কুমারপ্রত্যভিজ্ঞাননামে ষষ্ঠ অঙ্ক সমাপ্ত ॥০॥

(१) यावत् सम्भावयामीति पाठः क्वापि नास्ति।

# सप्तमोऽङ्कः ।

:o:-

(ततः प्रविशति लक्ष्मणः ।)

लक्ष्मणः । भो भोः ! अद्य खलु (१) भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः स्वप्रभावेण सन्निधापितः । आदिष्टश्चाहमार्य्येण, वत्स ! लक्ष्मण !

(क) लक्ष्मण इति । भो भो इति सहचराणां सम्बोधनम् । ब्रह्मभिः ब्राह्मणैः क्षत्रैः क्षत्रियैः, गोवृषन्यायात्, अन्यमानवजातिभ्यो ब्रह्मक्षत्रयोः प्राधान्यज्ञापनार्थं पृथगुपादानम्, पौरैः पुरवासिभिः जानपदैः प्रदेशवासिभिश्च सह वर्त्तमाना इति तथोक्ताः, प्रजाः जनान्, अस्माभिः राज्ञा राजपरिवारवर्गैश्च सह, आहूय आमन्त्र्य, कृत्स्न एव समग्र एव, देवाश्च असुराश्च तिरश्चां पशुपक्षिणाम् उरगाणां सर्पाणाञ्च नायकाः श्रेष्ठाश्च ते तथोक्ताः, तेषां निकायेन समूहेन सह वर्त्तमान इति स तथोक्तः, जङ्गमो गतिशीलः कीटादिः, स्थावरः स्थितिशीलः पर्वताद्यधिष्ठातृदेवतादिश्च भूतग्रामः प्राणिसमूहः उक्तदेवासुराद्यात्मक इत्यर्थः, स्वप्रभावेण स्वकीयतपोमाहात्म्येन सन्निधापितः उपस्थापितः । जगतः सर्वेषां सर्वविधप्राणिनामेकत्र समावेशस्य असम्भवता न केनचिदाशङ्कनीया उग्रतपसः सर्वै-

(তদনন্তর লক্ষ্মণের প্রবেশ।)

(ক) লক্ষ্মণ। ওহে! ভগবান্ বাল্মীকি আমাদের সহিত এবং ব্রাহ্মণ, ক্ষত্রিয়, পুরবাসী ও দেশবাসিগণের সহিত প্রজাবর্গকে আহ্বান করিয়া, অসুরগণ এবং পশুপক্ষিগণের শ্রেষ্ঠ ব্যক্তিদিগের সহিত জঙ্গম ও স্থাবর সমস্ত প্রাণিগণকেই নিজের প্রভাবে উপস্থাপিত করিয়াছেন। আর্য্য

(१) अद्य खल्विति पाठः क्वापि नास्ति ।

भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः, तद्गङ्गातीरमातोद्यस्थानमुपगम्य (१) क्रियतां समाजसन्निवेश इति। कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशनं (२) मया। अयन्तु—(क)

वाचिन्तनीयप्रभावदर्शनादिति भावः। अपि चेति चार्थः। आर्य्येण माननीयेन रामचन्द्रेणेत्यर्थः। स्वकृतिम् आत्मना विरचितं किमपि दृश्यकाव्यमित्यर्थः अप्सरोभिः उर्वशीप्रभृतिदेववाराङ्गनाभिः प्रयुज्यमानाम् अभिनीयमानां द्रष्टुम् उपनिमन्त्रिता आहूताः वयमित्यर्थः। तत्तस्मात् बहुकोटिप्राणिनामवस्थाने महाविपुलायतनस्थानस्यावश्यकत्वादित्यर्थः, आतोद्यस्थानं वीणादिवाद्यस्थानं रङ्गभूमिमित्यर्थः उपगम्य गत्वा समाजसन्निवेशः सभास्थापनं सर्वेषां यथायोग्यस्थानोपवेशनमित्यर्थः क्रियताम्, इति इत्यनेन आदिष्ट इत्यन्वयः। मयापि तवौदासीन्यं न कृतमित्याह कृतश्चेति। आदेशसमुच्चये चकारः। समुचितस्थानेषु सर्वथा योग्यासनेषु, मर्त्यो मरणधर्मा मनुष्यादिः अमर्त्यो मरणहीनो देवगणः तस्य मर्त्यामर्त्यस्य विनश्वराविनश्वरात्मकस्येत्यर्थः भूतग्रामस्य प्राणिसमूहस्य समुपवेशनम् आसनग्राहणम्। तेन मत्सहचरा भवन्तोऽप्युपविशन्त्विति भावः।

"ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदो विप्रे" इति मेदिनी। "नायको नेतरि श्रेष्ठे हारमध्यमणावपी"ति वैजयन्ती। "संघातेऽपि ग्रामो भूतेन्द्रियशब्दविषयकरणाना"मिति हलायुधः। "निकायस्तु पुमान् लक्ष्ये सधर्म्मिप्राणिसंहतौ। समुच्चये संहतानां निलये परमात्मनी"ति मेदिनी। "ततः वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामक"मित्यमरः।

स्वकृतिमिति "भावविहितः कृत्प्रत्ययो द्रव्यवत् प्रकाशतः" इति न्यायात् स्वरचितदृश्यकाव्यम्। कर्म्मणि क्तिप्रत्ययो वा।

(१) तद्भागीरथीतीरमनोज्ञस्थानमुपगम्य इति पाठान्तरम्।

(२) समुचितस्थानेषु समुपवेशसङ्गः, समुचितस्थानसन्निवेश इति पाठभेदौ।

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य्य इत एवाभिवर्त्तते ॥१॥

(ततः प्रविशति रामः ।)

रामः । वत्स लक्ष्मण ! अपि स्थिता रङ्गप्रेक्षकाः ? (ख)

तपसः फलमाह शिशिरस्वड्गन् वचनम्—

"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने ॥"

राज्येति । राज्यं राजत्वमेव आश्रमः राजत्वकरणालम्बनीभूतगृहस्थाश्रम इत्यर्थः तस्मिन् निवासेऽपि अवस्थानेऽपि सति प्राप्तं स्वीकृतं कष्टं दुःखकरं मुनिव्रतं ब्रह्मचर्य्यादिकं मुनिनियमो येन स तथोक्तः, आहारविहारादिविविधभोगसाधनसामग्री-सत्त्वेऽपि ततो निवृत्त इत्यर्थः । आर्य्यो रामः वाल्मीकेर्गौरवात् गौरवप्रसूतभक्तिवशा-दित्यर्थः, इत एव अत्रैव स्थाने न तु रङ्गदर्शनेन मनःस्फूर्त्तिविधानार्थमिति भावः ।

अत्र नियतिवशेन समाधानात् विरोधाभासोऽलङ्कारः ॥१॥

(ख) राम इति । अपि प्रश्ने । रज्यतेऽस्मिन्निति रङ्गः अभिनयस्थानं तस्य प्रेक्षकाः दर्शकाः अभिनयदर्शनोत्सुका इत्यर्थः, स्थिताः यथास्थाने उपविष्टाः किमित्यर्थः ।

(রামচন্দ্র'ও) আমাকে আদেশ করিয়াছেন যে, বৎস ! লক্ষ্মণ ! নিজ রচিত কোন প্রবন্ধ অপ্সরারা অভিনয় করিবে, তাহা দেখিবার নিমিত্ত ভগবান্ বাল্মীকি আমাদিগকে নিমন্ত্রণ করিয়াছেন ; অতএব বাদ্যের (কন্সার্টের) স্থান গঙ্গাতীরে যাইয়া সভা স্থাপন কর। আমিও মনুষ্য এবং অমনুষ্যরূপ প্রাণি-গণকে যথাযোগ্য স্থানে উপবেশন করাইয়াছি।

কিন্তু এই গৃহাশ্রমে থাকিলেও যিনি কষ্টকর মুনিব্রত আশ্রয় করিয়াছেন, সেই আর্য্য বাল্মীকির গৌরব রক্ষার্থ এই দিকেই আসিতেছেন ॥১॥

(তদনন্তর রামের প্রবেশ ।)

लक्ष्मणः। अथकिम् (ग)।

रामः। इमौ पुनर्वत्सौ कुशलवौ चन्द्रकेतुसदृशीं स्थान-प्रतिपत्तिं लम्भयितव्यौ (घ)।

लक्ष्मणः। प्रभुस्नेहप्रत्ययात्तथैव कृतम्। इदन्त्वास्तीर्णं राजासनम्, उपविशत्वार्य्यः (ङ)।

(राम उपविशति। सर्वे चोपविशन्ति) (च)।

---

(ग) लक्ष्मण इति। अथकिमित्येकं स्वीकारार्थमव्ययमित्यमरकदुक्तम्। "अथकिम्। स्वीकार" इति शब्दकल्पद्रुमः।

(घ) राम इति। अप्रथमे पुनःशब्दः। चन्द्रकेतोः सदृशी तुल्या तां स्थान-प्रतिपत्तिम् उपवेशनस्थानलाभं लम्भयितव्यौ ग्राहणीयौ। यादृशासने चन्द्रकेतुरुपविष्टः तादृश एव राजकुमारयोग्यासने कुशलवावप्युपवेशयेत्यर्थः।

(ङ) लक्ष्मण इति। प्रभोरधीश्वरस्य भवतः स्नेहप्रत्ययात् कुशलवौ प्रति वात्सल्य-मस्तीति विश्वासात् तथैव चन्द्रकेतुसदृशस्थानमेव कृतं कुशलवयोरुपवेशनायेत्यर्थः कल्पितम्। तु किन्तु इदमग्रतो दृश्यमानं राजासनं राजोचितम् उच्चैः बहुमूल्यञ्चासन-मित्यर्थः आस्तीर्णं विस्तीर्णं कल्पितमित्यर्थः। आर्य्यो भवान् उपविशतु तत्रासन इति शेषः।

(च) राम इति। राज्ञः प्राक् प्रजानामुपवेशनस्यान्याय्यत्वात् रामोपवेशनानन्तरं सर्वे चोपविशन्तीत्युक्तम्। सर्वे सभ्याः।

---

(খ) রাম। বৎস! লক্ষ্মণ! রঙ্গদর্শকগণ যথাস্থানে অবস্থান করিয়াছেন ত?

(গ) লক্ষ্মণ। হাঁ।

(ঘ) রাম। কিন্তু এই বৎস কুশ ও লবকে চন্দ্রকেতুর তুল্য স্থান লাভ করাইতে হইবে।

(ঙ) লক্ষ্মণ। প্রভুর স্নেহ অনুমান করিয়া, আমি তাহাই করিয়াছি; কিন্তু এই রাজার আসন আস্তীর্ণ হইয়াছে, আর্য্য উপবেশন করুন।

लक्ष्मणः। प्रस्तूयतां भोः! (छ)

(प्रविश्य) सूत्रधारः। भो भोः! भगवान् भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति, यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसञ्च (१) किञ्चिदुपनिबद्धम्, तत्र कार्य्यगौरवा-(२) दवधातव्यमिति (ज)।

---

(छ) लक्ष्मण इति। भो इति नटानां सम्बोधनम्। प्रस्तूयताम् आरभ्यतां विज्ञापितनाटकाभिनय इति शेषः। पुस्तकान्तरे रामोक्तिरियम्।

(ज) गर्भाङ्कमवतारयति प्रविश्येति। भो भो इति उपस्थितसामाजिकानां सम्बोधनम्। भूतं सत्यम् अर्थं वदितुं शीलमस्येति भूतार्थवादी सर्वदा यथार्थवादी प्राचेतसो वाल्मीकिः सजङ्गमस्थावरं सचराचरम्। आज्ञापयति आदिशति महर्षीणां सर्वमाननीयतया सर्वेष्वेव आदेशसम्भवादिति भावः। आर्षेण ऋषियोग्येन त्रिकालदर्शिना ज्ञानमयेनेत्यर्थः, समुद्वीक्ष्य यथायथतया विज्ञाय, पावनं पवित्रम्, करुणः शोकोद्दीपकः अद्भुतो विस्मयकरश्च रसो यत्र तत्, किञ्चिद्दृश्यकाव्यम् उपनिबद्धं रचितम्। तत्र दृश्यकाव्ये तदभिनय इत्यर्थः कार्य्यगौरवात् अभिनेयवस्तुनो गुरुत्वेन अनवज्ञेयत्वात् अवधातव्यं मनःसंयोगः कर्त्तव्यः भवद्भिरिति शेषः। इति इत्यन्तम् आज्ञापयतीत्यन्वयः।

"युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः।

(চ) (রাম উপবেশন করিলেন, অন্য সকলেও উপবেশন করিল।)

(ছ) লক্ষ্মণ। ওহে! আরম্ভ কর।

(জ) সূত্রধার। (প্রবেশ করিয়া) ওহে! ওহে! সত্যবাদী ভগবান্ বাল্মীকি সচরাচর জগৎকে আদেশ করিতেছেন যে, আমি আর্ষ চক্ষুদ্বারা দর্শন করিয়া পবিত্র এবং করুণ ও অদ্ভুতরস-সমন্বিত এই যে কিছু রচনা করিয়াছি; কার্য্যের গুরুত্ববশতঃ আপনারা সে বিষয়ে মনোযোগ করিবেন।

(१) पावनकरुणाद्भुतरसमिति पाठान्तरम्। (२) काव्यगौरवादिति पाठभेदः।

रामः। एतदुक्तं भवति। साक्षात्कृतधर्म्माणो महर्षयः, तेषामम्रुतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानीति (झ)।

नेपथ्ये। हा अज्जउत्त! हा कुमार लक्खण! एआइणीं मन्दभाइणीं असरणं अरस्से आसस्सप्पसववेअणं हदास सावदा मं अहिलसन्ति, साहं दाणिं मन्दभाइणी भाईरहीए अत्ताणं णिक्खिवेमि (१) (ञ)।

(ञ) हा आर्य्यपुत्र! हा कुमार लक्ष्मण! एकाकिनीं मन्दभागिनीमशरणम्।

(झ) राम इति। एतत् "यदिदमस्माभि"रित्यादिवाल्मीकिवचनस्य तात्पर्य्यमित्यर्थः उक्तं विवृतं भवति मयेति शेषः। अस्य वाल्मीकेरादेशस्य तात्पर्य्यमहं विवृणोमीति सरलार्थः। किन्तत् विवरणमित्याह साक्षादिति। साक्षात्कृतधर्म्माणः प्रत्यक्षीकृतधर्म्ममूर्त्तयः। अमृतं मुक्तिरेव सारः स्थिरांश उत्कृष्टभागो येषां तानि, निर्वाणपर्य्यवसितानीत्यर्थः रजसो रजोगुणात् पराणीति परोरजांसि केवलसत्त्वमयानीत्यर्थः प्रज्ञानानि प्रकृष्टतत्त्वज्ञानानि क्वचित् भूते भविष्यति वर्त्तमाने वा काले, दूरे व्यवधाने वा देशे न व्याहन्यन्ते व्याहतानि रुद्धानि भवन्ति, सर्व्वत्रैव यथायथं वस्तु उपस्थापयन्तीत्यर्थः, इति हेतोः अनभिशङ्कनीयानि यथायथभावेन वस्तूपस्थापकत्वेन संशयितव्यानि। अतो वाल्मीकिना यदुपनिबद्धं तस्य सत्यत्वे न केनापि संशयितव्यमिति भावः।

परोरजांसीति राजदन्तादित्वात् परनिपातः, "अपस्करादयश्चे"ति सुट्।

"ज्ञानान्मुक्ति"रिति सांख्यसूत्रम्।

(ঝ) রাম। ইহা বলা যাইতে পারে, মহর্ষিরা ধর্ম্মকে প্রত্যক্ষ করিয়াছেন; সুতরাং মাহাত্ম্যশালী সেই মহর্ষিগণের জ্ঞান, মুক্তি প্রতিপাদক এবং রজোগুণের অতীত; অতএব তাহা কোথাও ব্যাহত হয় না; এই জন্য সে বিষয়ে সন্দেহ করা উচিত নহে।

(१) णिक्खिविस्सं इति पाठान्तरम्।

लक्ष्मणः। (आत्मगतम्) कष्टं वतान्यदेव किमपि (ट)।

सूत्र। विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥२॥

(इति निष्क्रान्तः) (ठ)।

अरण्ये आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति, साहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि।

(ञ) नेपथ्य इति। न विद्यते शरणं रक्षिता यस्यास्ताम् अशरणाम्। आसन्नप्रसव-वेदनाम् उपस्थितप्रसवव्यथाम्, हताशां जीवनाशारहितां माम्, श्वापदाः व्याघ्रादयो हिंस्रजन्तवः, अभिलषन्ति खादितुमिच्छन्ति। भागीरथ्यां गङ्गाजले, आत्मानं देहं निक्षिपामि विसृजामि। जीवनरक्षायामुपायाभावात् हिंस्रजन्तुकर्तृकभक्षणापेक्षया गङ्गाया आश्रयः श्रेयानिति भावः। रामचन्द्रादेशात् अरण्ये परित्यज्य लक्ष्मणे प्रस्थिते सति सीताया उक्तिरियम्।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः।

(ट) लक्ष्मण इति। वतेति खेदसूचकमव्ययम्। अन्यदेव चिन्तितविषयात् भिन्नमेव, किमपि अनिर्वचनीयम् इदमभिनेतुमारभ्यते इति शेषः। कोऽपि प्राचीनो विस्मयकर-विषयोऽभिनेतव्य इति पूर्वमस्माभिश्चिन्तित इति भावः। लक्ष्मणनामकस्य अन्यस्यापि सम्बोधनसम्भवात् नेपथ्यात् कस्योक्तिरियमिति निर्णयाभावात् कस्य विषयस्याभिनयो भविष्यतीति इदानीमपि रामलक्ष्मणादयो निर्णेतुं न शक्नुवन्ति इति प्रत्येतव्यम्।

विश्वेति। राज्ञा रामेण महावने गहनारण्ये त्यक्ता विश्वम्भरात्मजा पृथिवीकन्या

---

(ঞ) নেপথ্যে। হা আর্য্যপুত্র! হা কুমার লক্ষ্মণ! মন্দভাগ্যা আমি এই বনে একাকিনী রহিলাম; আমার রক্ষক কেহ নাই; প্রসব-বেদনাও উপস্থিত হইয়াছে; তাই আমি হতাশ হইয়াছি; হিংস্রজন্তুগণ আমাকে ভোজন করিতে ইচ্ছা করিতেছে; সেই মন্দভাগ্যা আমি এখন আপনাকে গঙ্গাজলে নিক্ষেপ করিতেছি।

(ট) লক্ষ্মণ। (স্বগত) হায় কষ্ট! অন্যই কিছু।

रामः। देवि ! क्षणमपेक्षस्व (१) (ड)।

लक्ष्मणः। आर्य्य ! नाटकमिदं नाटकमिदम् (२) (ढ)।

देवी सीता प्राप्तप्रसवम् उपस्थितगर्भमोचनकालम् आत्मानं देहं गङ्गादेव्यां गङ्गाजले विमुञ्चति निक्षिपति। अतएव नेपथ्यात् "हा अज्जउत्त"त्यादि सीताया उक्तिरिति भावः।

गङ्गादेव्यामित्यनेन नेयं सीताया आत्महत्या अपि तु आत्मरक्षार्थमेव गङ्गायाः शरणापन्नता इति ध्वन्यते, तेनात्र शब्दशक्तिमूलो वस्तुध्वनिः ॥२॥

(ठ) इतीति। निष्क्रान्तः सूत्रधार इति शेषः। एतदन्ता गर्भाङ्कस्य प्रस्तावना।

सूत्रधारेण वाल्मीकिप्रणीतप्रबन्धस्य विश्वसनीयत्वप्रयोगे प्रयुज्यमाने नेपथ्यात् सीताविलापमाकर्ण्य तस्या गङ्गायामात्मनिक्षेपरूपप्रयोगान्तरस्य प्रयुक्तत्वात् तेन च पृथ्वीगङ्गासीतानां प्रवेशादित्रयमपि प्रस्तावना प्रयोगातिशयरूपा। प्रवर्त्तकरूपेति केचित्। वस्तुतस्तु ईदृशलक्षणस्थापनार्थं लक्षणान्तरकरणमुचितमासीदालङ्कारिकाणाम्।

(ड) राम इति। अपेक्षस्व विलम्बस्व। अहमपि तवानुवर्त्ती भवामीति वाक्यशेषः। इदानीन्तु विश्वम्भरेत्यादिना सूत्रधारेण सीताया निर्द्देशात् रामस्यायं विलाप इति बोध्यम्।

(ढ) लक्ष्मण इति। नाटकमिदम् अभिनयः खल्वेष इत्यर्थः। न तु वस्तुत एव सीता गङ्गायामात्मानं विमुञ्चतीति तदर्थं विलापो नोचित इति भावः। अवधारणे द्विरुक्तिः।

---

সূত্রধার। রাজা রামচন্দ্র পৃথিবীর কন্যা সীতাদেবীকে মহাবনে নির্ব্বাসন করিয়াছিলেন; প্রসববেদনা উপস্থিত হইলে তিনি আপনাকে গঙ্গাজলে নিক্ষেপ করিতেছেন ॥২॥

(ঠ) (এই বলিয়া চলিয়া গেল।)

(ড) রাম। দেবি ! ক্ষণকাল অপেক্ষা কর।

(ঢ) লক্ষ্মণ। আর্য্য ! ইহা নাটক, ইহা নাটক।

(१) हा देवि ! हा देवि ! लक्ष्मण ! अवेक्षस्व इति पाठभेदः।

(२) क्वचित् द्विरुक्तिर्नास्ति।

রামঃ। হা দেবি! দণ্ডকারণ্যবাসপ্রিয়সখি! এষ তে রামাদ্দৈবদুর্বিপাকঃ (ণ)।

লক্ষ্মণঃ। আর্য্য! দৃশ্যতাং তাবৎ প্রবন্ধার্থঃ (ত)।

রামঃ। এষ সজ্জোঽস্মি বজ্রময়ঃ (থ)।

[ততঃ প্রবিশত্যুৎসঙ্গিতৈকৈকদারকাভ্যাং পৃথ্বীগঙ্গাভ্যামবলম্বিতা সীতা] [দ]।

রামঃ। বৎস লক্ষ্মণ! অসংবিজ্ঞাতমনিবন্ধনং তম ইব প্রবিশামি, ধারয় মাম্ [ধ]।

---

(ণ) রাম ইতি। এষ গঙ্গায়ামাত্মনিক্ষেপঃ। দৈবদুর্বিপাকঃ ভাগ্যস্য অশুভং ফলম্। মহারণ্যে সাহায্যায় সহচরীভূতায়া এব তবায়ং দুর্বিপাকো ময়ৈব বিহিত ইতি মত্তো জগত্যাং কোঽপি কৃতঘ্নো নাস্তীতি ভাবঃ।

(ত) লক্ষ্মণ ইতি। প্রবন্ধার্থঃ দৃশ্যকাব্যবিষয় ইতি যাবৎ। মন্যে, পরতঃ শুভমেব ভবিষ্যতীতি ভাবঃ।

(থ) রাম ইতি। বজ্রময়ঃ বজ্রবৎকঠিনহৃদয়ঃ কথমন্যথা বিদীর্ণহৃদয়ো ন ভবামীতি ভাবঃ। সজ্জঃ অভিনয়দর্শনার্থং দত্তাবধানঃ।

(দ) তত ইতি। উৎসঙ্গিতঃ ক্রোড়ে কৃতঃ একৈকো দারকো বালকো যাভ্যাং তাভ্যাম্। অবলম্বিতা ধৃতা। উৎসঙ্গ উৎসঙ্গসম্বন্ধঃ ক্রোড়ে সমারোপ ইত্যর্থঃ জাতোঽস্যেতি উৎসঙ্গিতঃ তারকাদিত্বাদিতচ্।

---

(ণ) রাম। হা দেবি! দণ্ডকারণ্যবাসপ্রিয়সখি! রাম হইতে তোমার এই দৈবদুর্বিপাক উপস্থিত হইল।

(ত) লক্ষ্মণ। আর্য্য! নাটকের বিষয়টা দেখুন।

(থ) রাম। আমি বজ্রময় কি না; তাই এই প্রস্তুত হইয়াছি।

(দ) (তদনন্তর পৃথিবী ও গঙ্গা এক একটী বালককে ক্রোড়ে করিয়া ধারণ করিয়াছেন, এই অবস্থায় সীতার প্রবেশ।)

गङ्गा [१] । समाश्वसिहि कल्याणि ! दिष्ट्या वैदेहि ! वर्द्धसे ।
अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ ॥३॥

सीता । [समाश्वस्य] दिट्ठिआ दारए पसूदह्मि, हा अज्जउत्त ! [इति मूर्च्छति] [न] ।

लक्ष्मणः । [पादयोर्निपत्य] आर्य्ये ! आर्य्ये ! दिष्ट्या

(न) दिष्ट्या दारकौ प्रसूतास्मि, हा आर्य्यपुत्र !

(ध) राम इति । असंविज्ञातम् अज्ञातपूर्वम्, अनिबन्धनम् अहेतुकम् अतर्कितमुपस्थितमित्यर्थः तमोऽन्धकारम् । मोह आगत इत्यर्थः । सीताभिनयदर्शनेन अतथा शोकोद्वेलनादिति भावः ।

समेति । हे कल्याणि ! मङ्गलभूते ! वैदेहि ! सीते ! समाश्वसिहि आश्वस्ता भव वर्द्धसे भाग्येन पुत्रसम्पन्नासि, रघुवंशधरौ रघुकुलरक्षकौ सुतौ पुत्रद्वयम् अन्तर्जलं जलमध्ये प्रसूतासि उत्पादितवती ।

अत्र आश्वासं प्रति पुत्रप्रसवो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

जलस्यान्त इति अन्तर्जलमित्यव्ययीभावः । प्रसूतेति आदिकर्म्मविवक्षया कर्त्तरि क्तः ॥३॥

(न) सीतेति । पुत्रप्रसवमाकर्ण्य सीतायाः चेतसि एवमभूत् गर्भोत्पत्तिमात्रमहानन्दित आर्य्यपुत्रश्चेदत्र सन्निहितो भवेत् तदा तस्य कियानानन्दो भवेत् ततश्च रामस्मरणेन शोकसागरोद्वेलनात् आर्य्यपुत्रेति सम्बोधनं मूर्च्छा चेति बोध्यम् ।

(ধ) রাম। বৎস! লক্ষ্মণ! অজ্ঞাত ও অহেতুৎপন্ন অন্ধকারেই যেন আমি প্রবেশ করিতেছি ; অতএব আমাকে ধর।

গঙ্গা। হে কল্যাণি! বিদেহনন্দিনি! তুমি আশ্বস্ত হও, ভাগ্যবশতঃ তোমার অভ্যুদয় হইয়াছে ; কারণ, তুমি জলের ভিতরে রঘুবংশরক্ষক দুইটী বালককে প্রসব করিয়াছ ॥৩॥

(ন) সীতা। (আশ্বস্ত হইয়া) আমি ভাগ্যবশতঃ দুইটী বালককে প্রসব করিয়াছি। হা আর্য্যপুত্র! (এই বলিয়া মূর্চ্ছিত হইলেন।)

(१) देव्यौ इति क्वापि पाठः ।

वर्द्धामहे, कल्याणप्ररोहो रघुवंशः। [विलोक्य] हा! हा! कथं चुभितवाष्पोत्पीड़निर्भरः प्रमुग्ध एवार्य्यः। [इति वीजयति] [प]।

पृथ्वी। वत्से! समाश्वसिहि समाश्वसिहि।

सोता। [आश्वस्य] भअवदि! का तुमं इअं अ [फ]।

पृथ्वी। इयन्ते श्वशुरकुलदेवता भागीरथी [ब]।

(फ) भगवति! का त्वमियञ्च।

(प) लक्ष्मण इति। आर्य्य आर्य्येति हर्षे द्विरुक्तिः। कल्याणः मङ्गलकरः प्ररोहः अङ्कुरः करीरश्च यस्य सः, रघुवंशः रघुकुलं वेणुदण्डश्च। अत्र श्लिष्टपरम्परितरूपकमलङ्कारः। विलोक्य राममिति शेषः। चुभित उद्वेलितो यो वाष्पोत्पीडः अश्रुराशिः तेन निर्भरः परिपूर्णः, प्रमुग्ध एव मूर्च्छित एव। स्वयोगव्यवस्थापने एवशब्दः। पूर्व्वमभिनयदर्शनाय एकाग्रचित्तो लक्ष्मणो रामस्य मोहं नावगतः, परञ्च तमवगम्य लक्ष्मणस्य हा हेत्याद्युक्तिरिति बोध्यम्। वीजयति व्यजनेन वायुं सञ्चालयति।

वीजधातुश्चुरादिरदन्तः।

(ब) पृथ्वीति। श्वशुरकुलदेवता सगरवंशोपास्या उपासनया सगरवंशं प्रत्यनुग्रहं कारिणीत्यर्थः।

(প) লক্ষ্মণ। (রামের চরণে নিপতিত হইয়া) আর্য্য! আর্য্য! ভাগ্যে আমরা উন্নতি লাভ করিয়াছি। রঘুবংশের মঙ্গলকর অঙ্কুর জন্মিয়াছে। (দেখিয়া) হায়! হায়! উদ্বেলিত অশ্রুরাশিতে পূর্ণ হইয়া আর্য্য মূর্চ্ছিতই হইয়াছেন। (এই বলিয়া বাতাস করিতে লাগিলেন।)

পৃথিবী। বৎসে! আশ্বস্ত হও, আশ্বস্ত হও।

(ফ) সীতা। (আশ্বস্ত হইয়া) ভগবতি! আপনি কে? ইনি বা কে?

(ব) পৃথিবী। ইনি তোমার শ্বশুরকুলের দেবতা গঙ্গা।

सीता । भअवदि ! णमो दे णमो दे [भ] ।

भागी । चारित्रोपचितां कल्याणसम्पदमधिगच्छ [म] ।

लक्ष्मणः । अनुगृहीताः स्मः [य] ।

भागी । इयन्तु [१] ते जननी वसुन्धरा [र] ।

सीता । हा अम्ब ! ईदिसी अहं तुए दिट्ठा [ल] ।

पृथ्वी । एहि वत्से ! एहि पुत्रि ! [इति सीतामालिङ्ग्य मूर्च्छति] [व] ।

---

(भ) भगवति ! नमस्ते नमस्ते ।

(ल) हा अम्ब ! ईदृशी अहं त्वया दृष्टा ।

---

(म) भागीति । चारित्रेण पातिव्रत्यरूपेण सदाचारेण उपचितां वर्द्धितां कल्याणसम्पदं सर्वविधमङ्गलसम्पत्तिम् अधिगच्छ लभस्व ।

चरित्रमेव चारित्रं प्रज्ञादित्वात् स्वार्थे अण् ।

(य) लक्ष्मण इति । अनुगृहीताः दयापात्रीकृताः । गङ्गाकृताशी फलस्यावश्यम्भावित्वात् सीताकल्याणास्मत्कल्याणयोश्चाभिन्नत्वादिति भावः ।

(र) भागीति । तुशब्दो भागीरथीभेदप्रतिपादनार्थः । "तु स्याद्भेदेऽवधारणे" इत्यमरः ।

(ल) सीतेति । ईदृशी चरित्रदोषापवादेन निर्वासितेत्यर्थः । चरित्रापवादेन परिभूताया जनन्यादिदर्शनम् अतीवलज्जाविषादकरमिति भावः ।

---

(ভ) সীতা। ভগবতি! আপনাকে নমস্কার, আপনাকে নমস্কার।

(ম) গঙ্গা। নিজচরিত্র বর্দ্ধিত মঙ্গল সম্পত্তি লাভ কর।

(য) লক্ষ্মণ। অনুগৃহীত হইলাম।

(র) গঙ্গা। ইনি তোমার জননী পৃথিবী।

(ল) সীতা। হা মাতঃ! তুমি এই অবস্থায় আমাকে দেখিলে!

---

(१) क्वचित् तुशब्दो नास्ति ।

लक्ष्मणः। [सहर्षम्] दिष्ट्या पृथ्वीभागीरथीभ्यामभ्युपपन्ना आर्य्या [१] [श]।

रामः। [अवलोक्य] करुणतरं खल्वेतद्वर्त्तते [ष]।

भागी। विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन, यद्वा सर्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरस्चेतनावतामनुपप्लवः संसारतन्तुः। वत्से वैदेहि! देवि भूतधात्रि! समाश्वसिहि समाश्वसिहि (स)।

(ब) पृथ्वीति। वत्से पुत्रीति द्विविधसम्बोधनं स्नेहातिशयज्ञतम्। सीतादुःखेन तादृशदुःखितत्वात् मूर्च्छेति बोध्यम्।

(श) लक्ष्मण इति। अभ्युपपन्ना प्राप्ता आर्य्या सीता। अशरणस्य शरणप्राप्तिरतीवसुखायेति भावः।

(ष) राम इति। अवलोक्य पृथ्वीभागीरथीभ्यां सीताप्राप्तिमिति शेषः। एतत् पृथ्वीगङ्गाभ्यां सीताया आश्रयदानं करुणतरं ममातीवशोकोद्दीपकमित्यर्थः। सर्वाश्रयस्य समाजो मम भार्य्याया अपरैराश्रयदानादिति भावः।

(स) भागीति। विश्वं सर्वं बिभर्त्तीति विश्वम्भरा सापि विश्वधारणव्यापारेण सर्वंसहापीत्यर्थः व्यथते आत्मजायाः सीताया दुःखेन दुःखमनुभवति इति हेतोः, अपत्यस्नेहेन सन्तानवात्सल्येन जितं सर्वोत्कर्षेण स्थितम्। सर्वं सहाया अपि पृथिव्याः सुतायाः सीताया दुःखेन दुःखानुभवदर्शनात् अपत्यस्नेह एव सर्वान्तःकरणवृत्तिभ्यः

(ब) পৃথিবী। আয় বৎসে! আয় কন্যে! (এই বলিয়া সীতাকে আলিঙ্গন করিয়া মূৰ্চ্ছিত হইলেন।)

(শ) লক্ষ্মণ। (আনন্দের সহিত) ভাগ্যবশতঃ পৃথিবী ও গঙ্গাদেবী আৰ্য্যাকে আশ্রয় দিয়াছেন।

(ষ) রাম। (দেখিয়া) এ ঘটনা অত্যন্ত শোকোদ্দীপক বটে।

(१) पृथ्वीगङ्गाभ्यामिति पाठान्तरम्।

पृथिवी। देवि! सीतां प्रसूय कथमाश्वसिमि (ह)।
एकश्चिरं राक्षसमध्यवासः
साङ्गो द्वितीयश्च सुदुःश्रवोऽस्याः (१)।
भागी। को नाम पाकाभिमुखस्य जन्तु-(२)
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥४॥

---

श्रेयानिति प्रतीयत इति सरलार्थः। उक्तमर्थं समर्थयति यदिति। हि तथाहि, एष अपत्यस्नेहरूपो मोहग्रन्थिः ममताबन्धनं सर्वसाधारणः सर्वेषां देवासुरादिप्राणिनां समानः अविशेषेण वर्त्तमान इति यावत् चेतनावतां प्राणिनाम् अन्तश्चरः मनोवर्त्ती, अनुपप्लवः दुश्छेदः संसारस्य तन्तुः योजकसूत्रम्। एतदभावे मात्रादीनां बालापत्यादिरक्षणाभावेन क्षणेनैव सर्वं नश्यतीति भावः। भूतधात्रि! प्राणिनां धारणकर्त्रि!

अत्रापत्यस्नेहे तन्तुत्वारोपस्य प्रकृतापत्यस्नेहप्राधान्योपयोगितया परिणामालङ्कारः।

(ह) पृथिवीति। प्रसूय उत्पाद्य। सीतादुःखेनैव सर्वदा दुःखानुभवात् कदापि ममाश्वासो नास्त्येवेति भावः।

सीताया दुःखं विवरीतुमाह एक इति। अस्याः सीतायाः, एकस्तावत् चिरं बहुकालं व्याप्य राक्षसानां मध्ये रावणेनापहरणानन्तरं लङ्कायामशोकवने इत्यर्थः वासः अवस्थानं वासजनितं भीषणदुःखमित्यर्थः, अङ्गैः शेषाङ्गैः अलीकरामलक्ष्मण-

(স) গঙ্গা। বিশ্বম্ভরা পৃথিবীও দুঃখ অনুভব করিতেছেন; সুতরাং সন্তানস্নেহেরই জয়। অথবা এই সন্তানস্নেহ, সকলেরই সমান মোহবন্ধন-স্বরূপ এবং প্রাণিগণের অন্তঃকরণবর্ত্তী দুশ্ছেদ্য সংসারসূত্রস্বরূপ। বৎসে! বিদেহনন্দিনি! দেবি! ভূতধাত্রি! আপনারা আশ্বস্ত হউন।

(হ) পৃথিবী। দেবি! সীতাকে প্রসব করিয়া, কি প্রকারে আশ্বস্ত হইব।

---

(१) त्यागो द्वितीयश्च सुदुःसहोऽस्या इति पाठान्तरम्। (२) जन्तोरिति पाठभेदः।

पृथिवी। भागीरथि! सदृशमुक्तम्। युक्तमेतद्वा रामभद्रस्य (च)।

निधनवार्त्ताश्रवणादिजनितसन्तापैः सह वर्त्तमान इति साङ्गः परिसमाप्त इत्यर्थः, द्वितीयो रामकर्त्तृकः परित्यागश्च सुदुःश्रवः चरित्रदोषापवादेन विहितत्वात् कृतस्रया साधुजनेन श्रोतुमप्यशक्यः। इदन्तु पूर्वस्मादपि घोरतरं दुःखमिति भावः।

क इति। नाम सम्भावनायाम्। को जन्तुः प्राणी पाकाभिमुखस्य परिणामोन्मुखस्य फलोत्पादनप्रवृत्तस्य इत्यर्थः दैवस्य नियतेः द्वाराणि प्रसरणमार्गान् पिधातुम् आच्छादयितुम् अवरोद्धुमिति यावत् ईष्टे प्रभवति शक्नोति अपि तु कोऽपि नेति तात्पर्य्यम्। सीताया ईदृशी दुःखपरम्परा नियतिविहितेति न तदर्थमनुतापः करणीय इति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स च अर्थापत्त्या सङ्कीर्य्यते।

फलोत्पादनप्रवृत्तेः पूर्वमवगतस्य दुर्दैवस्य स्वस्त्ययनादिना शान्तिरपि विधातुं शक्यते फलोत्पादनप्रवृत्तस्य तु कथमपि नेति प्रतिपादनार्थं पाकाभिमुखस्येत्युक्तम्। पिधातुमिति "धाञ्नहयोरपेरुपसर्गस्यादे"रिति अपिशब्दस्य अकारलोपः।

इन्द्रवज्रा वृत्तम् ॥४॥

(च) पृथिवीति। सदृशं योग्यमुक्तं त्वयेति शेषः। दैवस्य बलवत्तया सीताया इयं दुर्गतिरिति स्वीकरोमीति भावः। एवार्थे वाशब्दः "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वप्रकाशदर्शनात्। रामभद्रस्य एतत् अकारणं सीताया निर्वासनं युक्तमुचितमेवाभूत् विपरीतलक्षणया नितान्तमनुचितमेतदित्यर्थः विपरीतलक्षणान्यत्रापि यथा—"उपकृतं बहु तत्र किमुच्यते" इति साहित्यदर्पणे। उपकृतम् अपकृतमिति तत्रार्थः।

সীতার এক দীর্ঘকাল যাবৎ রাক্ষসগণের মধ্যে অবস্থান সাঙ্গ হইল; আবার দ্বিতীয় যাহা হইল; তাহা একেবারে অশ্রাব্য।

গঙ্গা। ফল জন্মাইতে প্রবৃত্ত দৈবের পথ অবরোধ করিতে কোন্ ব্যক্তি সমর্থ হয়? ॥৪॥

(ক) পৃথিবী। ভাগীরথি! আপনি উপযুক্ত কথা বলিয়াছেন। রামভদ্রের এটা উচিতই হইয়াছে।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीड़ितः।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥५॥

सीता। हा अज्जउत्तं सुमराविदह्मि (क)।

सीतानिर्वासनस्यायुक्तत्वं प्रतिपादयति नेति। बाल्ये शैशवे नवयौवने इति तात्पर्य्यम्, बालेन शिशुना नवयुवकेनेत्यर्थः रामेण पीडितः गृहीतः पाणिः न प्रमाणीकृतः नापेक्षितः। यथाशास्त्रं परिणीतायाः सच्चरित्रायाः भार्य्यायाः परित्यागो लोकशास्त्र-गर्हितत्वात् नितान्तमनुचित इति भावः। अहं पृथिवी न प्रमाणीकृता न विश्वास्यत्वेन स्वीकृता। गणिकात्मजाया इव पृथिवीसुतायाः कथं चरित्रदोषः स्यात् इत्यमविचार्य्यैव परित्यागात् मां प्रत्यपि अविश्वासो निहित इति भावः। जनको राजर्षिरपि न प्रमाणकृतः विशुद्धत्वेन स्वीकृतः, विशुद्धस्य पितुः कन्या न खलु चरित्रदोषमर्हति चरित्र-दोषस्य आकरदृष्टान्तानुसारित्वादित्यगणयित्वा निर्वासनात् जनकोऽप्यवमानित इति तदपि महानुचितमिति भावः। अग्निरपि न प्रमाणीकृतः न सत्यवादित्वेन अङ्गीकृतः, लङ्काया-मग्निपरीक्षाकाले भगवानग्निदेवः सीता परमसच्चरित्रेति सर्वसमक्षमभिहितवान् किन्तु तच्चरित्रदोषेणैव निर्वासनात् अग्नेरपि मिथ्यावादित्वं सूचितमिति तदपि महदयुक्त-मिति भावः। अनुवृत्तिः विवाहसमयात् प्रभृति आनुगत्यमपि न प्रमाणीकृता निर्द्दोषतायाः कारणत्वेन न स्वीकृता। दुश्चरित्रा ईदृशमानुगत्यं कर्त्तुं कथमपि नार्हतीत्यविचार्य्यैव कृतं निर्वासनमेकान्तमसङ्गतमिति भावः। सन्ततिरपि न प्रमाणीकृता अपत्यमपि नापेक्षितम्। गर्भवत्या निर्वासितायाः मरणावश्यम्भावेन तत् सन्ताननाशावश्यम्भावात् वंशलोपकारणं निर्वासनं स्वयमेव कृतमित्यतो जगत्यां किमनुचितमस्तीति भावः।

अत्र एकया प्रमाणीकृतक्रियया पाण्यादीनामनेकेषां कर्म्मतयाभिसम्बन्धात् तुल्ययोगिता-लङ्कारः, सीतानिर्वासनस्यानुचितत्वं प्रति बहुकारणनिर्द्देशात् समुच्चयश्चेत्यनयोरङ्गाङ्गि-भावेन सङ्करः ॥५॥

---

বাল্যকালে বালক অবস্থায় কৃত পাণিপীড়নের অপেক্ষা করিলেন না; আমাকে না, জনককে না, অগ্নিকে না, আনুগত্যকে না এবং সন্তানেরও না ॥৫॥ (ক)

पृथिवी। आः! कस्तवार्य्यपुत्रः? (ख)

सीता। (सलज्जास्रम्) जहा वा अम्वा भणादि (ग)।

रामः। अम्ब! पृथ्वि! ईदृशोऽस्मि (घ)।

भागी। प्रसीद (१) भगवति! वसुन्धरे! शरीरमसि संसारस्य; तत् किमसंविदानेव जामात्रे कुप्यसि (ङ)।

---

(क) हा आर्य्यपुत्रं स्मारितास्मि।

(ग) यथा वा अम्बा भणति।

---

(क) सीतेति। स्मारिता रामभद्रस्येत्युच्चारयन्त्या जनन्या पृथिव्येति शेषः।

(ख) पृथिवीति। आ इति कोपसूचकमव्ययम्। तव आर्य्यपुत्रः कः अपि तु कोऽपि नेत्यर्थः। रामो यदि तवार्य्यपुत्रोऽभविष्यत् तदा कथमपि न निरपराधां त्वां निरवासयिष्यदिति भावः।

(ग) सीतेति। वा अथवा। अम्बा माता यथा भणति ब्रवीति, तथैव भवतु इति तात्पर्य्यम्। नियतेरेवात्र कारणत्वात् न खलु स्वयमहमार्य्यपुत्रं निन्दामीति भावः।

(घ) राम इति। ईदृशः सीताया आर्य्यपुत्रपदायोग्यः। नितान्तनृशंसकार्य्य-करणादिति भावः।

(ङ) भागीति। प्रसीद रामं प्रतीति शेषः। संसारस्य जगतः शरीरं देहरूपा, स्वकीयत्वात् स्वकीया तनुरिव सर्वेषां सकलत्वात् त्वमवगच्छसीत्यर्थः। तत्तस्मात् किं कथम् असंविदानेव अजानतीव जामात्रे, रामाय कुप्यसि। नैतदुचितमिति भावः।

---

(क) সীতা। হায়! আর্য্যপুত্রকে স্মরণ করাইয়া দিয়াছেন।

(খ) পৃথিবী। আঃ! তোমার আর্য্যপুত্র কে?

(গ) সীতা। (লজ্জা ও অশ্রুপাতের সহিত) অথবা মা যেমন বলেন।

(ঘ) রাম। মাতঃ! পৃথিবি! আমি এইরূপই বটি।

---

(१) प्रसीदेति पाठः क्वापि नास्ति।

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु।
इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीयः
कृत्स्नो लोकस्तदतिगहनं (१) किं स वत्सः करोतु ॥६॥

असंविदानेति अकर्म्मकत्वात् "समो गम्यृच्छी"त्यादिना आत्मनेपदम्। जामात्र इति "यं प्रति च कोपः" इति सम्प्रदानत्वाच्चतुर्थी।

पृथिव्याः सर्वज्ञत्वात्साभिज्ञत्वमुक्तं महाभारते—

"आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥"

ननु रामेणापि कथमिदमतीवायुक्तमनुष्ठितमित्याह घोरमिति। लोके भुवने घोरं दुःसहत्वात् दारुणम् अयशो यशोविरोधिनी निन्देत्यर्थः विततं विस्तीर्णम्। अथ अग्निपरीक्षया प्रतीतायामपि चरित्रशुद्धौ कथं निन्देत्याह लङ्केत्यादि। लङ्काद्वीपे सर्वतः समुद्रवेष्टितायां लङ्कायां वह्नौ या च विशुद्धिः निर्द्दोषपरीक्षा आसीदिति शेषः, इह भारतवर्षे जनो लोकः कथमिव तां विशुद्धिं श्रद्दधातु विश्वसितु। प्रत्यक्षगोचरमप्यद्भुतवृत्तान्तं लोकः सन्दिग्धे, दूरवर्त्तिनन्तु कथमपि न विश्वसित्येवेति भावः। ननु अलीकलोकनिन्दया किमायाति याति वा, ततः कथमीदृशमनुष्ठितमित्याह इक्ष्वाकूणामिति। यत् कृत्स्नो लोकः सर्वाः प्रजाः समाराधनीयः अनुकूलव्यवहारादिना सम्यक् तोषणीयः, तत् प्रजानां विरागापसारणेन सन्तोषोत्पादनम् अतिगहनं नितान्तदुष्करं कर्म्म एकस्य व्यवहारेण सर्वेषां सन्तोषोत्पत्तेः प्रायेणासम्भवात् इति भावः। इदम् इक्ष्वाकूणाम् इक्ष्वाकुवंशोद्भवानां जनानां सन्तोषोत्पादनरूपं दुष्करं कर्म्म कुलधनं धनमिव सर्वथा रक्षणीयमिति कौलिकं व्रतमित्यर्थः। ननु तथात्वेऽपि सीतापरित्यागस्य किं प्रयोजन-

(৬) গঙ্গা। ভগবতি! পৃথিবি! আপনি প্রসন্ন হউন। আপনি জগৎসংসারের শরীর; অতএব অজ্ঞানা লোকের ন্যায় জামাতার প্রতি ক্রুদ্ধ হইতেছেন কেন?

(१) तदतिविषममिति पाठान्तरम्।

लक्ष्मणः। अव्याहतान्तःप्रकाशा हि देवता भूतेषु विशेषेण गङ्गा, तदेष ते प्रणामाञ्जलिः (१) (च)।

रामः। अम्ब! अनुवृत्तस्त्वया भगीरथगृहे प्रसादः (छ)।

मित्याह किमिति। स वत्सः स इदानीभूतो रामः किं करोतु सीतापरित्यागं विना किं कार्य्यं कुर्य्यात्। यामाश्रित्य समुत्पन्नया निन्दया जनानां विरागो जातः तदपसारणेनैव निन्दापगमात् विरागापगमेन सन्तोषः स्यादित्यभिप्रेत्यैव सीता निर्वासितेति भावः।

अत्र सीतानिर्वासनकार्य्यस्य एकस्मिन् लोकनिन्दारूपे कारणे सत्यपि लोकसन्तोष-करणीयतारूपकारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः।

मन्दाक्रान्ता वृत्तम् ॥६॥

(च) लक्ष्मण इति। हि यस्मात् देवताः देवजातयः भूतेषु प्राणिषु विषयेषु अव्याहतः केनचिदपि अनिवारितः, अन्तःप्रकाशः अन्तःकरणवृत्तेः प्रसारः अन्तर्यामित्वमिति यावत् यासां ताः, देवा हि अन्तर्यामितया सर्वेषामेव प्राणिनां सर्वं वृत्तान्तजातं जानन्तीत्यर्थः। विशेषेण आधिक्येन, गङ्गा अव्याहतान्तः प्रकाशेत्यर्थः सर्वदेवताभ्यः प्रकृष्टैश्वर्य्यशालित्वादिति भावः। तत्तस्मात् अस्मदादिभ्यो मनुष्येभ्यो देवानां प्राधान्यादित्यर्थः ते तुभ्यम् एष मया क्रियमाणः, प्रणामाय नमस्काराय अञ्जलिः हस्तयोः संयोगः। भक्त्यतिशयात् त्वां प्रणमामीत्यर्थः।

জগতে ভয়ঙ্কর অযশ বিস্তৃত হইয়া পড়িয়াছিল ; তা'র পর, লঙ্কাদ্বীপে যে অগ্নিতে নির্দ্দোষিতার প্রমাণ হইয়াছিল, এই ভারতবর্ষের লোক তাহা বিশ্বাস করিবে কি প্রকারে ? তা'র পর, ইক্ষ্বাকুবংশীয়দিগের ইহাই কৌলিক নিয়ম যে, সকল লোককে (প্রজাকে) সন্তুষ্ট রাখিতে হইবে ; তাহা কিন্তু অত্যন্ত দুষ্কর ; এ অবস্থায় বৎস রামভদ্র আর কি করিবেন ? ॥৬॥

(চ) লক্ষ্মণ। প্রাণিগণের বিষয়ে দেবতাদের অন্তর্যামিত্ব অব্যাহত ; বিশেষতঃ গঙ্গার ; অতএব আপনার (গঙ্গার) উদ্দেশে এই প্রণামার্থ অঞ্জলি বন্ধন করিলাম।

---

(१) तदेष ते प्रणामाञ्जलिरिति पाठभेदः।

पृथ्वी। देवि! नित्यं प्रसन्नास्मि वः, किन्त्वापातदुःसहः शोकावेगोऽपत्यस्य ; तेनैवं (१) ब्रवीमि, न पुनर्न जानामि सीतास्नेहं रामभद्रस्य (ज)।

दह्यमानेन मनसा दैवाद्दत्तां विहाय सः।
लोकोत्तरेण सत्त्वेन (२) प्रजापुण्यैश्च जीवति ॥७॥

(छ) राम इति। अम्ब! मातः! त्वया भगीरथगृहे भगीरथवंशं प्रतीत्यर्थः प्रसादः अनुग्रहः अनुवृत्तः अधिकृतः, भगीरथात् प्रभृति मां यावत् अविच्छिन्नभावेन कृत इत्यर्थः। अन्यथा अस्माकं परोक्षे मां प्रति रोषकलुषिता पृथिवी कथं प्रसादयेरिति भावः।

(ज) पृथ्वीति। वो युष्माकं सम्बन्धे युष्मत्पक्षीयान् रामादीन् प्रतीत्यर्थः। तर्हि कथम् "भाः कस्तवार्य्यपुत्रः" इत्थं ब्रवीषीत्याह किन्त्विति। अपत्यस्य सन्तानस्य शोकावेगः आपातदुःसहः, परन्तु कार्य्यकारणादिविवेचनेन स्वयमेव सान्त्वनोदयात् सहनीयः स्यादिति भावः। पुनः किन्तु रामभद्रस्य सीतास्नेहं सीतां प्रति प्रणयं न जानामि इति न अपि तु जानाम्येवेत्यर्थः।

कीदृग्जानासीत्याह दह्यमानेनेति। दैवात् नियतिवशात् दत्तां सीतां विहाय निर्वास्य दह्यमानेन तदीयवियोगदुःखैः सन्तप्यमानेन मनसा उपलक्षितः स रामः लोकोत्तरेण सर्वलोकश्रेष्ठेन सत्त्वेन व्यवसायेन धैर्य्येणेति यावत् प्रजापुण्यैः सर्वगुणसम्पन्ननरपतिलाभहेतुभूतैः प्राक्तनैः प्रजानां धर्म्मैश्च जीवति प्राणान् धारयति। अन्यथा दारुणसीताशोकेन तस्य प्राणधारणमसम्भवमेव स्यादित्येव जानामीति भावः।

(ছ) রাম। মা! আপনি ভগীরথের ঘরে অনুগ্রহ অনুবর্ত্তন করিয়া আনিতেছেন।

(জ) পৃথিবী। দেবি! আমি আপনাদের প্রতি সর্ব্বদাই প্রসন্ন আছি ; কিন্তু সন্তানের শোক আপাততঃ দুঃসহ হয়, সেই জন্য এইরূপ বলিলাম ; কিন্তু আমি সীতার প্রতি রামভদ্রের স্নেহ যে জানি না, এমন নহে।

(१) किन्त्वापातदुःसहस्नेहावेगेनैवमिति क्वापि पाठः। (२) धैर्य्येणेति पाठभेदः।

रामः। सकरुणा हि गुरवो गर्भरूपेषु (झ)।

सीता। (रुदती कृताञ्जलिः) णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा (ञ)।

रामः। किमन्यद्ब्रवीतु (ट)।

भागी। शान्तम्, अविलीना वत्सरसहस्राणि भूयाः (ठ)।

(ञ) नयतु मामात्मनोऽङ्गेषु विलयमम्बा।

---

अत्र कारणभूतानि पुण्यानि प्रजासु, तत्कार्य्यभूतं जीवनञ्च रामे, इत्थं कार्य्यकारणयोर्भिन्नदेशवर्त्तित्वात् असङ्गतिरलङ्कारः ॥७॥

(झ) राम इति। गुरवः श्वश्रूश्वशुरादयो गुरुजनाः गर्भरूपेषु सन्तानभूतेषु जामात्रादिषु सकरुणा हि अपराधे सत्यपि सदया एव। अन्यथा आत्मजायाः सीतायाः निर्वासनेन पृथिवी देवी शापादिना मम कञ्चिदपि अनर्थमकार्षीत् इति भावः।

(ञ) सीतेति। आत्मनोऽङ्गेषु मृन्मयस्वकीयदेहावयवेषु विलयं नयतु लोपं प्रापयतु।

(ट) राम इति। अन्यत् उक्तवचनं विना। गभीरविषादे निस्तारोपायाभावे सर्वेषां मरणेच्छाया एव बलवत्त्वात् युक्तमेवोक्तमिति भावः।

(ठ) भागीति। शान्तमिति वारणार्थमव्ययमिति शब्दकल्पद्रुमः। उक्तप्रकारं न वाच्यमित्यर्थः। बहूनि वत्सराणां सहस्राणि व्याप्य अविलीना अविलुप्ता जीवितेत्यर्थः।

দৈববশতঃ বৎসা সীতাকে পরিত্যাগ করিয়া, শোকসন্তপ্তচিত্ত রামভদ্র স্বকীয় অলৌকিক ধৈর্য্যে এবং প্রজার পুণ্যে জীবন ধারণ করিতেছেন ॥৭॥

(ঝ) রাম। গুরুজনগণ সন্তানস্বরূপ ব্যক্তিদের প্রতি সদয়ই থাকেন।

(ঞ) সীতা। (রোদন করিতে করিতে কৃতাঞ্জলি হইয়া) মা আমাকে নিজের অঙ্গে বিলীন করুন।

(ট) রাম। আর বলিবেন কি ?

(ঠ) গঙ্গা। থাক্; তুমি সহস্র বৎসর পর্য্যন্ত অবিলীন থাক।

पृथ्वी। वत्से! अवेक्खणीयौ (१) ते पुत्तकौ (ड)।

सीता। अणाधाह्मि (२) (ढ)।

रामः। हृदय! वज्रमयमसि (ण)।

भागी। कथं त्वं सनाथाप्यनाथा (त)।

सीता। कीदिसं मम अभव्वाए सणाधत्तणं (३) (थ)।

---

(ढ) अनाथास्मि।

(थ) कीदृशं ममाभव्यायाः सनाथत्वम्।

(ड) पृथ्वीति। अवेक्षणीयौ स्तन्यदानतत्त्वावधानादिना पर्य्यवेक्षणेन रक्षणीया-वित्यर्थः। अनयोर्जीवनार्थमेव तव जीवनमावश्यकमिति भावः।

(ढ) सीतेति। अनाथा अशरणा। रक्षकहीनया मया कथं पुत्रौ रक्षितुं शक्येते इति भावः।

(ण) राम इति। वज्रमयं वज्रवत् कठिनमित्यर्थः। येन सार्वभौमस्य ममैव महिष्याः रक्षकहीनतावचनश्रवणेनापि त्वं न विदीर्णमिति भावः।

(त) भागीति। नाथेन पत्या सह वर्त्तमाना जीवतपतिकेत्यर्थः तथापि कथम् अनाथा रक्षकहीना। पतिस्ते जीवति, स एव च त्वां रक्षिष्यतीति भावः।

(थ) सीतेति। अभव्यायाः अशुभास्पदीभूतायाः, भीषणकलङ्केन तन्मूलक-निर्वासनेन च दुर्गतेः परां काष्ठां प्राप्तायाः इत्यर्थः। सनाथत्वं रक्षकसमेतत्वम्। रक्षकेण पत्यैवाहं परित्यक्ता, तेन च कुतो मे रक्षक इति भावः।

(ড) পৃথিবী। বৎসে! পুত্র দুইটিকে তোমার পর্য্যবেক্ষণ করিতে হইবে।

(ঢ) সীতা। আমি যে অনাথা।

(ণ) রাম। হৃদয়! তুমি বজ্রময় হইয়াছ।

(ত) গঙ্গা। তুমি সনাথা হইয়াও অনাথা হইবে কেন।

---

(१) अपि रक्षणीयौ इति पाठान्तरम्। (२) किं एदेहिं इति क्वापि अधिकः पाठः।

(३) मन्दभागिन्या इति पाठभेदः।

देव्यौ। जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।
आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते ॥८॥

लक्ष्मणः। आर्य्य! श्रूयताम् (१) (द)।

रामः। शृणोतु लोकः (ध)।

---

जगदिति। हे सीते! त्वं जगन्मङ्गलं जगतां कल्याणकारणीभूतम् आत्मानं स्वां कथं केन हेतुना अवमन्यसे अमङ्गलास्पदत्वेन अपवित्रत्वात् "अनाथास्मि अभव्याया मम" इत्यादिना परिभवसि निन्दसीत्यर्थः। यस्मात्तव सङ्गात् संसर्गात् आवयोरपि अन्यत्र का कथा पावनत्वेन प्रसिद्धयोः पृथिवीगङ्गयोरपि पवित्रत्वं पावनत्वं प्रकृष्यते उत्कर्षं प्राप्नोति। तेन च पातिव्रात्येन जगति त्वं सर्वप्रधानपवित्रासीति नात्मावमाननीय इति भावः।

अत्र पृथिवीगङ्गयोः पवित्रत्वप्रकर्षासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः।

पतिव्रतायाः पवित्रत्वमुक्तं ब्रह्मवैवर्त्ते—

"पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि।
तेजश्च सर्वदेवानां मुनीनाञ्च सतीषु च॥" ॥८॥

(द) लक्ष्मण इति। श्रूयतां पृथिवीगङ्गयोर्वाक्यमिति शेषः। अनेन वाक्येन आर्य्या सीतादेवी कीदृशी पतिव्रता पवित्रा चेत्यवधार्य्यतामिति भावः।

(ध) राम इति। लोकः सर्वे जनाः। जातावेकवचनम्। मया तु परिणय-समयात् प्रभृत्येव सीतायाः पातिव्रात्यं पावनत्वञ्च सम्यगवधारितं विश्वस्तञ्च, इदानीं पृथिवी-गङ्गयोर्वाक्येन किमधिकमवधार्य्यते, ये पुनर्लङ्कावासेन सीतायाश्चरित्रं सन्दिहाना

(থ) সীতা। দুর্ভাগ্যা আমি ; সুতরাং সনাথতা কি রকম।

গঙ্গা ও পৃথিবী। তুমি জগতের মঙ্গলকর আত্মাকে অবজ্ঞা করিতেছ কেন। যাহার সংসর্গে আমাদেরও পবিত্রতা বৃদ্ধি পাইতেছে ॥৮॥

(দ) লক্ষ্মণ। আর্য্য ! শুনুন।

(ধ) রাম। লোকে শুনুক।

(१) श्रुतमिति पाठान्तरम्।

(नेपथ्ये कलकलः।)

रामः। अद्भुततरं किमपि (न)।

सीता। किं त्ति अन्तरिक्खं (१) पज्जलदि (प)।

देव्यौ। ज्ञातम् (फ)।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः।
आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥८॥

(प) किमिति अन्तरिक्षं प्रज्वलति।

नानाविधमपवादमकल्पयन् त एव लोकाः पृथिवीगङ्गयोर्वचनमिदं शृण्वन्तु श्रुत्वा च सीताचरित्रनैर्मल्यमवधारयन्त्विति भावः।

(न) राम इति। अद्भुततरम् इतोऽपि आश्चर्य्यतरम्, किमपि घटनाद्यनं भवेदिति भावः।

(प) सीतेति। अन्तरिक्षम् आकाशं प्रज्वलति प्रदीप्यते।

(फ) देव्याविति। ज्ञातम् आकाशप्रदीप्तेः कारणमिति शेषः।

कृशाश्व इति। कृशाश्वो मुनिः कौशिकी विश्वामित्रः, राम इति इत्थं येषां शस्त्राणां गुरुक्रमः उपदेष्टृपरम्परा, कृशाश्वात् विश्वामित्रः तस्माच्च रामो यानि शस्त्राणि लब्धवानित्यर्थः, तान्येव शस्त्राणि जृम्भकैरस्त्रैः सह आविर्भवन्ति प्रकाशन्ते। तेनान्तरिक्षं प्रज्वलितमिति भावः ॥८॥

(নেপথ্যে কোলাহল।)

(ন) রাম। কোনও বিশেষ আশ্চর্য্য হইবে।

(প) সীতা। আকাশ জ্বলিয়া উঠিল কেন?

(ফ) গঙ্গা ও পৃথিবী। বুঝিয়াছি।

প্রথমে কৃশাশ্ব, তাহার পর বিশ্বামিত্র এবং তৎপর রাম; এই যাহাদের উপদেশকের ক্রম, জৃম্ভকের সহিত সেই সকল অস্ত্র আবির্ভূত হইতেছে ॥৮॥

---

(१) समलं अतनरिक्खं इति क्वापि पाठः।

नेपथ्ये । देवि ! सीते ! नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते।
आलेख्यदर्शने देवो यदाह (१) रघुनन्दनः ॥१०॥

सीता । दिट्ठिआ अत्थदेअदाओ परिप्फुरन्ति (ब) ।

लक्ष्मणः । उक्तमासीदार्य्येण सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति (भ) ।

(ब) दिष्ट्या अस्त्रदेवताः परिस्फुरन्ति ।

देवीति । हे सीते देवि ! ते तुभ्यं नमः अस्माकं प्रणामोऽस्तु । हि यस्मात् ते तव पुत्रकौ नवजातौ सुतौ नोऽस्माकं गतिराश्रयः, प्रभुमातृत्वादेव त्वां प्रणमाम इति भावः। मम पुत्रौ कथं युष्माकमाश्रयीभूतावित्याह देवो रघुनन्दनो रामः आलेख्यदर्शने चित्रदर्शनवेलायां यत् आह ब्रवीति वदति स्मेत्यर्थः । तस्मादेव वयं तव पुत्रौ आश्रयाम इति भावः ।

अत्र वर्त्तमानकाले निपातनसिद्धस्य आहेत्यस्य अतीते प्रयोगात् च्युतसंस्कारतादोषः, "यदाह स्म रघूद्वहः" इति पाठे तु तद्दोषाभावः ।

"भवन्तः परमाश्रय" इत्यादिवदुभयोर्मिलितयोरेव समानाश्रयत्वप्रतिपादनार्थं गतिरित्येकवचनम् ॥१०॥

(ब) सीतेति । दिष्ट्या पुत्रयोर्मम च सौभाग्येन अस्त्रदेवताः जृम्भकास्त्राणामधिष्ठात्र्यो देवताः परिस्फुरन्ति प्रकाशन्ते ।

(भ) लक्ष्मण इति । आर्य्येण पूज्येन भवता, इति इत्यन्तम्, उक्तं चित्रदर्शनवेलायामित्यर्थः ।

নেপথ্যে। দেবি! সীতে! আপনাকে নমস্কার ; আপনার পুত্রদ্বয়ই আমাদের গতি। যেহেতু, চিত্রদর্শনের সময় রাজা রামচন্দ্র উহাই বলিয়াছিলেন ॥১০॥

(ব) সীতা। ভাগ্যবশতঃ অস্ত্রদেবতারা প্রকাশ পাইয়াছেন।

---

(१) यथाहेति पाठान्तरम् ।

राम; (१)। नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात्।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥११॥
क्षुभिताः कामपि दशां कुर्वन्ति मम साम्प्रतम्।
विस्मयानन्दसन्दर्भजर्ज्जराः करुणोर्म्मयः ॥१२॥

मम इति। परमास्त्रेभ्यः उत्कृष्टजृम्भकास्त्रदेवताभ्यः वो युष्मभ्यं नमः, कथमयं नमस्कार इत्याह वयं वो युष्माकं परिग्रहात् लाभात् धन्याः कृतार्थाः जगत्यामजेयत्वेन प्रथिता इत्यर्थः स्मः जाताः। अनुध्यातैः मत्पुत्राभ्यां स्मृतैः सद्भिर्भवद्भिः वत्सयोर्मम पुत्रयोरुपेतव्यं सन्निधातव्यम्। वो युष्माकं भद्रं मङ्गलम् अस्तु ॥११॥

क्षुभिता इति। साम्प्रतम् अधुना विस्मयानन्दयोः सन्दर्भेण आश्चर्य्यहर्षयोः ग्रथनेन संयोगेनेत्यर्थः जर्ज्जराः कणशः कृताः क्षुभिता उद्वेलिताः करुणोर्म्मयः सीताशोकतरङ्गा मम कामपि अनिर्वचनीयां दशाम् अवस्थां कुर्वन्ति। पृथिवीगर्भ्भयोरनुग्रहलाभरूपालौकिकवृत्तान्तविलोकनात् विस्मयेन, पुत्रजन्मनिबन्धनेन हर्षेण, प्रियतमावियोगजन्मना रङ्गदर्शनात् नवीभावमापन्नेन शोकेन च अहमिदानीमात्मनि विमूढोऽस्मीति सरलार्थः।

अत्र अङ्गुतो रसः हर्षाख्यभावश्च करुणरसस्याङ्गमिति रसवदलङ्कारः। ऊर्म्मिशब्देन करुणस्य सागरतुल्यमगाधत्वं व्यज्यते ॥१२॥

(ভ) লক্ষ্মণ। আর্য্য বলিয়াছিলেন যে, "নিশ্চয়ই তোমার পুত্রের নিকট উপস্থিত হইবে।"

রাম। আপনারা পরমাস্ত্র ; তাই আপনাদিগকে নমস্কার। আপনাদিগকে গ্রহণ করিয়া আমি ধন্য হইয়াছি। স্মরণ করিবামাত্র আপনারা বৎসদের নিকট উপস্থিত হইবেন। আপনাদের মঙ্গল হউক ॥১১॥

উদ্বেলিত শোকের তরঙ্গ, বিস্ময় ও আনন্দের সংযোগে বিন্দু বিন্দু হইয়া, বর্ত্তমানে আমার কোন অনির্ব্বচনীয় অবস্থা জন্মাইয়াছে ॥১২॥

---

(१) देव्यानिति क्वापि पाठः।

देव्यौ। मोदस्व वत्से। मोदस्व, (१) रामभद्रतुल्याविदानीं ते पुत्रकौ संवृत्तौ (म)।

सीता। भअवदीओ! को एदाणं क्खत्तिओचिदं कम्म करिस्सदित्ति (य)।

रामः। एषा (२) वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी।
कष्टं सीतापि सुतयोः संस्कर्त्तारं न विन्दति॥१३॥

(य) भगवत्यौ! क एतयोः क्षत्रियोचितं कर्म्म करिष्यतीति।

(म) देव्याविति। मोदस्व आनन्दिता भव, हर्षे द्विरुक्तिः। हर्षकारणमाह रामभद्रतुल्याविति। जृम्भकास्त्रलाभात् रामभद्रसमानसामर्थ्यावित्यर्थः।

(य) सीतेति। क्षत्रियोचितं क्षत्रियवर्णयोग्यम्, कर्म्म जातकर्म्मादिसंस्कारम्।

एषेति। वशिष्ठेन ब्रह्मर्षिणा गुप्तानां संस्कारकर्म्मणा वीजगर्भसमुद्भवपापेभ्यः शान्तिविधानेन दैवोपप्लवेभ्यश्च रक्षितानां रघूणां रघुवंश्यानां वंशवर्द्धिनी पुत्रप्रसवेन कुलवृद्धिकारिणी एषा सीतापि सुतयोः पुत्रयोः संस्कर्त्तारं जातकर्म्मादिसंस्काराणां सम्पादयितारं जनं न विन्दति न प्राप्नोति, एतदेव कष्टम्। रघुवंशीयानां सकल-दैवकर्म्मसम्पादयितरि सति वशिष्ठे सीतासुतयोः संस्कर्त्तुरभाव इति दारुणं दशा-परिवृत्तिरिति भावः।

अत्र कष्टमिति वाक्यस्य एषेत्यादिवाक्यान्तर्गतत्वेऽपि न गर्भितत्वदोषः तादृशसमावेशेन विषादातिशयद्योतनात् "गर्भितत्वं गुणः क्वापी"ति साहित्यदर्पणोक्तेः॥१३॥

(ম) গঙ্গা ও পৃথিবী। আনন্দিতা হও, বৎসে! আনন্দিতা হও। তোমার পুত্র দুইটি এখন রামচন্দ্রের তুল্য হইল।

(য) সীতা। হে ভগবতীদ্বয়! কে ইহাদের ক্ষত্রিয়োচিত কার্য্য করিবে?

রাম। বশিষ্ঠরক্ষিত রঘুকুলের বংশবর্দ্ধিনী সীতাও পুত্রদ্বয়ের সংস্কার কারক লোককে পাইতেছেন না; হায় কি কষ্ট! ।১৩॥

(१) रमस्व वत्से! मन्यस्व वत्से इति पाठभेदौ। (२) एषामिति क्वापि पाठः।

देव्यौ (१)। पुत्रि! किं तवानया चिन्तया, एतौ हि वत्सौ स्तन्यत्यागात् परेण भगवतो वाल्मीकेरर्पयिष्याव:, (२) स एवैतयो: क्षत्रकृत्यं करिष्यति (र)।

यथा वशिष्ठाङ्गिरसावृषी प्राचेतसस्तथा।
रघूणां जनकानाञ्च वंशयोरुभयोर्गुरु: ॥१४॥

राम:। सुविचिन्तितं भगवतीभ्याम् (३) (ल)।

---

(र) देव्याविति। हि यस्मात्। स्तने भवं स्तन्यं दुग्धं तस्य त्यागात् स्तनपानत्यागादिति तात्पर्य्यम्। वाल्मीके: समीपे। क्षत्रकृत्यं गौणकाले क्षत्रियोचितं जातकर्म्मादिसंस्कारं कर्म्मेत्यर्थ:।

ननु वशिष्ठसदृश: कोऽपि गुरुत्वे कृत: महाप्रभावो महर्षिश्चेत् संस्कारं कुर्य्यात् तदेव युक्तं भवेदित्याह यथेति। वशिष्ठ: ब्रह्मपुत्र: आङ्गिरस: शतानन्दश्चेति वशिष्ठाङ्गिरसौ ऋषी यथा, यथाक्रमेण रघूणां जनकानाञ्च गुरु, तथा प्राचेतसो वाल्मीकिरपि तयोरुभयोर्वंशयो: गुरु: मन्त्रोपदेष्टा। अतएव वाल्मीकेरौदासीन्यं वशिष्ठादपकृष्टत्वञ्च न शङ्कनीयमिति भाव: ॥१४॥

(ल) राम इति। भगवतीभ्यां पृथिवीगङ्गाभ्यां सुविचिन्तितं सम्यग्विवेचनं कृतम्।

---

(র) গঙ্গা ও পৃথিবী। কন্যে! তোমার এ চিন্তার প্রয়োজন কি? কারণ, স্তন্য দুগ্ধ পরিত্যাগের পর এই বৎস দুইটিকে ভগবান্ বাল্মীকির নিকটে সমর্পণ করিব, তিনিই ইহাদের ক্ষত্রিয়োচিত সংস্কারকার্য্য করিবেন। (কারণ,)

বশিষ্ঠ ও শতানন্দ ঋষি যেমন রঘু ও জনক এই উভয় বংশের গুরু; বাল্মীকি ঋষিও তেমন ঐ উভয় বংশের গুরু ॥১৪॥

(ল) রাম। ভগবতী গঙ্গা ও পৃথিবী ভাল বিবেচনা করিয়াছেন।

(१) भागीति क्वचित् पाठो दृश्यते। (२) अर्पयिष्यामीति पाठान्तरम्।

(३) भगवत्येति पाठान्तरम्।

लक्ष्मणः। आर्य्य! सत्यं विज्ञापयामि, तैस्तैरुपायैर्वत्सौ कुशलवावुत्प्रेक्षे (व)।

एतौ हि जन्मसिद्धास्त्रावुभौ प्राचेतसान्मुनेः (१)।
वीरौ सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दिकौ ॥१५॥

रामः। वत्स! इत्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि (२) (श)।

पृथिवी। एहि वत्से! पवित्रीकुरु रसातलम् (ष)।

(व) लक्ष्मण इति। तैस्तैरुपायैर्हेतुभिः। उत्प्रेक्षे सीतापुत्रत्वेनानुमिनोमि। तत्रानुमानहेतूनाह एताविति। हि यस्मात्। एतौ उभौ कुशलवौ जन्मनः उत्पत्तेः प्रभृति सिद्धानि उपस्थितानि अस्त्राणि जृम्भकास्त्राणि ययोस्तौ, सीतासुतयोरपि जन्मकाल एव जृम्भकास्त्रलाभ इदानीमेवावगत इति भावः। प्राचेतसात् वाल्मीकेर्मुनेः सकाशात् सम्प्राप्ताः संस्कारा जातकर्म्माद्युपनयनान्ता याभ्यां तौ, सीतापुत्रयोरपि सन्न्यत्यागात् परं संस्कारकर्म्मार्थं वाल्मीकिसमीपे समर्पणं श्रुतमिति भावः ॥१५॥

(श) राम इति। इत्येव अस्माद्धेतोरेव सीतापुत्रत्वेनानुमानादेवेत्यर्थः परिप्लवमानहृदयः आनन्देन चञ्चलचित्तः सन् प्रमुग्धः जड़ः।

(ব) লক্ষ্মণ। আর্য্য! আমি সত্যই জানিতেছি যে, সেই সেই রকমেই বৎস কুশ ও লবকে মনে করিতেছি। (কারণ,)

ইহারা দুই জনেই আজন্ম-সিদ্ধাস্ত্র এবং মহর্ষি বাল্মীকি হইতে সংস্কার লাভ করিয়াছে, বীর হইয়াছে এবং বয়সেও দ্বাদশ বৎসর হইয়াছে ॥১৫॥

(শ) রাম। বৎস! এই জন্যই আমার মন, আনন্দে চঞ্চল হইয়াছে; তাই আমি মুগ্ধ হইয়া পড়িয়াছি।

(१) जातौ प्राचेतसादिति, प्राप्तप्राचेतसावुभौ। आर्य्यतुल्याकृती वीरौ इति च पठान्तरम्। (२) इति परिप्लवमानहृदयः सन् मुग्धोऽस्मीति क्वापि पाठः।

राम:। हा प्रिये! लोकान्तरं गतासि। (स)

सीता। णेदु मं अत्तणो अङ्गेसु विलअं अम्बा, ण सक्कम्हि ईदिसं जीअलोअपरिवत्तं अणुभविदुं। (ह)

राम:। किमुत्तरं स्यात्। (क्ष)

पृथिवी। वत्से! स्तन्यत्यागं यावन्मन्नियोगतः पुत्रकयोरपेक्षस्व, परेण ते यथा रोचिष्यते (१) (क)।

---

(ह) नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न शक्नोमि ईदृशं जीवलोकपरिवर्त्तमनुभवितुम्।

---

(ष) पृथिवीति। रसातलं पातालं पवित्रीकुरु अनयोः स्तन्यत्यागं यावदवस्थानेन पुनीहि।

(स) राम इति। लोकान्तरं मर्त्यलोकभिन्नं लोकं पातालमित्यर्थः। जनन्यादेशस्य अवश्यपालनीयत्वेन सीतायाः पातालगमनावश्यम्भावात् गतेत्यतीतनिर्द्देशः हा इति विषादोक्तयेति बोध्यम्।

(ह) सीतेति। जीवलोकपरिवर्त्तम् अवस्थापरिवर्त्तनमित्यर्थः। रसातलं गत्वापि जीवन्त्या मया ईदृशमेव दुःखमनुभवितव्यम्, अतस्तत्र गमनान्मरणमेव मे श्रेय इति भावः।

(क्ष) राम इति। किमुत्तरम् अस्याः सीतोक्तेः पृथिव्याः किं प्रतिवचनं स्यादित्यर्थः पृथिवी अस्याः किमुत्तरं ददातीति श्रोतुं समाकुलोऽस्मीति भावः।

(क) पृथिवीति। पुत्रकयोः स्तन्यत्यागं यावत् स्तन्यपानपरित्यागपर्य्यन्तं मन्नियोगतः

---

(ষ) পৃথিবী। আইস বৎসে! পাতালকে পবিত্র কর।

(স) রাম। হা প্রিয়ে! তুমি লোকান্তরে গেলে!

(হ) সীতা। মা আমাকে নিজের অঙ্গে বিলীন করুন; আমি জীবলোকের এইরূপ পরিবর্ত্তন অনুভব করিতে পারিতেছি না।

(ক্ষ) রাম। ইহার কি উত্তর হইবে!

---

(१) यथा रोचते तथा करिष्यसीति पाठभेदः।

भागी (१)। एवं नाम (ख)।

( ततो निष्क्रान्ता गङ्गापृथ्वीसीताः।)

रामः। कथं विलय एव वैदेह्याः सम्पन्नः। हा देवि! दण्डकारण्यवासप्रियसखि! हा चारित्रदेवते! लोकान्तरं पर्य्यवसितासि। ( इति मुह्यति ) (ग)।

लक्ष्मणः। भगवन्! वाल्मीके! परित्रायस्व एष एव ते किं (२) काव्यार्थः (घ)।

ममादेशात् अपेक्षस्व विलम्बस्व। परेण स्तन्यत्यागात् परेण कालेन ते तुभ्यं यथा रोचिष्यते तथा करिष्यसीति शेषः। परेणेति तृतीयापवर्गे।

(ख) भागीति। एवं नाम भवत्विति शेषः। स्तन्यत्यागं यावदपेक्षस्वेत्यर्थः।

(ग) राम इति। कथमिति शोकसम्भ्रमे। वैदेह्याः सीताया विलयः अन्तर्धानं लोकान्तरे गमनमित्यर्थः। चरित्रमेव चारित्रं तेन पातिव्रात्याचारेणेत्यर्थः देवता इव तत्सम्बोधनम्। लोकान्तरं पातालं पर्य्यवसितासि गतासि। स्यतेर्गत्यर्थत्वात् कर्त्तरि क्तः।

(घ) लक्ष्मण इति। परित्रायस्व रामस्य जीवनसम्पादनेन अस्मान् रक्ष। एष मोहजननेन रामस्य जीवनविनाशः किं ते तव काव्यस्य दृश्यकाव्यस्य नाटकाभिनय-

(क) পৃথিবী। বৎসে! পুত্র দুইটির স্তন্যদুগ্ধ পরিত্যাগ পর্য্যন্ত তুমি অপেক্ষা কর; তাহার পরে তোমার যেমন রুচি হইবে ( তাহাই করিবে।)

(খ) গঙ্গা। ইহাই হউক।

( তাহার পর গঙ্গা, পৃথিবী ও সীতা চলিয়া গেলেন।)

(গ) রাম। বিদেহনন্দিনী লয়ই পাইয়া গেল! হা দেবি! দণ্ডকারণ্যবাসপ্রিয়সখি! হা সচ্চরিত্রের দেবতা! তুমি লোকান্তরে চলিয়া গেলে! ( এই বলিয়া মূর্চ্ছিত হইলেন।)

---

(१) भगवतीति पाठान्तरम्। (२) क्वचित् किंशब्दो नास्ति।

नेपथ्ये। अपनीयतामातोद्यकम्, भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्त्यामर्त्त्याः! पश्यत, महर्षिणा भगवता वाल्मीकिना अनुज्ञातं पवित्रमाश्चर्य्यम् (ङ)।

लक्ष्मणः। (विलोक्य) मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तञ्च देवर्षिभिरन्तरीक्षम्।
आश्चर्य्यमार्य्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥१६॥

---

स्येत्यर्थः अर्थः प्रयोजनम्। अभिनयेन रामस्य विनाश एव किं तवोद्दिश्यमासीदिति सरलार्थः। नैतदुचितमिति भावः।

(ङ) नेपथ्य इति। आतोद्यकं वीणादिचतुर्विधवाद्यम् (कन्सार्ट) अपनीयताम् अपसार्य्यताम् ऐक्यतानवादनं परित्यज्यतामित्यर्थः। अन्यथा सहस्रनानाविधमधुरनिनाद-श्रवणेन लोकानां हृदयाकर्षणेन उत्पत्स्यमानाश्चर्य्यदर्शनं व्याहन्येतेति भावः। जङ्गमा गमनशीलाः पश्वादयः स्थावराः स्थितिशीलाः पर्वताधिष्ठातृदेवतादयः तैः सह वर्त्तमाना इति सजङ्गमस्थावराः। प्राणभृतः प्राणिनः, मर्त्त्या विनश्वराः मनुष्यादयः अमर्त्त्या अमराः देवाः। पवित्रम् आश्चर्य्यञ्च किञ्चित् अनुज्ञातम् आदिष्टम्, तत् पश्यतेत्यन्वयः।

नेपथ्यात् सूत्रधारस्योक्तिरियम्। एष च सन्दर्भः विष्कम्भकवत् चूलिका नाम गर्भाङ्कस्यार्थोपक्षेपकविशेषः। तथा च साहित्यदर्पणः—

"अन्तर्यवनिकासंस्थैः सूचनार्थस्य चूलिका।"

वाल्मीकिना अनुज्ञातं तत् पवित्रमाश्चर्य्यञ्च समुत्पद्यमानं लक्ष्मणो विलोक्य प्रकटयति

---

(ঘ) লক্ষ্মণ। ভগবন্! বাল্মীকে! রক্ষা করুন; এই কি আপনার কাব্যের অর্থ।

(ঙ) নেপথ্যে। চতুর্বিধ বাদ্য ( কন্সার্ট ) থামাও। ওহে! ওহে! জঙ্গম ও স্থাবরগণের সহিত মর্ত্ত্যবাসী ও অমর্ত্ত্যবাসী প্রাণিগণ! তোমরা দেখ, মহর্ষি ভগবান্ বাল্মীকি পবিত্র অথ চ আশ্চর্য্য কোন বিষয় আদেশ করিয়াছেন।

(पुन) नेपथ्ये। अरुन्धति! जगद्वन्द्ये! गङ्गापृथ्व्यौ भजस्व (१) नौ।
अपितेयं तवाभ्यासे सीता पुण्यव्रता वधूः ॥१७॥

लक्ष्मणः। दिष्ट्या (२) आश्चर्य्यमाश्चर्य्यम्। आर्य्य! पश्य पश्य, कष्टमद्यापि नोच्छ्वसित्यार्य्यः (च)।

मन्थादिवेति। गङ्गाया इदमिति गाङ्गम् अम्भः जलं मन्थादिव मन्थानदण्डेन आलोड़नादिव क्षुभ्यति उच्छलति, देवाश्च ऋषयश्च तैः देवर्षिभिः अन्तरीक्षम् आकाशं व्याप्तम् आकीर्णम्। आश्चर्य्यदर्शनाय देवा ऋषयश्च गगने समागता इत्यर्थः। अहो आश्चर्य्यम्, आर्य्या सीता गङ्गामहीभ्यां भागीरथीपृथिवीभ्यां देवताभ्यां सह सलिलात् गङ्गाजलात् उदेति उत्तिष्ठति। महदिदमद्भुतमिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोतप्रेक्षालङ्कारः। क्षुभ्यति उदेतीति कर्त्तृप्रत्ययान्त-मुख्यक्रिययोर्मध्ये व्याप्तमिति कर्म्मप्रत्ययान्तगौणक्रियासन्निवेशात् भग्नप्रक्रमता दोषः, स च 'देवर्षिसङ्घश्च नभः समेती'ति पाठेन समाधेयः। इन्द्रवज्रा वृत्तम् ॥१६॥

अरुन्धतीति। हे जगद्वन्द्ये! पतिव्रताशिरोमणित्वेन जगतां पूजनीये अरुन्धति! नौ आवां गङ्गापृथ्व्यौ भागीरथीपृथिव्यौ भजस्व सेवस्व आवयोर्वचनानुसारेण क्रिया-निष्पादनात् सन्तोषयेत्यर्थः। इयं पुण्यं पवित्रं व्रतं शास्त्रविहितो नियम आचार इति यावत् यस्याः सा पुण्यव्रता वधूः सा एषा सीता तव अभ्यासे समीपे अर्पिता न्यस्ता यथावदस्या रक्षणावेक्षणाभ्यामावयोः सन्तोषः स्यादिति भावः ॥१७॥

লক্ষ্মণ। (দেখিয়া) গঙ্গার জল, মন্থনবশতই যেন উদ্বেলিত হইয়া উঠিয়াছে এবং দেবগণ ও ঋষিগণকর্তৃক আকাশমণ্ডল ব্যাপ্ত হইয়াছে; কি আশ্চর্য্য! গঙ্গা ও পৃথিবীদেবীর সহিত আর্য্যা সীতাদেবী, জল হইতে উঠিতেছেন ॥১৬॥

পুনরায় নেপথ্যে। জগৎপূজনীয়ে! অরুন্ধতি! আমি গঙ্গা, আর আমি পৃথিবী, আমাদিগকে আপ্যায়িত করুন। পবিত্রব্রতা বধূ এই সীতা-দেবীকে আপনার নিকটে সমর্পণ করিলাম ॥১৭॥

---

(१) वुषस्वेति क्वापि पाठः। (२) अहो इति पाठान्तरम्।

( ततः प्रविशत्यरुन्धती सीता च ।)

अरु। त्वरस्व वत्से ! वैदेहि ! मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥१८॥

सीता। (ससम्भ्रममुपसृत्य रामं स्पृशन्ती (१)।) समस्ससिदु अज्जउत्तो (छ)।

रामः। (समाश्वस्य सानन्दम्) भोः! किमेतत्। (दृष्ट्वा सहर्षाद्भुतम्) कथं देवी। (सलज्जस्मितम्) अये! अम्बा अरुन्धती, सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तासमेता गुरवः (ज)।

(छ) समाश्वसितु आर्य्यपुत्रः।

(च) लक्ष्मण इति। पश्य पश्येत्यत्रापि दर्शनाय रामस्य चेष्टामपश्यन् वदनं परावर्त्त्य मूर्च्छितं राममवलोकयन्नाह कष्टमित्यादि। उच्छ्वसिति संज्ञां लभते।

त्वरस्वेति। हे वत्से वैदेहि! त्वरस्व सत्वरा भव, शालीनशीलतां लज्जाशीलत्वं मुञ्च परित्यज, आसन्नविपदि लज्जाया अन्याय्यत्वादिति भावः। एहि आगच्छ प्रियस्पर्शेन पाणिना स्वकीयकरेण मे मम वत्सं स्नेहभाजनं रामं जीवय संज्ञापय।

"स्यादधृष्टे तु शालीन" इत्यमरः ॥१८॥

(চ) লক্ষ্মণ। ভাগ্যবশতঃ আশ্চর্য্য আশ্চর্য্য! আর্য্য! দেখুন দেখুন। হায় কষ্ট! আর্য্য এখনও সংজ্ঞালাভ করিতেছেন না।

তদনন্তর অরুন্ধতী ও সীতার প্রবেশ।

অরুন্ধতী। বৎসে! বিদেহনন্দিনি! সত্বর হও; লজ্জাশীলতা পরিত্যাগ কর। আইস, প্রিয়স্পর্শ স্বকীয় পাণিদ্বারা আমার বৎস রামভদ্রকে জীবিত কর ॥১৮॥

(ছ) সীতা। (সত্বর নিকটে যাইয়া, রামকে স্পর্শ করতঃ) আর্য্যপুত্র আশ্বস্ত হউন।

(१) ससम्भ्रमं स्पृशन्तीत्येतावन्मात्रः क्वचित् पाठः।

अरु। वत्स! एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा (झ)।

नेपथ्ये। जगत्पते! रामभद्र! स्मर्य्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनम्। यथा, सा त्वमम्ब! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव, तत्रानृणास्मि जाता (ञ)।

अरु। इयन्ते श्वश्रूर्भगवती वसुन्धरा (ट)।

(ञ) राम इति। कथं शब्दो हर्षे देवी सीता उपस्थितेति शेषः। प्रहृष्यन्तः आनन्दन्तः। गुरवः मातरः कौशल्यादयः उपस्थिता इति शेषः।

(झ) अरु इति। एषा अदूरे दृश्यमाना, भगीरथगृहदेवता भगीरथकुलोपास्या इति तात्पर्य्यं सुप्रसन्ना युष्मान् प्रत्यनुग्रहकारिणी।

(ञ) नेपथ्य इति। जगत्पते! पृथिवीपते। नारायणावतारत्वेन त्रिभुवनेश्वर इति च ध्वन्यते। आलेख्यदर्शने चित्रदर्शनवेलायाम्। आत्मनः स्वस्य अनायासेन रामस्य स्मरणाय तद्वचनमुद्धरति सा त्वमिति। अनृणा ऋणमुक्ता जगदीश्वरादेशाति-क्रमस्य अन्याय्यत्वात् सस्नानसीतापर्य्यवेक्षणेन प्रतिपालिततदादेशा इत्यर्थः। गङ्गाया उक्तिरियम्।

---

(জ) রাম। (আশ্বস্ত হইয়া আনন্দের সহিত) ওহে! এ কি! (দেখিয়া, আনন্দ ও আশ্চর্য্যের সহিত) সীতাদেবী যে! (লজ্জা ও ঈষৎ হাস্যের সহিত) মাতা অরুন্ধতী, ঋষ্যশৃঙ্গ ও শান্তার সহিত গুরুজনগণ যে আনন্দিত হইয়াছেন!

(ঝ) অরুন্ধতী। বৎস! ভগীরথের গৃহদেবতা এই ভগবতী গঙ্গা-দেবী অত্যন্ত প্রসন্না হইয়াছেন।

(ঞ) নেপথ্যে। জগদীশ্বর! রামভদ্র! চিত্রদর্শনের সময় আমার প্রতি নিজের বাক্য স্মরণ কর যে, "মা! পুত্রবধূ সীতার প্রতি সেই আপনি অরুন্ধতীর ন্যায় শুভানুধ্যানপরায়ণা হউক।" আমি সে বিষয়ে অনৃণা হইয়াছি।

नेपथ्ये । उक्ताश्च पूर्वमायुष्मता वत्सात्यागे (१) यथा, भगवति! वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति, तदधुना कृतवचनास्मि प्रभोर्वत्सस्येति (ठ)।

रामः। कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः, प्रणमामि वः (ड)।

अरु। भो भोः पौरजानपदाः! भगवतीभ्यां जाह्नवी-वसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता, पूर्वञ्च

---

(ट) अरु इति। श्वशुरस्य स्त्रीति श्वश्रूः।

(ठ) नेपथ्य इति। आयुष्मता दीर्घायुषा त्वया, वत्सायाः सीतायाः त्यागे परित्यागकाले। किमुक्तमित्याह भगवतीत्यादि। भूपतित्वात् प्रभोरधिपतेः, जामातृत्वात् वत्सस्य स्नेहास्पदस्य तव कृतवचना भूपतित्वे अनुष्ठितनिदेशा, जामातृत्वे पूरितप्रार्थनेत्यर्थः। पृथिव्या उक्तिरियम्।

(ड) राम इति। कथमिति सम्भावनायाम्। कृतः सीतानिर्वासनात्मको महापराधो येन स तथोक्तः। अनुकम्पितः अनुगृहीतः। अहो! गरीयसी निष्कारणा करुणेति भावः। वो युष्मान् गौरवात् बहुवचनम्। विसर्जनसूचनाय प्रणाम इति बोध्यम्।

---

(ট) অরুন্ধতী। ইনি তোমার শাশুড়ী পৃথিবী।

(ঠ) নেপথ্যে। পূর্ব্বে বৎসা সীতার পরিত্যাগের সময়, আয়ুষ্মান্ (আপনি) বলিয়াছিলেন যে, "ভগবতি! পৃথিবি! শ্লাঘ্যতনয়া সীতার পর্য্যবেক্ষণ করুন।" আপনি প্রভুও বটেন, বৎসও বটেন; তাই আপনার আদেশ এখন আমি পালন করিয়াছি।

(ড) রাম। হায়! আমি গুরুতর অপরাধ করিয়াছি; তথাপি ভগবতী গঙ্গা এবং পৃথিবী আমার প্রতি দয়া করিলেন! তা আপনাদিগকে নমস্কার।

---

(१) वत्सापरित्यागे इति क्वापि पाठः।

भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसम्भवा सीतादेवी परिगृह्यता-(१) मिति कथं भवन्तो मन्यन्ते (ढ)।

(ढ) अरु इति। जाह्नवीवसुन्धराभ्यां गङ्गापृथिवीभ्याम् एवम् "आवयोरपि यत् सङ्गात् पवित्रत्वं प्रकृष्यते" इत्येवंरूपेण प्रशस्यमाना महापवित्रत्वेन सतीशिरोमणित्वेन च स्तूयमाना अरुन्धत्या मम समीपे समर्पिता त्यक्ता। सीता यदि दुश्चरित्रा भवेत् तर्हि जाह्नव्या वसुन्धरया च कथमपि न प्रशस्येत, न वा ममान्तिके समर्प्येतेति भावः। मम अरुन्धत्या इत्यनेनात्मनोऽपि सतीश्रेष्ठत्वं व्यज्यते। अपि चेति चार्थः। पूर्वं रावणवधानन्तरम् लङ्कायामग्निप्रवेशे सति वैश्वानरेण अग्निदेवेन निर्णीतं निश्चितं निश्चित्य प्रख्यापितमित्यर्थः पुण्यं पवित्रं चारित्रं पतिव्रतात्वं यस्याः सा, तस्मिन्नेव च काले सब्रह्मकैः ब्रह्मणा सहितैः देवैरिन्द्रादिभिः संस्तुता पतिव्रताप्रधानत्वेन परिचिता अभ्यर्हिता वा आसीदित्यर्थः। सा सावित्रकुलवधूः सूर्य्यवंशीयस्नुषा देवयजनसम्भवा यज्ञभूमिसमुत्पन्ना एतेनापि नितान्तनिर्दोषत्वं व्यज्यते, सीतादेवी परिगृह्यतां रामेणेति शेषः, इति अस्मिन् विषये कथं भवन्तो मन्यन्ते भवतां किमभिमतं भवति। तदवगन्तु-मिच्छामीति भावः। ईदृश्याः सतीशिरोमणेः सीतायाः परिग्रहविषये साधारणप्रजानां सम्मतिजिज्ञासया तासां पूर्वकृतसीतापवादहेतुभूतदुष्टतायाः सुमहान् तिरस्कारो व्यज्यते।

(ঢ) অরুন্ধতী। ওহে ওহে পুরবাসিগণ! জনপদবাসিগণ! আমি অরুন্ধতী। ভগবতী গঙ্গা ও পৃথিবী, এইরূপ প্রশংসা করিয়া সীতাদেবীকে আমার নিকট সমর্পণ করিয়াছেন; পূর্ব্বেও ভগবান্ অগ্নি, ইঁহার পবিত্র চরিত্র নির্ণয় করিয়াছিলেন; ব্রহ্মার সহিত দেবগণও ইঁহার পরিচয় পাইয়াছেন; সুতরাং সূর্য্যবংশের বধূ এবং যজ্ঞভূমি হইতে সমুৎপন্ন সীতা-দেবীকে রামচন্দ্র পুনরায় গ্রহণ করুন, এ বিষয়ে আপনাদের মত কি?

---

(१) परिगृह्यत इति पाठान्तरम्।

लक्ष्मणः। एवमार्य्ययारुन्धत्या निर्भर्त्सिताः प्रजाः, कृत्स्नश्च भूतग्राम आर्य्यां नमस्करोति, लोकपालाश्च सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते (ग)।

अरु। जगत्पते! रामचन्द्र!

नियोजय यथाधर्म्मं प्रियां त्वं धर्म्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे ॥१८॥

---

(ग) लक्ष्मण इति। एवमनेन प्रकारेण सम्मतिजिज्ञासयेत्यर्थः। निर्भर्त्सिताः तिरस्कृताः। कृत्स्नः सकलः भूतग्रामः प्राणिसमूहश्च आर्य्यां सीतां नमस्करोति सतीशिरोमणित्वेनाङ्गीकारात् पूजयतीत्यर्थः। पूर्वं धृष्टतया सीताया अपवादविधानेन लज्जावशात् किमपि स्पष्टमभिधातुं नार्हतीति भावः। एतेन इदानीं सीतायाः पुनः परिग्रहे काचिदपि प्रजानामापत्तिर्नास्तीति व्यज्यते। लोकपाला इन्द्रादयो दिक्पालाः सप्तर्षयो मरीच्यादयः।

उपतिष्ठन्त इति "पद्यारााधनयोश्च"त्यात्मनेपदम्।

नियोजयेति। हे जगत्पते! रामचन्द्र! त्वं हिरण्मय्याः स्वर्णमय्याः प्रतिकृतेः प्रतिमायाः पुण्या पतिव्रताप्रधानत्वेन पवित्रा प्रकृतिः मूलभूता तां प्रियां दयितां सीताम् अध्वरे प्रक्रान्ताश्वमेधयज्ञे धर्म्मचारिणीं सहधर्म्मिणीं यथाधर्म्मं धर्म्ममनतिक्रम्य नियोजय संस्थापय। "मुख्यालाभे प्रतिनिधिः शास्त्रार्थः" इति न्यायात् मुख्यलाभे प्रतिनिधिविधानस्यान्याय्यत्वात् इमामेव सहधर्म्मिणीं कृत्वा अश्वमेधयज्ञं निष्पादयेति भावः। पुण्यप्रकृतिमित्यनेन सीतया सह अश्वमेधकरणे फलभूयस्त्वमपि व्यज्यते ॥१९॥

(গ) লক্ষ্মণ। আর্য্যা অরুন্ধতীকর্ত্তৃক এইরূপ তিরস্কৃত প্রজাগণ এবং সমস্ত প্রাণিগণ, আর্য্যা সীতাকে নমস্কার করিতেছেন এবং দিক্‌পালগণ ও সপ্তর্ষিগণ পুষ্পবৃষ্টিদ্বারা আরাধনা করিতেছেন।

অরুন্ধতী। জগদীশ্বর! রামচন্দ্র!

হিরণ্ময়ী প্রতিমূর্ত্তির পবিত্র প্রকৃতি সহধর্ম্মিণী প্রিয়তমা সীতাকে তুমি ধর্ম্মানুসারে যজ্ঞে নিযুক্ত কর ॥১৯॥

सीता। (स्वगतम्) जाणादि अज्जउत्तो सीदादुक्खं पमज्जिदुं (त)।

रामः। यथा भगवत्यादिशति (थ)।

लक्ष्मणः। कृतार्थोऽस्मि (द)।

सीता। जीविदह्मि (ध)।

लक्ष्मणः। आर्य्ये! एष निर्लज्जो लक्ष्मणः प्रणमति (न)।

(त) जानात्यार्य्यपुत्रः सीतादुःखं प्रमार्ष्टुम्।

(ध) जीवितास्मि।

(त) सीतेति। प्रमार्ष्टुं दूरीकर्त्तुम्। अतएव मन्ये पुनः परिग्रहे कामपि आपत्तिं न करिष्यतीति भावः।

(थ) राम इति। भगवती अरुन्धती यथा आदिशति तथैव करोमीति वाक्यशेषः। गुरुनियोगस्यानतिक्रमणीयत्वात् पुनरपि सीतां परिग्रहीष्याम्येवेति भावः।

(द) लक्ष्मण इति। कृतार्थोऽस्मि, सीतारामयोः पुनर्मेलनेन सर्व्वेषामेव परमनिर्वृतिलाभादिति भावः।

(ध) सीतेति। जीवितास्मि, प्राणानामिव प्रियतमस्य विरहेण मृतप्राया खल्वितः पूर्व्वमासम्, इदानीं पुनर्लाभेन पुनर्जीवितेवास्मीति भावः। अत्र प्रतीयमानोत्प्रेक्षा।

(न) लक्ष्मण इति। निर्लज्जो लज्जाहीनः। प्रणमति भवतीमिति शेषः। यः खलु निर्द्दयदारुणप्रकृतिर्भवतीमतिभयानके निर्जनारण्ये विहाय प्रस्थितः, स पुनर्यदिदानीं निःसङ्कोचं मुखं प्रदर्शयन् प्रणामायागन्तुमर्हति तस्य लज्जालेशोऽपि नास्तीति मन्तव्यमिति भावः।

---

(त) সীতা। (স্বগত) আর্য্যপুত্র সীতার দুঃখ মার্জ্জন করিতে জানেন।

(থ) রাম। ভগবতী যেমন আদেশ করেন।

(দ) লক্ষ্মণ। কৃতার্থ হইলাম।

(ধ) সীতা। বাঁচিলাম।

सीता। वच्छ! ईदिसो वि चिरं जीव [प]।

अरु। भगवन् वाल्मीके! उपनीयेतामिमौ सीतागर्भसम्भूतौ रामभद्रस्य पुत्रकौ कुशलवौ। [इति निष्क्रान्ता] [फ]।

(प) वत्स! ईदृशोऽपि चिरं जीव।

(प) सीतेति। ईदृशोऽति एवम्भूतो निर्लज्जः सन्नपि चिरं जीव। मम निर्वासने तव स्वारसिकेच्छाभावात् आर्य्यपुत्रादेशेनैव तद्विधानात् तव तव न कापि निर्दयता न वा त्वां प्रति किमपि मम मनोमालिन्यमस्ति, प्रत्युत अग्रजादेशेन दुष्करस्यापि कर्म्मणः करणात् योग्यधर्म्मानुसरणेन यथापूर्वं सन्तोष एवेति भावः।

(फ) अरु इति। इमौ अन्तराले दृश्यमानौ। उपनीयेताम् उपस्थाप्येतां सीतारामयोः समीप इति शेषः।

अत्रैव गर्भाङ्कसमाप्तिरित्युन्नेयम्। तथा चात्र "प्रविश्य सूत्रधारः" इत्यादिः "विश्वम्भरात्मजा देवी"तिश्लोकान्ता प्रस्तावना, "साहं दाणिं मन्दभाइणी भाईरहीए अत्ताणं णिक्खिवेमि" इति वीजं प्रथममल्पत्वेऽपि परं बाहुल्यात् पृथिवीगङ्गयोरभिप्रायानुसारेण अरुन्धत्या करिष्यमाणसीतारामसम्मेलनरूपफलस्य प्राथमिकहेतुत्वाच्च। तदेव च सीतारामयोः सम्मेलनं फलम्। पृथिवीगङ्गारुन्धतीनां गर्भाङ्कपात्राणां क्रमशो निष्क्रमणेन सामान्याङ्कलक्षणस्यापि सङ्गतिः, अरुन्धत्या निष्क्रमणेन अंशविशेषस्य समाप्तिसूचनञ्चेति। सीताकुशलवानान्तु गर्भाङ्कमूलसप्तमाङ्कोभयपात्रत्वमङ्गीकृतं कविनेति। पृथिवीगङ्गयोः सम्मेलनात् पूर्वं सीतायाः, अरुन्धत्याश्च उक्तिप्रत्युक्तय एव गर्भाङ्कशरीरम्, रामलक्ष्मणादीनामुक्तिप्रत्युक्तयस्तु अभिनयदर्शनवेलायामिदानीन्तनसभ्यानामालोचनेन न गर्भाङ्कशरीरं किन्तु मूलसप्तमाङ्कशरीरमेवेति बोध्यम।

अत्र गर्भाङ्कलक्षणं यथा साहित्यदर्पणे—

"अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान्।
अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि॥"

(न) लक्ष्मণ। আর্য্যে! নির্লজ্জ লক্ষ্মণ এই প্রণাম করিতেছে

(প) সীতা। বৎস! তুমি এইরূপ হইয়াও চিরজীবী হও।

रामलक्ष्मणौ। दिष्ट्या [१] तथैव तत् [ब]।

सीता। [सबाष्पाकूतम्] कहिं ते पुत्तआ मे [भ]।

[ततः प्रविशति वाल्मीकिः कुशलवौ च।]

वाल्मीकिः। वत्सौ कुशलवौ! एष रघुपतिः पिता युवयोः, लक्ष्मणः कनिष्ठतातः, सीतादेवी जननी, एष राजर्षिर्जनको मातामहः [म]।

---

(भ) कस्मिन् तौ पुत्रकौ मे।

---

लक्षणं आमुखं प्रस्तावना। बीजलक्षणमपि तत्रैव—

"अल्पमात्रं समुद्दिष्टं बहुधा यत् विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥"

(ब) रामेति। दिष्ट्या सौभाग्येन, तत् कुशलवयोरितिवृत्तं तथैव यथा चिन्तितं तद्रूपमेव, कुशलवौ सीतासन्तानावित्यस्माकमनुमानं सत्यमेवेत्यर्थः।

(भ) सीतेति। वाष्पेण आनन्दाश्रुणा आकूतेन पुत्रदर्शनाभिप्रायेण च सह वर्त्तमानमिति सबाष्पाकूतम्। तौ स्तन्यत्यागं यावत् मया पोषितौ।

(म) वाल्मीकिरिति। जनकोऽपि वाल्मीकेराह्वानादभिनयदर्शनार्थमेव तत्रागत इति बोध्यम्।

---

(फ) অরুন্ধতী। ভগবন্! বাল্মীকি! সীতার গর্ভসম্ভূত রামভদ্রের পুত্র এই কুশ ও লবকে আনয়ন করুন। (এই বলিয়া চলিয়া গেলেন।)

(ব) রাম ও লক্ষ্মণ। ভাগ্যবশতঃ তাহা সেইরূপই হইল।

(ভ) সীতা। (অশ্রু ও অভিপ্রায়ের সহিত) আমার সেই পুত্র দুইটি কোথায়?

(তদনন্তর বাল্মীকি, কুশ ও লবের প্রবেশ।)

(१) दृष्टेति पाठान्तरम्।

सीता। [सहर्षकरुणाद्भुतं विलोक्य] कधं तादो [य]।

कुशलवौ। हा तात! हा अम्ब! हा मातामह! [र]?

रामः। [सहर्षमालिङ्गय] ननु वत्सौ! पुण्यैः प्राप्तौ स्थः [ल]।

सीता। एहि जाद कुस! एहि जाद लव! चिरस्स परिस्सजध पुणो जम्मन्तरगदं जणणिं [व]।

---

(य) कथं तातः।

(व) एहि जात कुश! एहि जात लव! चिरस्य परिष्वजेतां पुनर्जन्मान्तरगतां जननीम्।

---

(य) सीतेति। जनको द्रष्टव्य इति हर्षः, निर्वासितकालीनदुःखस्मरणेन करुणा शोकः, अचिन्तितपूर्वः पितुः साक्षात्कार इत्यद्भुतमाश्चर्यं तैः सह वर्त्तमानमिति तथोक्तम्। कथमिति हर्षद्योतकमव्ययम्।

(र) कुशेति। सविषादसम्बोधने हाशब्दः। इयन्ति वयांसि यावदावां सतोऽपि तातादीन् न जानीव इत्यतो विषाद इति प्रत्येतव्यम्।

(ल) राम इति। सम्बोधने ननुशब्दः। पुण्यैः प्राक्तनधर्म्मैः प्राप्तौ स्थः युवामिति शेषः। सञ्चितपुण्यानि विना युवयोः प्राप्तावपर उपायो नास्माकमासीदिति भावः।

(व) सीतेति। चिरस्य परिष्वजेतां बहून् कालान् व्याप्य आलिङ्गतं जन्मान्तरगतां पातालात् पुनर्भूतलप्राप्तत्वेन अन्यत् जन्म प्राप्तामित्यर्थः।

(म) বাল্মীকি। বৎস কুশ! লব! এই রঘুনাথ তোমাদের পিতা, লক্ষ্মণ কনিষ্ঠ তাত, সীতাদেবী জননী এবং এই রাজর্ষি জনক তোমাদের মাতামহ।

(য) সীতা। ( আনন্দ, শোক ও বিস্ময়ের সহিত দেখিয়া ) পিতা!

(র) কুশ ও লব। হা পিতঃ! হা মাতঃ! হা মাতামহ!

(ল) রাম। ( আনন্দের সহিত আলিঙ্গন করিয়া ) বৎসদ্বয়! পুণ্য-বশতই তোমাদিগকে পাইলাম।

कुमारौ। [तथा कृत्वा] धन्यौ स्वः [श]।

सीता। भअवं! प्पणमामि [ष]।

वाल्मीकिः। वत्से! ईदृश्येव चिरं भूयाः [स]।

सीता। अम्महे! तादो, कुलगुरू, अज्जाजणो, सभत्तुआ अज्जा सन्तादेई, सलक्खणा सुप्पसण्णा अज्जउत्तचलणा, समं कुसलवावि दीसन्ति, ता णिव्भरम्हि आणन्देण [ह]।

[नेपथ्ये कलकलः।]

(ष) भगवन्! प्रणमामि।

(ह) अम्महे! (आश्चर्य्यम्) तातः, कुलगुरुः, आर्य्याजनः, सभर्त्तृका आर्य्या शान्तादेवी, सलक्ष्मणाः सुप्रसन्ना आर्य्यपुत्रचरणाः, समं कुशलवावपि दृश्यन्ते तन्निर्भरास्मि आनन्देन।

---

(श) कुमाराविति। तथा कृत्वा आलिङ्ग्येत्यर्थः। धन्यौ स्वः आवाम्। जनन्या लाभादिति भावः।

(ष) सीतेति। प्रणमामि भवन्तमिति शेषः।

(स) वाल्मीकिरिति। ईदृश्येव पतिपुत्रसङ्गतैव चिरं भूयाः, न पुनः कदापि पूर्ववत् पतिपुत्रविरहिणी भूया इत्येवशब्दार्थः।

(ह) सीतेति। अम्महे इत्येकमेव विस्मयसूचकमव्ययं शौरसेन्यादिभाषायाम्। तातो जनकः, कुलगुरुर्वशिष्ठः, आर्य्याजनः कौशल्यादिश्वश्रूजनः, भर्त्रा ऋष्यशृङ्गेण सह वर्त्तमाना सभर्त्तृका। सलक्ष्मणाः लक्ष्मणेन सहिताः सुप्रसन्नाः रोषकालुष्यरहिताः

(ব) সীতা। আয় বৎস কুশ! আয় বৎস লব! জন্মান্তর হইতে আগতার ন্যায় জননীকে দীর্ঘকাল যাবৎ আলিঙ্গন কর।

(শ) কুশ ও লব। (তাহাই করিয়া) আমরা ধন্য হইলাম।

(ষ) সীতা। ভগবন্! প্রণাম করিতেছি।

(স) বাল্মীকি। বৎসে! চিরকাল এই রকমই থাক।

वाल्मीकिः। [उत्थायावलोक्य च] उपहतलवणो [१] मथुरेश्वरः प्राप्तः [च]।

लक्ष्मणः। सानुषङ्गाणि कल्याणानि [क]।

---

सन्तोषसौम्या इति यावत् आर्य्यपुत्रचरणाः पत्युर्महागुरुत्वेन चरणशब्दोपन्यासः, अन्ये आन्तु महागुरुत्वाभावात् न तथेति बोध्यम्। अपिशब्दः समुच्चये कुशलवौ चेत्यर्थः, समं युगपत् एते दृश्यन्ते, तस्मात् आनन्देन निर्भरा परिपूर्णास्मि।

(च) वाल्मीकिरिति। उपहतो निहतो लवणो मधुदैत्यपुत्रो लवणाख्योऽसुरो येन स तथोक्तः, मथुरेश्वरः शत्रुघ्नः प्राप्त उपस्थितः। तत्सेनाया अयं कलकल इति भावः लवणराक्षसवधवृत्तान्तो वाल्मीकिना पूर्वं लोकपरम्परया तपःप्रभावेण वाऽवगत इति मन्तव्यम्।

यमुनातीरवासिनां मुनीनां प्रार्थनया रामेण प्रेषितः शत्रुघ्नः कुम्भीनसीगर्भजातं मधुदैत्यपुत्रं लवणराक्षसं निहत्य रामस्यैवानुज्ञया मधुदैत्याधिकृतमथुराराज्ये राजत्वमकार्षीदिति रामायणवार्त्तानुसन्धेया।

(क) लक्ष्मण इति। अनुषङ्गेण अनुचरेण सजातीयेतरेणेत्यर्थः सह वर्त्तमानानि सानुषङ्गाणि, कल्याणानि मङ्गलानि, कल्याणानि कल्याणान्तरैः सह उपतिष्ठन्तीत्यर्थः। यदत्र सर्वेषां बन्धूनां सम्मिलनकाले वत्सः शत्रुघ्नोऽपि प्राप्तः अतएव "सम्पत् सम्पदमनुबध्नाति विपच्च विपद"मिति लोकवादो यथार्थ एवेति भावः।

(ङ) সীতা। ওমা! পিতা, কুলগুরু, শ্বশ্রূগণ, ভর্ত্তার সহিত আর্য্যা শান্তাদেবী লক্ষ্মণের সহিত সুপ্রসন্ন আর্য্যপুত্র এবং কুশ ও লব; ইঁহাদিগকে একদাই দেখিতেছি; তা আনন্দে পরিপূর্ণ হইয়াছি।

( নেপথ্যে কোলাহল।)

(চ) বাল্মীকি। ( উঠিয়া দেখিয়া ) লবণাসুরকে বধ করিয়া, মথুরাধিপতি শত্রুঘ্ন উপস্থিত হইয়াছেন।

(ক) লক্ষ্মণ। মঙ্গল অনুষঙ্গের ( মঙ্গলান্তরের ) সহিতই উপস্থিত হয়।

(१) उत्खातलवण इति क्वापि पाठः।

राम:। सर्वमिदमनुभवन्नपि न प्रत्येमि, यद्वा प्रकृतिरियमभ्युदयानाम् [ख]।

वाल्मीकि:। रामभद्र! उच्यताम्, किन्ते भूय: प्रियमुपकरोमि [ग]।

राम:। अत:परमपि प्रियमस्ति। तथापीदमस्तु—(घ)

(ख) राम इति। सर्वमिदं सम्मेलनसुखमित्यर्थ: अनुभवन्नपि प्रत्यक्षीकुर्वन्नपि न प्रत्येमि न विश्वसिमि। नितान्तदुर्भाग्यस्य मे ईदृक् सुखसागरोद्वेलनस्य प्रायेणासम्भावनीयत्वादिति भाव:। ननु निर्द्दोषप्रत्यक्षत्वेऽपि कथमविश्वास इत्याह यद्वेति। यद्वा अथवा अभ्युदयानां सुखसम्पत्तीनाम् इयं प्रकृति: स्वभाव:, यत् यौगपद्येन सर्वा: समुद्भूय आविर्भवन्तीति वाक्यशेष:। अत ईदृक् सुखपरम्परा सत्यं सम्भवत्यपीति भाव:।

(ग) वाल्मीकिरिति। भूय: पुन: ते तव किं प्रियं प्रीतिकरं कार्य्यम् उपकरोमि विदधामि तदुच्यतामित्यर्थ:। "भूय: (व्य) पुनरर्थे"मिति शब्दकल्पद्रुम:।

(घ) राम इति। अपिशब्द: प्रश्ने। अत: परं सपुत्रपत्नीलाभादधिकम् अपि किम् प्रियं प्रीतिकरं वस्तु अस्ति, अपि तु नेत्यर्थ:। स च भवता कृत इति भाव:। तथापि पुत्रसहितपत्नीलाभादधिकप्रियासत्त्वेऽपि इदं वक्ष्यमाणम् अस्तु भवतु भवदनुग्रहादिति शेष:।

अथवा अत: परमपि पुत्रसमेतभार्य्यालाभादधिकमपि प्रियं वस्तु अस्ति। तच्च कैवल्यम् अविनश्वरत्वात् निरवच्छिन्नसुखत्वाच्चेति भाव: तथापि अविनश्वरनिरवच्छिन्नसुखलक्षणकैवल्ये सत्यपि इदं वक्ष्यमाणम् अस्तु। यश:सुखादिभोगलालसाया अनिवृत्तत्वात् इदानीमेव न मया मुक्ति: प्रार्थ्यते, किन्तु सुखान्तरमिति भाव:।

(খ) রাম। এই সকল প্রত্যক্ষ করতও বিশ্বাস করিতেছি না; অথবা অভ্যুদয়ের এই স্বভাব।

(গ) বাল্মীকি। রামভদ্র! বল, আর তোমার প্রীতিকর কি কার্য্য করিব?

(ঘ) রাম। ইহার পরও প্রিয় বস্তু আছে বটে; তথাপি ইহা হউক—

पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा (१)
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।
तामेतां (२) परिभावयन्त्वभिनयैर्विन्यस्तरूपां (३) बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥२०॥

तत्प्रार्थनीयमाह पाप्मभ्य इति। माता जननीव गङ्गा भागीरथीव च जगतो भुवनस्य मङ्गल्या नानानीतिधर्म्मविषयनिबन्धनात् शुभजनिका, मनोहरा शोभना च कौतूहलोद्दीपकविविधोपाख्यानपूर्णत्वात् हृदयाह्लादकारिणीत्यर्थः सा प्रसिद्धा इयं कथा भवदीयरामायणप्रबन्धः पाप्मभ्यः सञ्चितपापेभ्यः पुनातु मुक्तान् करोतु तत्तत् पापविनाशेन जनान् पवित्रीकरोतु इत्यर्थः, तथा श्रेयांसि लोकानां मङ्गलानि च वर्द्धयतु बहुलीकरोतु। प्रजानां पापहीनत्वे मङ्गलबाहुल्ये च राज्ञोऽपि तत्फलभागित्वादिदानीं भवदन्तिके ममेयमेव प्रार्थनेति भावः। नन्वनालोचिता सा कथा कथं पुनीयात् कथं वा श्रेयांसि वर्द्धयेदित्याह तामेतामिति। बुधा विद्वांसः शब्दब्रह्मविदः सम्पूर्णशब्दतत्त्वज्ञस्येत्यर्थः कथमन्यथा ईदृशी शब्दरचनाचातुरी स्यादिति भावः, एतेन पदमाधुर्य्यदर्शनेनापि तेषां सुमहानानन्दो भवितेति व्यज्यते। परिणता परिपक्वा उन्नतेश्चरमसीमामारूढेत्यर्थः प्रज्ञा बुद्धिर्यस्य तस्य परिणतप्रज्ञस्य कथमन्यथा ईदृशं भावमाधुर्य्यमुपपद्यत इति भावः, भावमाधुर्य्येणापि बुधा मुग्धा युरिति व्यज्यते; कवेर्वाल्मीकेर्भवतः तां प्रसिद्धाम् एताम् इदानीमेव कियदंशे समभिनीताम्, इमाम् अस्मदादिभिरपि प्रत्यक्षीकृतां वाणीं रामायणात्मकमहावाक्यं विन्यस्तम् अर्पितं रूपम् अभिनयोपयोगिनी आकृतिर्यस्यां तां विन्यस्तरूपां सतीं स्वयं स्वयमेव नाटकाद्याकारतया परिणमय्येत्यर्थः अभिनयैः रघुवंश्यचरितरामायणकथापुरुषाणामवस्थानुकरणैः परिभावयन्तु सर्वतोभावेन सम्मानयन्तु। इदमेव रामायणमवलम्ब्य नाटकादिकं विरचय्य तदभिनयेनास्य गौरवं वर्द्धयन्त्विति सरलार्थः। तेन च भवतः कवित्वं सूर्य्यवंशस्य कीर्त्तिगौरवञ्च लोके प्रथितं सत् महात्ममानन्दं जनयेत्, इयञ्च द्वितीयप्रार्थनेति भावः।

(१) पाप्मभ्यश्च पुनाति वर्द्धयति च श्रेयांसि सेयं कथेति पाठान्तरम्।
(२) वाल्मीकेरिति क्वापि पाठः। (३) विन्यस्तरूपा इति पाठभेदः।

( इति निष्क्रान्ताः सर्वे। )

---

अत्र मङ्गल्यत्वमनोहरत्वयोरुपमानोपमेयोभयधर्म्मत्वात् पूर्णोपमालङ्कारः। तथा माता गङ्गा च पुनाति रामायणकथा तु पुनात्विति प्रक्रमवैषम्यात् "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथे"ति साहित्यदर्पणोदाहृतवत् भग्नप्रक्रमतादोषः, तेन च 'पाप्मभ्यश्च पुनाति वर्द्धयति च श्रेयांसि येयं कथे"ति पाठान्तरमेव साधीयः, किन्तु बहुषु पुस्तकेष्वदर्शनात् तन्न सन्निवेशितमिति ज्ञेयम्। किञ्च एताम् इमामिति प्रायेणैकार्थयोः पदयोरुपन्यासात् कथितपदतादोषः, स च 'वाणीं चिर'मिति पाठेन समाधेयः।

अत्रायं वस्तुध्वनिः, बुधाः पण्डिताः शब्दब्रह्मविदः परिणतप्रज्ञस्य विन्यस्तरूपां नाटकाकारेण परिणमितां कवेर्भवभूतेः वाणीम् उत्तररामचरितलक्षणनाटकात्मकमहावाक्यम् अभिनयैः परिभावयन्तु सर्वतोभावेन सम्मानयन्त्विति।

परिभावयन्त्विति परिशब्दः सर्वतोभावार्थे "परि (अव्य) सर्वतोभावः" इति शब्दकल्पद्रुमः। शब्द एव ब्रह्म तद्वेत्तीति शब्दब्रह्मवित् तस्य। शब्दस्य ब्रह्मत्वमाह श्रुतिः— "चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासः त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश" इति।

अभिनयलक्षणमुक्तं साहित्यदर्पणे—

"भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा॥"

शार्दूलविक्रीडितं वृत्तम्॥२०॥

---

মাতার ন্যায় এবং গঙ্গার ন্যায় জগতের মঙ্গলজনক অথচ মনোহর এই প্রসিদ্ধ উপাখ্যান পাপ হইতে পবিত্র করুক এবং মঙ্গল বৃদ্ধি করুক। আর পণ্ডিতগণ শব্দব্রহ্মজ্ঞ এবং পরিপক্ক বুদ্ধি কবি বাল্মীকির ( ভবভূতির ) অভিনয়োপযোগী এই প্রসিদ্ধ বাক্যাবলীকে অভিনয়দ্বারা সম্মানিত করুন॥২০॥

( এই বলিয়া সকলে চলিয়া গেলেন।)

# इति सम्मेलनं नाम सप्तमोऽङ्कः (ङ) ।

समाप्तमिदं महाकविभवभूतिविरचितमुत्तररामचरितं

नाम नाटकम् ॥०॥

---

(ङ) इतीति । सम्मेलनं नाम सम्मेलनमिति नाम्ना प्रसिद्धः । सप्तमोऽङ्कः समाप्त इति शेषः ।

जानकीविक्रमं नाम नाटकं वीररौद्रवत् ।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम् ।
नानाबन्धं महाकाव्यं रुक्मिणीहरणाभिधम् ॥
स्मृतिचिन्तामणिं नाम कृत्वा च स्मृतिसंग्रहम् ।
निर्म्मिमाणो गद्यकाव्यमपूर्व्वं सरलाह्वयम् ॥
कोटालिपाड़नगरीनिग्रियास्ववासात्
सत्काश्यपः पुरि नकीपुर एत्य तिष्ठन् ।
वेदाग्निनागविधुमानशकाब्दपौष्यां
श्रीमान् समापयदिमां हरिदासशर्म्मा ॥
दोषान्वितामपि रतामपरप्रकाशे
टीकामिमां गुणिजनो प्र ुवमाद्रियेत ।
गङ्गाधरो गुणसमुच्चयवान् गुणज्ञो
दोषाकरस्य हि कलां शिरसैव धत्ते ॥

इति गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मज-महामहोपाध्याय-महाकवि-
भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां
मुत्तररामचरितटीकायां सर्व्वार्थबोधिनीसमाख्यायां
सप्तमाङ्कविवरणं समाप्तम् ॥०॥

(ঙ) সম্মেলননামে সপ্তম অঙ্ক সমাপ্ত ॥০॥

---